श्रीकपिलमहर्षिप्रणीतम्

# साङ्ख्यदर्शनम्

श्रीधरविरचितसाङ्ख्यदीपिकाख्यवृत्तिसहितम्

तथा

श्रीमदीश्वरकृष्णविरचिता साङ्ख्यकारिका

भावप्रकाशसहिता




ORIENTAL RESEARCH INSTITUTE MYSORE
1982

UNIVERSITY OF MYSORE
*Oriental Research Institute Series No. 134*
मैसूरु विश्वविद्यानिलय-
प्राच्यविद्यासंशोधनालय ग्रन्थमाला-१३४

# SANKHYADARSHANAM
## WITH SRIDHAR'S SANKHYADEEPIKA VRITTY
AND
## ISHWARAKRISHNA'S SANKHYAKARIKA
WITH BHAVAPRAKASHA

श्रीकपिलमहर्षिप्रणीतम्

# साङ्ख्यदर्शनम्

श्रीधरविरचितसाङ्ख्यदीपिकावृत्तिसहितम्

तथा

श्रीमदीश्वरकृष्णविरचिता साङ्ख्यकारिका
भावप्रकाशसहिता




ORIENTAL RESEARCH INSTITUTE, MYSORE
प्राच्यविद्यासंशोधनालयः मैसूरु
1982

UNIVERSITY OF MYSORE
ORIENTAL RESEARCH INSTITUTE SERIES-No. 134
प्राच्यविद्यासंशोधनालयग्रन्थमालाङ्कः-१३४

# SANKHYADARSHANAM

# साङ्ख्यदर्शनम

*Critically Edited by*
N. S. VENKATANATHACHARYA
Nyaya Vyakarna Sahithyalankara Vidwan
Senior Research Assistant
Oriental Research Institute, Mysore

सम्पादकः
एन्. एस्. वेङ्कटनाथाचार्यः
न्याय व्याकरण साहित्यालङ्कार विद्वान्
सीनियर् रिसर्च् असिस्टेण्ट्
प्राच्यविद्यासंशोधनालयः मैसूरु

***ORIENTAL RESEARCH INSTITUTE***
**University of Mysore, Mysore**
**1982**

# अनुक्रमणिका





## PREFACE

It gives me great pleasure to present to the public the **Sāṅkhya Dīpikā** (Sāṅkhya sūtravṛtti) of Śrīdhara edited by **Vidvan N. S. Venkatanathacharya.**

Sāṅkhya is one of the oldest systems of Indian Philosophy. Sage Kapila, who is believed to be an incarnation of Viṣṇu[1] by some, composed the original sūtras of this system. They should be quite ancient because even the *Brahmasūtras* of Vyāsa criticise the tenets of Sāṅkhya. The *Bhagavadgītā* expounds many basic concepts of Sāṅkhya and discusses whether Sānkhya and Yoga are mutually exclusive or inclusive. Finally it is said in the Gita that these two are but two aspects of the same system.

सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।
एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥

It can be said that the Sāṅkhya is the theoretical and Yoga is the practical aspect of the same school. However it should not be forgotten that there are some differences of opinion between these two regarding' *I'śvara*. That is why these schools are also called Nirīśvarasāṅkhya and Seśvarasāṅkhya respectively.

*The name of the system* :

The word 'Sāṅkhya' is evidently derived from saṅkhyā, but the meaning of 'saṅkhyā' is not unequivocal. It could mean number and then *Sāṅkhya* would mean a school which revels in explicating its tenets by enumeration. But this explanation is not acceptable because almost all schools of Indian Philosophy offer analytical enumeration of the principles of cosmos.

It may be pointed out here that the word 'saṅkhyā' means philosophical reflection based on the discriminatory knowledge of the right and the wrong, the eternal and the transitory, the spiritual and the material.

---

1. इदं शास्त्रं कृतं येन तं विष्णुं कपिलं नुमः
Sāṅkhyadīpikā concluding śloka.

The following sentences are worthy of note in this connection.

(i) दोषाणां च गुणानां च प्रमाणं प्रविभागतः ।
कंचिदर्थमभिप्रेत्य स संख्येत्युपधार्यताम् ॥ (Mahābhārata )

(ii) शुद्धात्मतत्त्वविज्ञानं सांख्यमित्यभिधीयते ॥
(Viṣṇusahasranāmabhāṣya by Śaṅkara.)

The Sāṅkhya system paid the highest regard to the *prakṛti-puruṣaviveka* (clear perception of the difference of Puruṣa (soul) and prakṛti (nature) and thus derived its name.

*History of the School* : Many old texts assert that the original aphorisms of the Sāṅkhya School were formulated by Kapila and hence we may assume that he was an historical person. But there is much controversy regarding the sutras now available and ascribed to Kapila. Dr. S. Radhakrishnan is of the opinion that there is no evidence to show that Kapila composed these sūtras[1]. Baladeva Upādhyaya[2] believes these sutras to be from Kapila himself. Another short work by name 'Tattvasamāsa is also ascribed to Kapila. Āsuri and Pañcaśikha are known to be the disciples of Kapila.

Iśvarakṛṣṇa is the most important author of this school. His '*Sāṅkhyakārikā*' (also called *Sāṅkhyasaptati*) is the most important work. This, according to Dr. S. Radhakrishnan, is 'the earliest available as well as the most popular text book of the school.' In seventy stanzas, this work sums up all the principles and teachings of this system. Most later authors. including Śaṅkara quote the Kārikās of Iśvarakṛṣṇa and not the sūtras. Dr. S Radhakrishnan thinks this might belong to the third century A.D. while Baladeva Upadhyaya firmly states this can not be later than the first century A.D. on the basis of a quotation in a Jaina work called '*Anuyogadvārasūtra*'. There are many commentaries on Sāṅkhyakārikā, the most important being-(1) Māṭhara Vṛtti, (2) Gauḍapādabhāṣya, (3) Yuktidīpikā, (4) Jayamaṅgalā and finally (5) the Tattva Kaumudī by *Vācaspatimiśra*.

---

1. History of Indian Philosophy p. 254
2. Bhāratiyadarśana. Kannada translation. p. 279 pub. by Prasaranga, University of Mysore.

Vijñānabhikṣu seems to be the last influential writer of this system. He was undoubtedly a great scholar having mastery on three śāstras viz., Sāṅkhya, Yoga and Vedānta. He lived in the first half of the sixteenth century A.D. His contribution to Sāṅkhya literature is the famous *Sānkhyapravacana Bhāsya* on the Sāṅkhya sūtras.

*Bhāvagaṇeśa* was a disciple of Vijñānabhikṣu and wrote a commentary called *Tattvayāthrthyadīpana*' on the *Tattvasaṅgraha*. **Śrīdhara**, author of the commentary '**Sāṅkhyadipika**' now being published, was the son of Bhāvagaṇeśa.

*Sankhyadīpikā* : The present work is a commentary on the Sāṅkhyasūtras now available The author **Śrīdhara** does not claim much originality in his outlook. He only tries to summarise the views of the Sāṅkhyapravacanabhāṣya of Vijñānābhikṣu as stated in his introductory verse—

विज्ञानाचार्यरचितसांख्यभाष्यानुसारतः ।
गणेशतनयः कुर्वे श्रीधरः सांख्यदीपिकाम् ॥

This commentary (Vṛtti as colophons call it) is lucid, brief and faithful to the interpretations given by Vijñānabhiṣku. It covers all the six chapters of the Śāstra and can be relied upon as a guide to the teachings of this system.

The learned editor **Vidvan N. S. Venkatanathacharya, Senior Research Assistant, Oriental Research Institute,** Mysore ; has done commendable work in preparing this edition. Two manuscripts of this work in our Institute have been utilized by him for this edition. He has also written a Ṭippaṇi to help the new entrants to the field of Sāṅkhya. His own short commentary '*Bhāvaprakāsikā* on the Sāṅkhyakārikās is appended to the present edition.. Nine indices of the subjects treated, nyāyas quoted, sūtras, Kārikās, special words etc have been given at the end. I have no doubt that these indices will prove very useful to the scholars. The Sanskrit introduction is also very informative and testifies to the depth of scholarship of the editor Sri **N. S. Venkatanathacharya,** on the subject. The Mysore Oriental Research Institute Series will present many more original works on various subjects in the near future.

The constant help and encouragement being extended by our beloved Vice-Chancellor Prof. K. S. Hegde for this publication of the classics of Sanskrit literature is the main cause of our progress in this field. I thank him and the other benign officers, mainly Sri N. R. Venkatesh, Registrar. University of Mysore for their kind help. The co-operation of Sri H. Narasanna, Director, Mysore University Printing Press and his associates also deserves our gratitude.

I hope this work will receive a warm welcome from the scholars interested in Sanskrit Literature in general and Sāṅkhya Philosophy in particular.

H. P. Malledevaru
*Director*
ORIENTAL RESEARCH INSTITUTE
MYSORE

॥ श्रीः ॥

॥ श्री सद्गुरवे नमः ॥

# साङ्ख्यदर्शन भूमिका

यं विनिद्राः जितश्वासाः
संतुष्टाः संयतेन्द्रियाः ।
ज्योतिः पश्यन्ति युञ्जानाः
तस्मै योगात्मने नमः ॥ [1]

त्रयी साङ्ख्यं योगः पशुपतिमतं वैष्णवमिति
प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च ।
रुचीनां वैचित्र्यात् ऋजुकुटिलनानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥ [2]

## [ चतुर्व्यूहज्ञानस्यैव सर्वशास्त्रसारत्वम् ]

लोकेऽस्मिन् अतिचिरन्तनादेव कालात् तत्तद्देशकालाधीनविज्ञानविभवाद्यनुगुणं प्रत्यहं प्रतिक्षणं च प्रत्यग्राणां अनन्तरूपाणामाशानां परिपूरकेष्विव लौकिकसुखसम्पदुपकरणेषु वैविध्येन वैचित्र्येण च प्रवर्धमानेषु, तथाविधनानाविधासेचनकविषयजालबलवदाकर्षणेन तदास्वादनलोलुपानि उत्कण्ठितानि च मानवस्वान्तानि यदा स्वस्वकर्मानुगुणैः तदधिगमपरिपन्थिभिः आधिव्याध्यादिभिः अन्यैश्च निमित्तैः असकृत् भग्नमुखानि, मरुमरीचिकादशापन्नाभिलषिततया सुखतुष्टिशान्तिविहीनानि चिन्तादुःखादिभूयिष्ठानि च भूत्वा अस्वस्थान्येव भवेयुः, तदा क्लिष्टजीवना इमे मानवाः कदाचित् कालादृष्टादिरूपितेन प्रकृतिचालनेनोद्बुद्धाः सन्तः सत्यमेवात्मनो भवरोगपीडितान् परिजानन्तः, यथा रुग्णाः निरामयं जीवितुकामाः स्वकीयं रोगं, तन्निदानम्, आरोग्यम, भैषज्यं च सप्रमाणं परिज्ञातुं प्रयतन्ते, तथैव स्वानुभूयमानामिमां

---

[1] महाभारते ।   [2] पुष्पदन्तस्य महिम्नःस्तवे

असह्यां दुर्दशां, तन्निमित्तं तद्धानस्वरूपं हानोपायं चेति चतुर्व्यूहं यथाविधि परिज्ञाय, प्राप्तदुःखहेतुहानेन सुखहेतुपरिग्रहेण च सुखशान्तिमयमेव स्वकीयं विधिविहितमायुर्नेतुं नूनं प्रयतेरन्, सद्गुरूपदेशेन मार्गपरिज्ञाने सति प्रभवेयुश्चेति–दृढतरनिश्चितोऽयं परम्परागतः संसारवृत्तान्तः ॥

## [ चतुर्व्यूहस्यैव ज्ञेयसारत्वे साङ्ख्यबौद्धयोः साम्यम् ]

त एवेमे जिज्ञासिताः चत्वारो व्यूहाः अस्य साङ्ख्यदर्शनस्यापि प्रधानतया प्रतिपाद्याः। यानिमानेव चतुरो व्यूहान् बौद्धा अपि— "दुःख–तद्धेतु–तन्निरोध–निरोधमार्गाः इति चत्वार्यार्यसत्यानि" इति परिज्ञातव्येषु प्रधान–भूतानाहुः। दर्शनस्यास्य साङ्ख्याचार्यैः कृतः उपोद्घातश्चैतन्मुख एव दृश्यते। यथा—

"दुःखत्रयाभिघातात्
जिज्ञासा तदपघातके हेतौ"[1]

इति। तत्र दुःखत्रयपदेन- साक्षात् परम्परया वा ज्ञातृनिमित्तमाध्यात्मिकम्, ज्ञाननिमित्तमाधिदैविकम्, ज्ञेयनिमित्तमाधिभौतिकं च गृह्यते। तदपघातक-हेतुरेव चतुर्व्यूहज्ञानमिति ॥

## चार्वाकदर्शनप्रवर्तनहेतुः

सहजतया प्राप्तामिमामनिवार्यां त्रिविधामपि दुःखसन्ततिं पराचक्षाणाः इमे मानवाः, वैषयिकसुखदुःखयोः चक्रवत्परस्परनिमित्ततामजानानाः अपरिमितानन्तवैषयिकसुखमात्रलिप्सव एव, बहुत्र बहुधा प्रयत्यापि इष्टालाभात् तेनापि पुनःपुनः दुःख्येयुरेवेति यथानुभवं परिजानन्तः केचन कृपालवो बुद्धिमन्तः, अलभ्ये अपरिहार्ये चार्थे तदीयं सकलं भारं स्वभावशिरसि समारोप्य वा अशोचन्तः स्वस्था जीवेयुरिति समालोच्य, स्वभाववादा-परनामकं आकस्मिकतावादपर्यवसितं चार्वाकदर्शनं प्रवर्तयामासुः ॥

## दर्शनसामान्यप्रवृत्तेः कालानुगुणत्वम्

प्रवृत्तिश्चैतादृशी धीमतां प्रायशः क्रिस्तपूर्वं षष्ठसप्तमशताब्दयोरन्तराले संजाता भवेदिति दर्शनेतिहासविमर्शकानामभिप्रायः[2]। परं तु इतः पूर्वमेव तपस्यापरैः अधिगतपरमार्थैः निगमागमतत्त्वविज्ञानसम्पन्नैः

---

[1] सांख्यकारिका. 1. [2] भारतीयतत्त्वशास्त्रसङ्ग्रहः p 169

श्रद्धाशीलैः परमर्षिभिः निर्णीताः बहवः तत्तदधिकारिभेदेन मार्गभेदेन च विभिन्नाः अर्थाः अनुभवपर्यवसानाः पारम्परिकाः, क्वचित् निगमागमादिग्रन्थारूढा अप्यासन्निति ज्ञायते। अथापि प्राकृतमतिभिरनधिगम्ये तत्त्ववस्तुनि असिद्धानां, असाधनतत्पराणां स्वकीयधीपूर्वकविचारादेवार्थनिर्णयाभिलाषिणामेवाधिकतया, तदानुगुण्येनैव एतादृशविविधतर्कजालसम्बद्धदर्शनप्रवर्तनौत्सुक्यमपि अनेकेषु सहजमेव कालानुगुणं सम्पन्नमिति विमर्शकानामेषामभिप्रायोऽपि समीचीन एवेति प्रतिभाति॥

## दर्शनेषु चार्वाकस्यैवादित्वम्

केचित्तु एवमाहुः— भारतीयेषु बहोः कालात प्रागेव श्रुतिस्मृतीतिहासपुराणागमादिरूपेण साधनरूपेण च आध्यात्मिकाः प्रचाराः आसन्नेव। दर्शनरूपेण परं चार्वाकोपज्ञमेव शास्त्रं प्रवृत्तमिति। अत एव—'देवगुरुः बृहस्पतिरेव लोकायतसूत्राणि रचयामास, तेषां च चारुवाकनाम्ना कश्चन भाष्यमकरोत' इति प्रथा वर्तते। एवं आदिकाव्ये रामायणे जाबालिनाम्ना महर्षिणा चार्वाकवादः, महाभारते धर्मराजेन साकं दुर्योधनमित्रस्य चार्वाकस्य संवादः, शान्तरक्षितस्य कम्बलाश्वतरयोः चार्वाकमताचार्यत्वोक्तिः, चरके चार्वाकवादः, चार्वाकानुसारेणैव पाश्चात्यविज्ञानवाद-समतावादौ, महाभारतस्थं कण्वाश्रमवासिलोकायतवर्णनम्, दिवाकरमिश्राश्रमवासिनां चार्वाकाणां बाणेन वर्णनम्, नालन्दा–तक्षशिला–पाटलीपुत्र काशीप्रभृतिविश्वविद्यालयेषु चार्वाकदर्शनबोधनसत्ताप्रसिद्धिश्चेत्येतदादिकं सर्वमपि, कालविशेषे स्थितानि चार्वाकदर्शनस्य देश-काल-विषय-स्थान-मान-प्रचारादीनि परिज्ञापयन्तीति च विमर्शकाः[3]।

## दर्शनानामुद्देशः

एवं प्रवृत्तेषु च दर्शनेषु—वेदादिप्रामाण्याङ्गीकारेण यावद्बुद्धिबाधं तदनुगुणविचारपराः केचन लोके 'वैदिकाः' इति, 'आस्तिकाः' इति वा प्रसिद्धास्सन्तः, तदनुगुणानि दर्शनान्यपि प्रवर्तयामासुः। अपरे बहवश्च तत्प्रामाण्यानङ्गीकारेण असंस्कृताल्पसंस्कृतापरिपक्वमिश्रप्रकृतसहजादिविचित्रनिजधीगोचरीकृतविषयाकारानुगुणमेव तत्तदसाधारणतर्कबद्धविचारप्रवर्तनशीलाः, तादृशतर्कसिद्धतत्त्वनिर्णयेनैव जीवितेषु इन्द्रियाणां मनसश्च प्रशमः लभ्येतेति निर्णीय, तेनैव च प्राप्तदुःखत्रयपरिहारोऽप्यवश्यं-

[3] भारतीसंस्कृतिः p. 87

भावीति च मन्वानाः, लोके , अवैदिकाः ' 'नास्तिकाः ' इति केषाञ्चित्प्रतीतिविषयास्सन्तोऽपि अविचलितमानसाः कानिचिद्दर्शनानि प्रवर्तयामासुः ॥

## वैदिकावैदिकदर्शनार्थाः

तत्र— जडस्वभावाखिलजगच्चक्रपरिवर्तनाधीनमेवेदं जीवनं मन्वानाः चार्वाकाः, मनोविज्ञानाधीनमेव जीवनं मन्वानाः चतुर्विधाः बौद्धाः, इन्द्रियस्वरूपाधीनमेव जीवनं मन्वानाः जैनाश्चेति षड्दार्शनिका अपि अवैदिकाः इति ; एवं—वेदप्रमाणानुगुणं तत्त्वभूमिकाप्रधानाः स्वावलम्बिनः साङ्ख्याः, तत्त्वभूमिकया साकं ईश्वरावलम्बिनः पातञ्जलाः, न्यायप्राधान्येन तत्त्वनिर्णायकाः नैयायिकाः वैशेषिकाश्च; कर्मप्रधानाः मीमांसकाः, ब्रह्मप्रधानाः वेदान्तिनश्चेत्येते षड्दार्शनिकाः वैदिकाः इति च प्रसिद्धाः अभवन्निति च केवलमियं दर्शनोदयकथा ।

## दर्शनसामान्यध्येयानि

सर्वेषामप्यमीषां दार्शनिकानां साधारण्येनाभ्युपगताः अमी नवार्थाः । यथा—

(1) स्वकीयप्राचीनपुरुषवचनप्रामाण्याङ्गीकारः ।
(2) तदानुगुण्येन कर्मसु भावेषु च गुणदोषव्यवस्था ।
(3) तदनुरोधेन युक्तिभिश्च मूलपुरुषवाक्यानां तात्पर्यवर्णनम् ।
(4) क्वचिद्दुर्निरूपतावादः ।
(5) क्वचिदनादित्वाभ्युपगमः ।
(6) क्वचित स्वभाववादसमाश्रयणम् ।
(7) क्वचित् अनुभवप्रमाणीकरणम् ।
(8) सुखदुःखाभ्युपगमः ।
(9) फलतः दुःखमूलयोः अहङ्कारममकारयोस्त्यागेन प्रशान्तजीवनावश्यकत्वाभ्युपगमश्चेति ।

एतैरेवार्थैर्निमित्तैः दार्शनिका अपि यदि परस्परं रागद्वेषपरिग्रहवन्तः अशान्तजीवनाः समाजघातुका एव भवेयुरेवम्, तर्हि न ततोऽपि हास्यतरं किञ्चिल्लोके विद्येतेति तु सुदृढं ब्रूमः। यथोक्तम्— ।

" शमार्थं सर्वशास्त्राणि विहितानि मनीषिभिः ।
स एव सर्वशास्त्रज्ञः यस्य शान्तं मनस्सदा ॥ " [4]

[4] महाभारते—विदुरनीतिः

"यत् श्रुतं न विरागाय न धर्माय न शान्तये।
सुबद्धमपि शब्देन काकवाशितमेव तत्" [5]॥ इत्यादि ॥
"अशान्तस्य कुतस्सुखम्?" *
"नाशान्तमनसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥" †
इत्यादि च ॥

अत्र नीतियुता विदुरवाण्यपि एवं वर्तते–यैषामेवं रागादिहेतून् निर्दिशति—

"एकं यदि भवेत् शास्त्रं ज्ञानं निस्संशयं भवेत्।
बहुत्वादिह शास्त्राणां ज्ञानतत्त्वं सुदुर्लभम्" [6]॥
"यस्य नास्ति स्वयंप्रज्ञा केवलं तु बहुश्रुतः।
न स जानाति शास्त्रार्थं दर्वी पाकरसं यथा"[7]॥ इति ॥

## मिलितानामेव प्रमाणयुक्त्यनुभवानां प्रामाण्यम्

तथाच न केवलं तर्कयुक्त्या, न वा वेदप्रामाण्यमङ्गीकृत्य स्वसिद्धान्तानुगुणतद्व्याख्यानेन, नाप्युभयेन वा जिज्ञासिततत्त्वज्ञानपूर्वकशमादिसिद्धिः, नाप्यशान्तस्य सुखम्[8]। किन्तु—

"तत्र प्रमाणं वेदान्ताः गुरवोऽनुभवस्तथा"। [9]

इत्युक्तरीत्या प्रमाणपरिशोधनम, युक्तिसम्पन्नता, अबाधितः स्वानुभवश्चेति त्रयमपि तत्र हेतुर्भवति। तत्रापि 'विशिष्टानुभव एव प्रमाणानां राजा, इत्येव ज्ञानिनां मतम् ॥

## भौतिकाध्यात्मिकविज्ञाने

प्रचण्डविज्ञानी डा॥ऐनस्टीन् महाशयः एवमाह–यत्–परमाणुगर्भेषु अत्यन्ताद्भुता काचन प्रचण्डशक्तिस्सृष्टिसहजैवास्तीति[10]। सत्यभूतोऽयमाशयः बहिरन्तस्तत्त्वविज्ञानसम्पन्नानां भारतीयमहर्षीणामपि। विज्ञानं हि द्विविधम्-बहिर्विज्ञानमन्तर्विज्ञानं चेति। यदेव शब्दान्तरेण भौतिकविज्ञान-मध्यात्मविज्ञानमित्यप्युच्यते। अतिसूक्ष्मस्य मनसः बहिर्भूतेषु भौतिकवस्तुषु पराक्प्रसारणेन यथा भौतमिदमद्भुतं तत्त्वमधिगम्यते, तथैव सुसंस्कृतस्य रागद्वेषादिवियुक्तस्य विशुद्धस्य प्रशान्तस्य च मनसः अन्तरन्तःप्रत्यक्प्रसारणेन

---

[5] महाभारते—विदुरनीतिः
*गीता—2.66
†कठो—2.24
[6] महाभारते विदुरनीतिः
[7] महाभारते विदुरनीतिः
[8] गीता 2.66
[9] उपदेशसाहस्री
[10] भारतीयसंस्कृतिः

ततोऽप्यद्भुततमं तस्यापि मूलभूतं आध्यात्मिकं तत्त्वमप्यधिगम्यत एवेति। यदाहुः–

"कश्चिद्धीरः प्रत्यगात्मनमैक्षत्
आवृत्तचक्षुरमृतत्वमिच्छन्"॥ [11] इति॥

## अनुभवस्यैव प्रमाणमूर्धन्यत्वम्

सर्वस्मिन्नप्यस्मिन् विषये शब्दजालप्रामाण्यादर्थानुभवस्यैव मुख्यतमं प्राधान्यमिति अनुभविमूर्धन्यानां श्रीमतां शङ्करभगवत्पादानामप्युद्घोष इति तदीयैरेवैभिर्वाक्यैरवगम्यते। यथा—

"न हि प्रत्यक्षविरोधे श्रुतिप्रामाण्यम्। न हि श्रुतिशतमपि शीतोऽग्निरप्रकाशो वेति ब्रुवत प्रामाण्यमुपैति"[12]॥

"एवं नैवमिति अस्ति नास्तीति च न हि वस्तु विकल्प्यते। विकल्पनास्तु केवलं पुरुषबुद्ध्यपेक्षाः, न हि वस्तुयाथात्म्यज्ञानं पुरुषबुद्ध्यपेक्षम्, किं तर्हि वस्तुतन्त्रमेव तत्"[13]।

"शास्त्रत्वेन हि शास्त्रं न प्रमाणम्। अनुभवगम्यत्वाद्धि शास्त्रं प्रमाणम्[14]।" अनुभवावसानत्वान् ज्ञानस्य"[15]।

"शास्त्राचार्योपदेशशमदमादिसंस्कृतं मन एव आत्मदर्शने कारणम्। न हि दूरदर्शिनीं सामग्रीं विना अतिदूरवर्तमानाः ग्रहादयो नक्षत्रनीहारिकादयो वा केवलचक्षुर्विषयाः भवेयुः"[16]॥ इत्यादयः॥

## भूतैकतत्त्ववादः

अस्त्वेतत्। प्रकृते—एवं प्रवृत्तेषु दर्शनेषु, चार्वाकाः विश्वमिदमेवं वर्णयन्ति। यथा—प्रत्यक्षप्रमाणसिद्धं बाह्यं भूतचतुष्टयात्मकं अचेतनमेकमेव तत्त्वम्। देहाकारपरिणतानामेषामेव भूतानां संयोगविशेषे विलक्षणशक्तिलक्षणं आन्तरपदाभिधेयं ज्ञानचैतन्यादिपदवाच्यं किञ्चिद्वस्तु आविर्भवति। तदेव च चेतनत्वेन व्यवह्रियते। अत्र प्रमाणं देहतत्त्वविदः आयुर्वेदाचार्या अपि। यथाहुः-

---

[11] कठोपनिषत् 4-1
[12] गीता शां. भा. 18. 26
[13] ब्रह्म. शां भा. 1.1.22
[14] ब्रह्म. शां. भा. 2.3.1.
[15] ब्रह्म. शां. भा. 1.1.2.
[16] ब्रह्म. शां. भा. 1.1.2.

"देहगतः पित्तधातुरेव ज्ञानम्"[17] इति। तथा च-चतुर्विधाचेतनतत्त्वरूपैक भूतात्मकमेवेदं सर्वं जगत-इति॥

## चैतन्यैकतत्त्ववादः

अस्य चाचेतनैकतत्त्वसिद्धान्तस्य साक्षात्प्रतिपक्षतया हैरण्यगर्भसिद्धान्तः समजनि[18]। यदाहुर्हैरण्यगर्भाः-चैतन्यलक्षणं हिरण्यगर्भसंज्ञं जीवपद वाच्यं एकमेव तत्त्वम्। तदेव विश्वात्मना परिणमते। अत एव वर्षासमये मृद्विशेषाणां शलभात्मना, गोमयानां वृश्चिकात्मना, दध्यादीनां कृम्याद्यात्मन च परिणामः स्थूल एव संदृश्यते। सर्वमिदं विश्वमेव कालविशेषे चेतनात्मा नैव स्थितमपि कालेन अचेतनताव्यवहारविषयतामापद्यते इति, सर्वं चेतनमयम्, चैतनमेकमेव च तत्त्वम् इति॥

## उभयतत्त्ववादः सांख्यानाम्

एतत्समनन्तर एव काले— एवं परस्परप्रतिपक्षतया प्रवृत्तं दर्शनद्वय-मपि, एकदेशग्रहणे एव परिपूर्णतत्त्वग्राहित्वाभिमानपरिणामरूपम्, विज्ञान-शून्यविकृतमतिप्रभावं च मन्यमाना इमे साङ्ख्याः, चार्वाकाणां स्वभाववादं, हैरण्यगर्भाणां चैतनैकतत्त्ववादं च सम्यक् परिष्कुर्वन्तः, तावतैव कालेन सर्वत्र प्रचुरतामापन्नस्य सर्वशून्यतावादस्य प्रतिपक्षतया सर्वसत्यतावादं विषयानुगुणं दृढीकुर्वन्तः, तत्त्वानुगुणसृष्टिक्रमम्, तदनुसारेण चेतनाभिमति-क्रमम्, व्यवहारानुगुणस्थितिक्रमम्, लयरहस्यम्, प्रकृतिपुरुषविवेचनावश्य-कतां च प्रात्यक्षिकानुभवाविरुद्धेनानुमानेनागमेन च सोपानक्रमेण प्रतिपादयन्तः सांख्यं इदं दर्शनं प्रावर्तयन्॥

किं बहुना? तपस्यासमधिगतकालानुरोधिमतिगतिस्वरूपेण अधिष्ठित-मूलचित्ततत्त्वेन भगवता कपिलेनैव शिष्यपरम्पराभिः प्रवर्तितमिदं साङ्ख्यमिति पञ्चशिखाचार्याः प्राहुः। यथा—

"आदिविद्वान कपिलः निर्माणचित्तमधिष्ठाय कारुण्यात् भगवान् परमर्षिः आसुरये जिज्ञासमानाय षष्टितन्त्रं प्रोवाच"[19]॥ इति॥

---

[17] चरकसंहिता 1.1.2.

[18] दर्शनोदयः भू. p.6

[19] योगसूत्रव्यासभाष्यम्—1-25

## सांख्यतत्त्वस्य श्रुत्यादिगतत्वमपि

एतत्साङ्ख्यदर्शनदृश्यमानाः प्रक्रियाः परम्-श्रुतिषु[20] पुराणेतिहासादि-प्राचीनतमग्रन्थेषु च सुसंलक्ष्या एव वर्तन्ते। यथा— महोपनिषदादौ पुरुषस्य, मैत्री[21] श्वेताश्वतरोपनिषदोः[22] प्रधानमायाशक्त्यपरपर्यायप्रकृतितत्त्वस्य त्रैगुण्यस्य, तन्मात्राणाम्, पञ्चविंशतितत्त्वानामपि निरूपणम्, कठोपनिषदि[23] महतः मनोबुद्धीन्द्रियाणां च निरूपणम्, श्रीमद्भागवते[24] श्रीमन्महाभारते[25] अन्यत्र च सर्वेषामप्येषां तत्त्वानां सुविस्तृतनिरूपणं च दृश्यत एव हि !

## सांख्यबौद्धयोः पौर्वापर्यविचारः

अस्याः साङ्ख्यप्रक्रियायाः एवं प्राचीनतमत्वेऽपि तर्कानुगतविचारबद्ध दर्शनरूपेण प्रवृत्तौ—साङ्ख्य—बौद्धदर्शनयोः कः प्राक्तनः ? इति विवादः परं वर्तते। तत्र लङ्कावतारसूत्रे-

"वेदे ज्यौतिषे साङ्ख्ये योगे च सर्वत्र
बोधिसत्वएव विशिष्यते स्म"[26] ॥

इति साङ्ख्यशब्दोल्लेखात्, कनिष्कगुरोः अश्वघोषस्य बुद्धचरिते—वैराग्येण गृहादभिनिष्क्रान्तो गौतमबुद्धः कालायसगोत्रीयं अण्डनामानं कपिलमतानु-सारिणं तपस्विनं गुरुमासाद्य सांख्यमेवाधतीवानित्युक्तेः, अन्ययोश्च बुद्धगुर्वोः अराड—उद्रकरामपुत्रयोः कपिलानुयायित्वोल्लेखदर्शनात्, उपदेशानामपि तत्र साङ्ख्यमूलानामेव दर्शनात्, [27] बुद्धप्रधानशिष्यस्य सारिपुत्रस्य च मार्गान्तरेण साङ्ख्याचार्यशिष्यत्वप्रख्यया च, [28] साङ्ख्यबौद्धयोः साङ्ख्यमेव प्राचीनतमम्—इति अनेकेषां विमर्शकानां मतिः। प्रो॥ 'गार्वे' प्रभृतयः प्रो॥ 'कीत्' पर्यन्ताः पाश्चात्या विमर्शकाश्च साङ्ख्यमेव बौद्धमूलम्, बौद्धात् प्राचीनतरं चेति समर्थयन्ति[29]।

---

[20] ऋग्वेदे—10-121

[21] मैत्र्युपनिषत्—1·3, 3-2, 5-2, 4-10·

[22] श्वेताश्वतरोपनिषत् -1-3, 4-4, 9, 10: 6-10

[23] कठोपनिषत्—3-10, 11

[24] श्रीमद्भागवते—11·20

[25] श्रीमन्महाभारते

[26] लङ्कावतारसूत्रम्. p. 156

[27] बुद्धचरितम—1! ·69, 12· 1-16, 14·106,

[28] महावस्तु अवदानम—3·29

[29] एन्सैकलोपीडिया रिलिजियन् & एतिक्स् ॥ 11-189

## सांख्यबौद्धयोः साम्यवैषम्ये

दर्शनस्वरूपदृष्ट्याऽपि–प्रकृतिपुरुषकल्पनायाम् , त्रिगुणसिद्धान्त–देवतातत्त्वविशेष-श्रुतिप्रामाण्यादि-कतिपयविषये च, अनयोः साङ्ख्यबौद्धयोः वैषम्यदर्शनेऽपि, जगतो दुःखमयत्वादिप्रतिपादने,हिंसामययज्ञयागादिप्रतिपादककर्मकाण्डस्य अनुपादेयत्वे, जगतः परिणामनित्यतायाम्, वितृष्णायाः अवश्यसम्पादनीयतायाम, ईश्वरविशेषानास्थाविषये, अन्येषु च बहुषु विषयेषु अनयोः साम्यमपि दृश्यते-इति अनयोः देशकालविषयेषु परस्परनिकटता नापलपनीया वर्तते[30]।

## सांख्याः पाश्चात्याश्च

आधुनिकविज्ञानिदृष्ट्या च विमर्शे कृते साङ्ख्यस्य व्याप्तिः कीदृशीत्यपि किञ्चित् ज्ञायते[31]। यथा—

अधुनातनैर्विज्ञानिभिः उद्घुष्यमाणः अभिव्यक्तिवादः (evolution) साङ्ख्यमूलक एव ।

एवं डा ॥ फिचूटे (Fichte) महाशयस्य "Non-ego, Absolute-ego" वादः प्रकृतिपुरुषवादसाम्यं भजते ।

डा ॥ 'षोपनियर्' (Schopenhawer) डा ॥ 'हार्ट्मौन ' (Hartmoun) महाशयभ्यां प्रकृतेरन्धत्वमभ्युपगतम् ।

डा ॥ 'कान्त् ' (Kant) महाशयः प्रकृतिपुरुषमनोबुद्ध्यहङ्काराणां गुणान् यथासांख्यमेव निरूपयामास । अनेनैव निरूपिताः आत्मस्वतन्त्रतावाद-द्वैतवाद-अज्ञेयतावादाश्च साङ्ख्यमेवानुसरन्ति ॥

प्रो ॥ 'हर्बर्टस्पेन्सर ' (Herbert spencer) महाशयस्य Transfigared Realism वादोऽपि साङ्ख्यमेव कतिपयेष्वंशेषु अनुकरोति ॥

सत्कार्यवादः, व्यक्तादव्यक्तोहः, वैराग्यमार्गावलम्बनम्, ज्ञानाधिगमस्य श्रैष्ठ्यम्, प्रकृतिपुरुषान्यताख्यातेरेव जीवितचरमलक्ष्यता इत्येतेषु विषयेषु प्रो ॥ 'प्लेटो' (Plato) 'साक्रेटिस्' (Socrates) महाशयौ साङ्ख्यमेवान्वसरतामित्यादि न पाश्चात्यदर्शनविमर्शकानां तिरोहितम् ।

---

30 जर्नल् आफ् S.V.O.I. 13.1.5

31. जर्नल् आफ् S.V.O.I. 13-1. 10-12

प्रो ॥ 'विण्टरनिदस' (Winternitz) महोदय आह[32]- डा ॥ 'हेराक्लैदस्' (Heraklites)'एम्पिडाक्लिस्' (Empedokles) 'अनाक्सगरास्'(Anaxagaras) 'डेमाक्रिटिस्' (Democritus) 'एपिक्यूरस्' (Epicurus) पैतागरास् (Pythagoras) इत्यादयः पाश्चात्यदार्शनिकाः सत्यं साङ्ख्येन प्रभाविताः इति डा ॥ 'गार्बे' (Garbe) महोदयः आहेति ।

जन्मान्तरसत्त्वम्, स्थूलसूक्ष्मशरीरयोर्भेदः आत्मनोऽविनाशित्वम् भूतपञ्चकाङ्गीकारः इत्यादयोंऽशाः साङ्ख्यशिक्षयैव डा ॥ 'पैतागरास्' (Pythagoras) महाशयेन निरूपिताः इति प्रो ॥ 'कीत्' महाशयः वदति ॥

प्रो ॥ 'डेमाक्रिटिस्' (Demacritus) महाशयः साङ्ख्य इव सत्कार्यवादी।

प्रो ॥ एपिक्यूरस् (Epicurus) महाशयश्च साङ्ख्य इव अनीश्वरवादी दृश्यते ।

प्रो॥ 'हापूकिन्स्' (Hopkins) महाशयः आह-'प्लेटो' (Plato) पैतागरासू (Pythagras) 'षोपनीयर्' (Schopenhauer) 'हार्टमौन्' (Hartmann) इत्यादयः सर्वेऽपि सत्यं साङ्ख्यप्रभाविता एवेति ॥

## साख्यग्रन्थानुवादः पाश्चात्यानाम्

अथ साङ्ख्यग्रन्थानुवादः पाश्चात्यकृता अपि दृश्यन्ते[33]- यथा- बौध्देन कान्त्यपरनामकेन परमार्थेन चैनीभाषायां सांख्यकारिकाः अनूदिताः । वृत्तिरपि काचनानूदिता तेनैवेति बालगङ्गाधरतिलकाः आहुः। 'आल्बुरनि' (Albaruni) महाशयेन कश्चन सांख्यग्रन्थः अरेबिक् भाषायां निरूपितः इति तद्वाचैव ज्ञायते ॥

एवं ल्याटिन् भाषायां प्रो ॥ 'ल्यासेन्' (Lassen) महाशयेन, जेर्मन्भाषायां डा ॥ 'विण्डिष्मन' (Windischmann) 'लोरिनसर' (Lorinser) महाशयाभ्याम्, फ्रेञ्श्भाषायां 'प्यान्तियर्' (Panthier) 'बार्तेलेमि' (Barthelemy) 'हिलेरे' (Helaire), 'तकाकुसु' (Takakusu) महाशयैः, आङ्गभाषायां 'कोलेब्रूक्' (Colebrooke) 'म्यावस्मुल्लर्' (Maxmuller)। 'विल्लियम्स्' (Williams) डेविस्' (Davies) महाशयैश्च साङ्ख्यकारिकायाः एव अनुवादाः कृताः इति च ज्ञायते ।

---

32 जर्नल आफ् S.V. ओरीयण्टल् इनस्टिटचूट् 13-1-p. 17

33 जर्नल आकू S.V. ओरीयण्टलइनस्टिटचूट् 13-1-p. 18

## दर्शनेषु साङ्ख्यस्य स्थानमाने

भारतीयेष्वपि वेदान्तदर्शनं यथाऽद्य यादृशं नायकमणिस्थानमलङ्करोति तथैव तादृशमेव स्थानं साङ्ख्यदर्शनस्यासीत् कदाचिदिति गीतोपनिषद्गतैः, साङ्ख्योपदेशैः, प्रचलितपुराणेतिहाससाहित्यैः, तन्त्रसाहित्यैः, मनुयाज्ञवल्क्यादिधर्मशास्त्रवचनैः अन्यैश्च वाक्यैः ज्ञायते। यथेमानि वाक्यानि दृश्यन्ते तत्र तत्र-

1 मार्गज्ञाः कापिलाः साङ्ख्याः शृणु तानरिसूदन![34] ॥
2 साङ्ख्याः राजन्! महाप्राज्ञाः त्यक्त्वा देहं प्रजाकृतम्[35] ॥
3 साङ्ख्याः राजन्! महाप्राज्ञाः गच्छन्ति परमां गतिम्[36] ।
4 प्रत्यक्षहेतवो योगाः साङ्ख्याः शास्त्रविनिश्चयाः[37] ।
5 साङ्ख्ययोगपरैः धीरैः पृथक्त्वैकत्वदर्शिभिः[38] ।
अभिजातप्रभावज्ञैः ऋषिभिः तत्त्वदर्शिभिः ॥
6 मोक्षमध्यापयामास साङ्ख्यज्ञानमनुत्तमम्[39] ॥
7 अब्रवीत् परमं मोक्षं यत् तत् सांख्येऽभिधीयते[40] ।
8 साङ्ख्याश्चाध्यात्मतत्त्वज्ञाः[41] ।
9 साङ्ख्याः खलु सिद्धाः[42] ।
10 तत्कारणं साङ्ख्ययोगाधिगम्यम्[43] ।
11 साङ्ख्यं योगं समभ्यसेत् पुरुषं वा पञ्चविंशकम्[44] ॥
12 संसारमनादृत्य साङ्ख्यज्ञानं समाश्रित्य[45] ।
13 द्विविधं निःश्रेयसं साङ्ख्ययोगाविति[46] ।
14 नास्ति साङ्ख्यसमं ज्ञानं नास्ति योगसमं बलम्[47] ।
15 साङ्ख्यं वै मोक्षदर्शनम् ।
16 साङ्ख्यं तत्त्वमयं शास्त्रं प्रोक्तं वै कपिलादिभिः[48] ।

---

[34] म. भा. शां 307-54
[35] म. भा. शां 307-61
[36] म. भा. शां 307-100
[37] म. भा. शां 306-6
[38] वायुपुराणे
[39] म. भा. आदि.
[40] म. भा. शान्ति.
[41] बृहद्योगियाज्ञवल्क्यस्मृतिः
[42] आश्वलायनगृह्यं-तर्पणप्रकरणे
[43] श्वेताश्वतरोपनिषत्
[44] यास्कनिरुक्ते
[45] वैखानसधर्मप्रश्नः
[46] देवलवचनम्
[47] म. भा. शान्ति.
[48] मत्स्यपुराणे

17 साङ्ख्यं योगो लोकायतं चेत्यान्वीक्षकी[49]।
18 शुद्धात्मतत्त्वविज्ञानं साङ्ख्यमित्यभिधीयते[50]।
19 अद्वैतं साङ्ख्यमित्याहुः योगस्तत्रैकचित्तता[51]।
20 प्रोवाचासुरये साङ्ख्यं तत्त्वग्रामविनिर्णयम्[52]।

इत्यादीनि विद्यासु साङ्ख्यस्थानविनिर्णायकानि भवन्ति॥

## साङ्ख्यपदार्थविवरणवैविध्यम्

तस्यास्य दर्शनस्य साङ्ख्यसंज्ञया व्यवहारे बहुधा हेतुन् वर्णयन्ति तदर्थज्ञाः —

1 यदभावादिदं सर्वं जगत् दुःखमयम्, यदुत्पादात् आत्यन्तिकी दुःखनिवृत्तिश्च, तस्या एव प्रकृतिपुरुषान्यताख्यातेः सम्यक्ख्यातिरूपत्वेन संख्यारूपत्वमिति तत्प्रतिपादकं शास्त्रं साङ्ख्यमिति केचन।

2 महाभारते तु द्विधा वर्ण्यते। एकत्र—

साङ्ख्यदर्शनमेतावत् परिसङ्ख्यानदर्शनम्।
सङ्ख्याः प्रकुर्वते चैव प्रकृतिं च प्रचक्षते।
तत्त्वानि च चतुर्विंशत् परिसंख्याय तत्त्वतः।
साङ्ख्याः सह प्रकृत्या तु निस्तत्त्वः पञ्चविंशकः[53]॥

इति पञ्चविंशतितत्त्वसंख्याविचारपरग्रन्थरूपत्वेन वर्णितम्।

3 अन्यत्र तु—

दोषाणां च गुणानां च प्रमाणप्रविभागतः।
कञ्चिदर्थमभिप्रेत्य सा संख्येत्युपधार्यताम्[54]॥

इति वस्तुगतनिरुपाधिकगुणदोषपरीक्षाया एव संख्यापदार्थत्वेन, तन्निरूपणपरं सांख्यमित्युक्तम्।

4 भगवत्पादशङ्कराचार्यैस्तु–'महर्षिः कपिलाचार्यः' इत्येकमेव नाम, कपिलश्चासौ साङ्ख्यस्य शुद्धात्मतत्त्वविज्ञानस्य आचार्यश्चेत्यर्थः[55] इति वदद्भिः

---

[49] कौटलीयार्थशास्त्रे 1.1.3
[50] व्यासस्मृतौ
[51] गरुडपुराणे
[52] श्रीमद्भागवते 1-3-11
[53] म. भा. शां. 311-62, 63
[54] म. भा. शां. 311-62, 63
[55] विष्णुसहस्र. शां. भा.

'शुद्धात्मतत्त्वविज्ञानं सांख्यमित्यभिधीयते[56]।' इति व्यासस्मृतिरेवानूदिता।

5 षड्दर्शनसमुच्चये–सांख्य इति पुरुषनिमित्तेयं संज्ञा, संख्यस्येमे सांख्याः इति। तालव्यो वा शकारः शांख्याः इति। शङ्खनामा खल्वस्यादिपुरुषः[57] इत्याद्युक्तम्॥

6 भगवद्गीताश्रीधरीये–'सम्यक् ख्यायते प्रकाश्यते वस्तुतत्त्वमनया इति संख्या, सम्यक् ज्ञानमस्त्यत्रेति वा संख्या, तस्यां प्रकाशमानं आत्मतत्त्वं अत्र प्रतिपाद्यते इति सांख्यम्[58], इत्युक्तम्।

7 'साङ्ख्यं सङ्ख्यात्मकत्वाच्च कपिलादिभिरुच्यते'* इति तु मत्स्यपुराणे उक्तम्।

सारतः–ज्ञानार्थकेन गणनार्थकेन वा संख्याशब्देन निष्पन्नोऽयं साङ्ख्यशब्दः इति, तत्रापि ज्ञानार्थकेनैव निष्पत्तिः इति बहुवादिसंमतेति च ज्ञायते॥

## सांख्यदर्शनस्य कालविशेषेण रूपभेदाः

दर्शनस्य चास्य आदिमध्यावसानकालेषु ग्रान्थिकः विपारिणामश्च दृश्यते। तत्र उपनिषत्कालः–क्रि. पू. 1000–800, इति पुराणादिकालः–क्रि. पू. 800–200 इति, तदनन्तरकालः–क्रि.पू. 300–क्रि. श. 300 इति च मतभेदाः॥

तत्र आद्यकाले वेदान्तेन साकं साङ्ख्यं एकीभूतमेवासीत्। औपनिषदः जगदीश्वरः तत्र दृश्यते एव। एते 26 तत्त्ववादिनः॥ पुराणादिकाले चरकसुश्रुतादिकाले च वेदान्तेभ्यः पृथक्कृतं स्वतन्त्रं सत् जगत्कारणीभूतस्य कर्तृत्वशक्तिविशिष्टस्येश्वरस्यानङ्गीकारेऽपि, जगदधिष्ठातुः ईश्वरस्याङ्गीकारेण, अव्यक्तस्वरूपं पुरुषं साधयच्च बहुधा विकसितमासीत्। एते 25 तत्त्ववादिनः परिवर्तिते काले तु निरीश्वरवादे एव प्रवृत्तमासीत्। अयमेवान्तिमः कालः॥

एवं स्थिते क्रिस्तशकषोडशशताब्दीयः विज्ञानभिक्षुः निरीश्वरवादमेवामसहमानः, सांख्य एव औपनिषदपरमपुरुषसत्तां साधयत् आदिकालीनं वेदान्तेन सुसङ्गतं समन्वयमेव पुनः चित्रयामास।

---

[56] व्यासस्मृतिः

[57] षड्दर्शनसमुच्चयः

[58] भगवद्गीताभाष्यम् श्रीधरीयम्

*मत्स्यपुराणे

गुणरत्नस्त्वेवमाह–साङ्ख्यं हि द्विविधम् मौलिख्यम् – उत्तरं चेति। चरकाद्यभिमतं प्रतिपुरुषं प्रधानपार्थक्यवादि सांख्यं मौलिख्यम्। ईश्वरकृष्णाद्यभिमतं पुरुषभेदेऽपि प्रधानैक्यवादि निरीश्वरतावादि च सांख्यं उत्तरम्। द्वितीयमेवेदानीं प्रचलितमिति इदमेव यथार्थमिति केचन विमर्शाकाश्च प्राहुः [59]

## सांख्यस्य निरीश्वरतावादे हेत्वन्तरम्

अन्ये तु केचन– सांख्याचार्यपरम्परायां प्रसिद्धः अतिप्राचीनः वार्षगण्यो नाम कश्चनासीत्। स च कापिलं षष्टितन्त्रमेवोपजीव्य, ग्रन्थमेकं विरचय्य, तत्र स्वतन्त्रान् निरीश्वरादिसिद्धान्तान् अन्तः प्रवेश्य प्रचारयामास। इममेव सन्धिं समीक्ष्य, बौद्धा. केचन स्वकीयसिद्धान्तप्रचाराय इमं कपिले एवारोप्य, कापिलं निरीश्वरं प्रचारयामासुः। सांख्ये अत्यन्तश्रद्धावतां जनानां तत्रैव अपस्वरकल्पने स्वानुगुणनिरीश्वरवाद एव सत्यं सर्वत्र प्रचलितो भवेदिति— इत्याहुः॥

वस्तुतो निरीश्वरवादिनोऽपि नेश्वरसामान्यमेव निराकुर्वन्ति, किन्तु जगत्कर्तृत्वादिनिर्दिष्टविशेषलक्षणलक्षितमेवेत्यपि सूक्ष्मांशः विभाव्य एव वर्तते इति विभावनीयम्॥

## साङ्ख्यप्रक्रियासारः

अथायमेतत्साङ्ख्यमतसंक्षेपः–

सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः। सा चैकैव। पुरुषास्तु परं भिद्यन्ते। ते च कूटस्थाः नित्याः अपरिणामिनः नित्यचैतन्यस्वभावाः। ते च पङ्गव इव, अपरिणामित्वात्। प्रकृतिस्त्वन्धेव, जडत्वात्। यदा विषयभोगेच्छा प्रकृतिपुरुषभेददिदृक्षा च प्रकृतेर्भवति तदा सा पुरुषोपरागवशात् परिणमते। तस्याश्चाद्यः परिणामः बुद्धिः अन्तःकरणविशेषः। सैव महत्तत्त्वम्।

सा च दर्पणवत् निर्मला। तस्याश्च बहिरिन्द्रियप्रणाडिकया विषयाकारः यः परिणतिभेदः- यथा घटः पटः इति-तत् ज्ञानं। तदेव च वृत्तिरित्यप्युच्यते। स्वच्छायां बुद्धौ वर्तमानेन ज्ञानेन चैतन्यस्य पुरुषस्य भेदाग्रहात् 'अहं जानामि' इति यः अभिमानविशेषः सैव उपलब्धिः। स्रक्चन्दनादिविषय-

---

[59] भारतीयदर्शनम् (बलदेवः) p.685

संनिकर्षात् इन्द्रियप्रणाडिकयैव सुखदुःखाद्याकारः बुद्धेरेव यः परिणामविशेषः सः प्रत्ययः। अतएव ज्ञानसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराः सर्वेऽपि बुद्धेरेव परिणामविशेषाः सूक्ष्ममात्रया प्रकृतावेव वर्तमानाः अवस्थाभेदात् आविर्भवन्ति तिरोभवन्ति च।

पुरुषस्तु पुष्करपलाशवत् निर्लेपः, प्रतिबिम्बते परं बुद्धौ। प्रकृतिमहदहङ्काराः, पञ्चतन्मात्राणि, पञ्चभूतानि, पञ्चज्ञानेन्द्रियाणि, मनः, पुरुषश्चेति पञ्चविंशतिः तत्त्वानि इति ॥

## मुख्याः सिद्धान्तार्थाः, तत्र—अख्यातिवादमूलम्

अथैतत्सिद्धान्तसिद्धार्थविशेषाः केचन निर्दिश्यन्ते—

इमे अख्यातिवादेन प्रपञ्चशून्यतावादमूलभूताविद्यादिपदव्यपदेश्य भ्रमलक्षणाज्ञानमेवापलपन्ति। अनेन च– 'सर्वमसत् अनित्यम्, क्षणिकम्, निस्स्वभावम्, असत्कार्यम्, परतन्त्रम्, असत्यम्, अभावात्मकं चेति वदन्तो बौद्धाः–सत् नित्यम्, स्थिरम, सुखादिस्वभावम् सत्कार्यम्, स्वतन्त्रम्, सत्यम् भावात्मकं चेति साधयद्भिरेतैः साङ्ख्यैर्निरस्यन्ते।

## बन्धमोक्षौ

दृग्दृश्यभावलक्षणप्रकृतिदर्शनमेव बन्धः, पुनरदर्शनमेव मोक्षः। न हि पुरुष एव स्वभावतो विषयसम्बन्धी, अनिर्मोक्षप्रसङ्गात्। नापि प्रकृतिरेव स्वभावतः पुरुषसंसर्गवती, तस्या अपि नित्यत्वेन तादवस्थ्यात्। नापि शब्दादिविषयरूपस्य जगतः आत्मनश्च साक्षात् सम्बन्धः, दृष्टत्वादृष्टत्व-व्यवस्थानुपपत्तेः। नापि श्रोत्रादीन्द्रियद्वारा, मनसि विषयान्तरव्या-पृतेऽपि विज्ञानोदयप्रसङ्गात्। नापीन्द्रियमनोद्वारा, स्वप्नदशायां व्याघ्रोऽहम् वराहोऽहम्' इत्याद्यभिमानवतो नरस्य नरत्वे सन्निकृष्टेऽपि नरोऽहमित्याद्यभिमानविरहात्। अतो नियतविषयाभिमानव्यापारः अहङ्कारः अङ्गीकर्तव्यः। नाप्यहङ्कारपर्यन्तव्यापारेण, सुषुप्त्यवस्थायां प्रागुक्तसकल-व्यापारविगमेऽपि श्वासप्रश्वासौपयिकप्रयत्नलक्षणव्यापारानुपपत्तेः। तस्मात् यदेतास्ववस्थासु सव्यापारमेकमनुवर्तते, यदाश्रया सर्वाऽपि वासना, तदन्तःकरणं बुद्धिलक्षणमाश्रित्य घटादिर्विषयः पुरुषस्योपधानीभवति, अनुभवगोचरो भूत्वा ससारमावहति ॥

ततश्च आलोचनाख्यः निर्विकल्पकपदवाच्यः व्यापारः इन्द्रियाणाम्, विकल्पो मनसः, अभिमनोऽहङ्कारस्य, प्रयत्नलक्षणोऽध्यवसायः बुद्धेरिति, श्रोत्रादीनि बाह्येन्द्रियाणि मनोऽहङ्कारबुद्धिरूपाण्यन्तःकरणानि च स्वीकर्तव्यान्येव ॥

पुरुषबुद्ध्योः भेदाग्रहात् निष्क्रिये निरतिशये पुष्करपलाशवन्निर्लेपेऽपि पुरुषे कर्तृत्वाभिमानः। तस्मिन्नचेतनेऽपि बुद्धितत्त्वे चेतनाभिमानः। ततश्च सा बुद्धिः 'घटमिममहं करोमि' इत्याद्यनुभवात् अंशत्रयवती। पुरुषोपरागः विषयोपरागः व्यापारावेशश्चेति त्रयोंऽशाः। तत्र अहमित्यंशः पुरुषोपरागः, दर्पणस्येव मुखोपरागः अतात्त्विकः। इदमित्यंशः घटादिः विषयोपरागः, निःश्वासाभिहतस्य दर्पणस्येव मलिनिमा, तात्त्विकः–इन्द्रियद्वारा घटाकारेण परिणामः। एतदुभयायत्तः व्यापारावेशपदवाच्यः प्रयत्नाध्यवसायः ॥

एवंरूपांशत्रयवती बुद्धिपदाभिधेया। बुद्धेः विषयोपरागलक्षणः घटाकारबुद्धिपरिणामः घटादिना सम्बन्धरूपः ज्ञानपदाभिधेयः। तेन सह यः पुरुषोपरागस्य सम्बन्धः सैव उपलब्धिपदाभिधेया दर्पणप्रतिबिम्बितस्य मुखस्य दर्पणमलिनिम्ना मलिनिमेव अतात्त्विकः। ततश्च बुद्धिः उपलब्धिः ज्ञानम् इति अर्थान्तरमेव ॥

तत्र सत्त्वपुरुषान्यताख्यात्या बुद्धिपुरुषविवेकलक्षणया तत्त्वज्ञानरूपया विवेकाभावनिबन्धनसर्वसम्बन्धपरिलोपे मुक्तो भवतीति ॥

एषां च मते विपरीतवासनानिवृत्त्यनन्तरकालीनं शास्त्रजनितमेव ज्ञानपदवाच्यं भवेदिति ॥

## सत्कार्यवादः

एवं साङ्ख्यानां सर्वनित्यतालक्षणः सत्कार्यवादः। तेनैव प्रधानादिसिद्धिः सच्छब्दार्थश्च देशकालावस्थालक्षणैः उपाधिभिरनवच्छिन्नः। तेन सर्वस्यापि नित्यत्व-विभुत्व-एकत्व-सत्यत्वादिसिद्धिः। सत एवाविर्भावतिरोभावावित्यङ्गीकारेण कारकचक्रव्यापारसार्थक्यम्, बुद्धिव्यपदेशार्थक्रियादिभेदोपपत्तिश्च। उत्पत्तिरभिव्यक्तिरित्यनर्थान्तरम्। तेन अस्तिनास्तीत्यादिव्यवहारोपपत्तिः। सर्वस्य नित्यत्वादाविर्भावोऽपि नित्यः–तेन आविर्भावे चाविर्भावान्तरकल्पना–प्रसङ्गपरिहारः। यथा–तार्किकमते स्वकारणसमवायलक्षणस्य सत्तासमवायलक्षणस्य च उत्पत्तिपदार्थस्य नित्यत्वेऽपि तदर्थं कारणानि व्यापार्यन्ते इत्यभ्युपगमः, तथा अत्रापि इति।

तस्मिंश्च कारककलापे अधिष्ठातृलक्षणस्य कर्तुः न प्रवेशः। तेन च वत्सविवृद्धिनिमित्तक्षीरादिप्रवृत्त्युपपत्तिः ॥

सर्वज्ञस्येश्वरस्यापि नात्र प्रवेशः। अवाप्तसकलेप्सितस्य तस्य कारुण्यात् वृत्तौ अन्योन्याश्रयः—कारुण्येन सृष्टिः, सृष्ट्वा च दुःखिनो जन्तून् अवलोक्य कारुण्यमिति। किञ्च करुणया प्रेरितः सुखिन एव जन्तून् सृजेदिति च ॥ प्रकृतेरचेतनायाः स्वाभाविक्यां तु प्रवृत्तौ न स्वार्थो नानुग्रहो न कारुण्यं प्रयोजकमिति नोक्तदोषप्रसङ्गावतारः। पारार्थ्यमात्रं तु प्रयोजकमुपपद्यते इति पुरुषविशेषसिद्धिः इति ॥

## सादृश्यपदार्थः

सादृश्यं न तत्त्वान्तरम्। न वा वस्तुनः स्वाभाविकः शक्तिविशेषः। किन्तु भूयोऽवयवसामान्ययोग एव। सारूप्यं सामान्यमिति चास्य पर्यायौ ॥

## आकाशपदार्थः

आकाशं सांशं चाक्षुषं उद्भूतरूपं अवकाशप्रदं च प्राथमिकं भूतम्। भेरीशब्दः इत्यादिव्यवहारानुगुण्येन शब्दः पञ्चभूताश्रित एव, न त्वाकाशमात्राश्रितः ॥

## प्रकृतिः

अन्यैर्ये परां काष्ठामापन्नाः परमाणवः अङ्गीक्रियन्ते तेभ्योऽप्यत्यन्तसूक्ष्मा प्रकृतिः ॥

## देहत्रैविध्यम्

पञ्च स्थूलभूतानि विशेषाः इति, पञ्च सूक्ष्मतन्मात्राणि अविशेषाः इति चोच्यन्ते। विशेषानुबन्धिनो देहाः त्रिविधाः–सूक्ष्माः स्थूलाः प्रभूताश्चेति। बुद्ध्यहङ्कारतन्मात्रेन्द्रियसंहतिलक्षणाः लिङ्गाख्याः प्रथमं समुत्पद्यमानाः नियताः सूक्ष्मदेहाः। षाट्कौशिकाः मातापितृसम्भवाः स्थूलदेहाः। स्थावराः प्रभूतदेहाः। सात्त्विकाहङ्कारोपादानकानि सर्वाण्यपीन्द्रियाणि विभूनि ॥

## पुरुषः

शरीरादिव्यतिरिक्तः चिद्रूपः पुरुषः असंहतो निर्गुणः कूटस्थः विभुर्नित्यः आत्मा पुमान् जीवः भोक्ता क्षेत्रज्ञश्च। अन्येषां मते अभेदज्ञानान्मोक्षे, एषां मते भेदज्ञानान्मोक्षः। चैतन्यचेतनयोः धर्मधर्मिणोश्चाभेदः ॥

**

## अदृष्टम्

अचिदात्मनः अन्तःकरणस्य बुद्धेः वृत्ति(कार्य)विशेष एव अदृष्टपदार्थः ॥

## यज्ञीयहिंसा

कर्माङ्गपशुहिंसादिरपि हिंसैव। 'यत्पशुर्मायुमकृतोरो वा पद्भिराहते।' इत्यादिमन्त्रलिङ्गमप्यत्र प्रमाणम्।

## प्रामाण्यम्

प्रामाण्यमप्रामाण्यं चेति द्वयमपि स्वत एव (निजशक्तिज्ञानजनक सामग्रीमात्राधीनम्) ॥

## [अनुमानवैविध्यम्]

मात्रानिमित्तसंयोगिविरोधिसहचारिभिः स्वस्वामिभाववध्यघातक भावादिरूपेण च सप्तधा अनुमानप्रवृत्तिः इत्याहुः ॥

एवं सुसंक्षेपेण असाधारणाः प्राणभूताः साङ्ख्यसिद्धान्तार्थाः सूचिताः ॥

## [सांख्यतत्त्वस्थानम्]

अथ सांख्यतत्त्वस्थानं प्रति किञ्चिदिव प्रस्तुमः- 'सांख्यं योगः लोकायतं चेत्यान्वीक्षिकी' इति कौटल्योक्तिप्रकारेण- स्थूल-सूक्ष्म-परभेदैःतत्त्वमार्गं संशोधयतां मार्गदर्शनाय क्रमेण शास्त्रत्रयं प्रवृत्तम्–लोकायतं योगः सांख्यं चेतीति ज्ञायते। एतानि च क्रमेण भौतिकं दैविकं आध्यात्मिकं च तत्त्वं प्रधानतः निगूढं प्रतिपादयन्तीत्यनुभाविनां मतम्। अत एवोक्तं तत्रैव—

"प्रदीपः सर्वविद्यानां उपायः सर्वकर्मणाम्।
आश्रयः सर्वविद्यानां शश्वदान्वीक्षिकी मता॥"

इति। तत्र–व्यवहारे लोकायतेन, कर्मणि योगेन, ज्ञाने सांख्येन च, अनुशासनात्, एतेषां परस्परमिलितानामेव पूर्णजीवनोपयिकशास्त्रत्वमिति तद्रहस्यविदोऽभिप्रयन्ति। यदाहुः—

"हतं ज्ञानं क्रियाहीनं हतमज्ञानिनां क्रिया।
अपश्यन्नन्धको दग्धः पश्यन्नपि च पङ्गुकः॥"

इति,

"एकं साख्यं च योगं च यः पश्यति स पश्यति॥"

इति च॥ सर्वाण्यपि शास्त्राणि तत्तन्मर्यादाःअनतिक्रम्य परिशीलयतां मनीषिणां

च सांख्ययोगवेदान्तानां परस्परं बाध्यबाधकभाव एव न तावान् सुवचः इत्यपि सुधियामाशयः, यतः अनादितः स्वस्वपदे एव विराजमानानामात्मनां विषये हि न काऽपि समस्या। किन्तु तस्मात् प्रकृतौ सृष्टिमार्गमवतरतामेव विषये। तत्र प्रथमं शून्यादेकत्रावतारः तदेव प्रथमं तत्त्वम्। एवमवतीर्णश्च क्रमेण चतुर्विंशतितत्त्वपर्यन्तं व्याप्तस्सन् संसारं प्रवर्धयति। इमामेव तत्त्वसंख्यां सांख्याः गणयामासुः। काले च एतत्सोपानपरम्परयैव प्रकृतिपुरुषान्यताख्यात्या स्वं पदमारोहत्यपि। तत्र चैकैकशो व्यवकलने अन्ते परिशिष्टः एषःएक एव। स च पुरुषः। यथोक्तम्–

"नष्टे लोके द्विपरार्धावसाने
महाभूतेष्वादिभूतं गतेषु।
व्यक्तेऽव्यक्तं कालवेगेन याते
भवानेकः शिष्यते शेषसंज्ञः॥"[1]

इति।

वस्तुतः शुद्धो ह्यात्मा अन्ततः ईश्वराविशिष्टः। एनमेवावस्थाविशेषे आणविकं पुरुषमपि मन्यन्ते प्राचीनाः भारतीयाः। एवमेनां सांख्यतत्त्व-सोपानपरम्परामाश्रित्य शेषतामापन्ने एकस्मिन्नपि एकस्य व्यवकलने शून्यमेवा-वशिष्येत इत्येव योगः प्राह। तथा शून्यतया स्थित एव ईश्वरः इति, तदीयानेव धर्मविशेषान् वेदान्तः सुगम्भीरमुपपादयति इति चैषां तत्त्व-मित्येवं वस्तुतो विमर्शसरणौ, एषां सांख्ययोगवेदान्तानां परस्परं विरोध एव नोन्मीलतीति ज्ञानविज्ञानसम्पन्नानां आगमानुमानध्यानाभ्यासरसैः त्रिधा प्रज्ञां प्रकल्पयतां तत्त्वविदां च रमणीयः एव आशयः इति प्रतिभाति। विस्तरस्त्वन्यत्र॥

## [साङ्ख्यदर्शनप्रवर्तकाः]

इतः परं[2]—सांख्यग्रन्थकर्तृ–तद्देशकाल–कृति–तत्परम्परादिविषयेषु सांख्यानुबन्धिग्रन्थपरम्पराविषयेषु च किञ्चिद्विमृशामः—

### (1) कपिलः

अस्य च सांख्यशास्त्रस्य आदिप्रवर्तकः प्रसिद्धः कपिल एवेति तु सर्वस्या अपि भारतीयपरम्परायाः विश्वासः सयुक्तिक एव। सृष्टिकर्तुर्धातुः सृष्टिमातृका श्रुतिमाता एवं ब्रवीति—

---

[1] भागवते १०-३.    [2] J. S. V. OI Sankhya BIB.

"ऋषिं प्रसूतं कपिलं यस्तमग्रे
ज्ञानैर्बिभर्ति जायमानं च पश्येत ॥" [60]

इति। स्मृतिश्च महाभारतनाम्नी—

"साङ्ख्यस्य वक्ता कपिलः परमर्षिः स उच्यते। [61]

इत्याह। गरुडपुराणे, तथा श्रीमद्भागवतेऽपि—

"पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुतम।
प्रोवाचासुरये सांख्यं तत्त्वग्रामविनिर्णयम ॥" [62]

इत्युक्तम्। अतिप्राचीनः ईश्वरकृष्णोऽप्याह—

"परमर्षिणा समाख्यातम" "मुनिरासुरयेऽनुकम्पया ददौ।"[63] इति। स्वायम्भुवस्य मनोर्दुहितरि देवहूत्यां महर्षेः कर्दमात् भगवान् विष्णुरेव कपिलनाम्नाऽवततारेति च भागवते उक्तम्— यथा—

तस्यां बहुतिथे काले भगवान् मधुसूदनः।
कार्दमं वीर्यमापन्नः जज्ञेऽग्निरिव दारुणि ॥
अयं सिद्धगणाधीशः साङ्ख्याचार्यैः सुसंमतः।
लोके कपिल इत्याख्यां गन्ता ते कीर्तिवर्धनः ॥"[64]

इति। तत्रैवान्यत्राप्युक्तम् —

"कपिलः तत्त्वसंख्याता भगवान् आत्ममायया।
जातः स्वयमजः साक्षात् आत्मप्रज्ञप्तये नृणाम् ॥" [65]

इति। नाथसम्प्रदाये रसायनशास्त्रेषु च कपिलो विज्ञानी सृष्टिरहस्यानां, सिद्धपुरुषः इति प्रसिद्धिः। [66] महाभारते एव क्वचित् अग्न्यवतारः कपिलः इत्युक्तम्— यथा—

"कपिलं परमर्षिं च यं प्राहुः यतयस्सदा।
अग्निः स कपिलो नाम साङ्ख्ययोगप्रवर्तकः। "[67] इति ॥

भृग्वादिभ्यः सांख्योपदेष्टा कपिलः वासुदेवापरनामकः। अन्यश्च वेदविरुद्धार्थोपदेष्टा कापिलादन्यः इति पद्मपुराणे उक्तम्— यथा—

---

[60] श्वेताश्वतरोपनिषत्, 5-2
[61] महाभारते-शान्ति 330-60
[62] भागवतम् 1-3-11
[63] सांख्यकारिका 69-70
[64] भागवतम् 3-24, 6-19
[65] भागवतम् 35-1-2
[66] गोपीनाथकविराजः—जयमङ्गलाभूमिकायाम्
[67] महाभारतम् -वनपर्व-211-21

"कपिलो वासुदेवाख्यः सांख्यं तत्त्वं जगाद ह।
ब्रह्मादिभ्यश्च देवेभ्यः भृग्वादिभ्यस्तथैव च॥"
(सर्ववेदविरुद्धं च कपिलोऽन्यो जगाद ह॥"[68] इति।)

द्वौ कपिलौ, तत्राद्यः भगवदवतारः। सेश्वरसांख्यप्रवर्तकः, अन्यस्तु अग्न्यवतारः निरीश्वरसांख्यः इति स्मृतिवाक्यमुपन्यस्तम्। वाचस्पत्ये—

"सांख्यमतं च द्विविधम्। सेश्वरानिरीश्वरभेदात्।
तत्र सेश्वरसांख्यं भगवदवतारः कपिलः प्रणीतवान्।
निरीश्वरं तु अग्न्यवतारः कपिलः।[69]

"अग्निः स कपिलो नाम सांख्यशास्त्रप्रवर्तकः"[70] इति स्मृतेः" इति॥ गौडपादार्याः ब्रह्मणः पुत्रं कपिलं वदन्ति—

"इह भगवान् ब्रह्मणः सुतः कपिलो नाम"[71] इति। सर्वोपकारिणी-वृत्तिकारस्त्वेवमाह—

"समस्ततत्त्वानां सकलषष्टितन्त्रार्थानां च
सूचकं षडध्याय्या अपि बीजभूतं तत्त्व-
समाससूत्रं नारायणावतारकपिलमहर्षि-
प्रणीतम्। षडध्यायी तु वैश्वानरावतार-
भूतमहर्षिभगवत्कपिलप्रणीतेति वृद्धाः॥"[72]

इति। एवं सांख्यप्रवर्तकस्य कपिलत्वे विवादाभावेऽपि बहुविधकपिलव्यक्तिकथनं विमर्शकाः नानुमन्यन्ते केचन।[73]

सांख्यप्रवर्तकः विष्णोरवतारः एक एव कपिलः।
स एव कदाचित् क्रोधाग्निना सगरपुत्रान् भ-
स्मीचकारेति तस्याग्नित्वोक्तिः॥"

इति सांख्यप्रवचनभाष्यम्॥[74] डा॥ "कीत्" "गोपीनाथ" प्रभृतयस्तु कपिलं ऐतिहासिकं पुरुषं न मन्यन्ते। यतः व्यासभाष्ये "निर्माणचित्तमधिष्ठाय" इत्युक्तम्। पाञ्चभौतिकशरीरे अवतीर्णस्य निर्माणचित्ताधिष्ठानं सुतरामशक्यमिति; शक्यमेव योगजसिद्ध्या इति च डा॥ मस्कोरीमहाशयाः॥[75]

---

[68] पद्मपुराणे
[69] वाचस्पत्यकोशे
[70] स्मृतिः
[71] सां. का. गौड. भा. 1
[72] सर्वोपकारिणी वृत्तिः
[73] सांख्यदर्शनका इतिहास उ. शा. 8-12
[74] सां. प्र. भा. 6-7
[75] जयमङ्गलाभूमिका p. 5

भगवत्पादशङ्कराचार्याश्च— एकत्र—

"स्मृतिश्च तन्त्राख्या परमर्षिप्रणीता, अन्याश्च तदनुसारिण्यः स्मृतयः।"[76] इति, अन्यत्र च— "या तु श्रुतिः कपिलस्य ज्ञानातिशयं प्रदर्शयन्ती प्रदर्शिता, न तया श्रुतिविरुद्धमपि कापिलं मतं श्रद्धातुं शक्यम्। कापिलमिति श्रुतिविसामान्यमात्रत्वात्। अन्यस्य च कपिलस्य सागरपुत्राणां प्रतप्तुः वासुदेवनाम्नः स्मरणात्॥"[77] इत्यप्युक्तम्॥ अत्रानन्दगिरीयव्याख्या एवं वर्तते—

"वैदिको हि कपिलो वासुदेवनामा पितुरादेशादश्वमेधपशुमन्विष्य परिसरे पश्यतां इन्द्रचेष्टितमदृष्टवतां षष्टिसहस्रसंख्याजुषां आत्मोपरोधिनां सहसैव भस्मीभावहेतुः। स च सांख्यप्रणेतुः अवैदिकादन्यः।"[78] ॥ इति ॥

एवं कपिलविषयकाणि वाक्यान्युपन्यस्तानि। एषां परस्परपरश्शतविरोधसत्त्वेऽपि सारतः कपिलनामैष कश्चित् सांख्यशास्त्रप्रवर्तकः इति निर्णीतं भवति॥ तेन च केवलं तत्त्वसमाससूत्राण्येव कृतानि। षडध्याय्या प्रसिद्धानि अत्र मुद्रितानि सांख्यसूत्राणि विज्ञानभिक्षुणैव कपिलनाम्ना विरच्य व्याख्यातान्यप्यभूवभिति केषांचन विमर्शकानां वादः।

## कपिलस्य देशः

कपिलवस्तु नाम नगरं भगवतो बुद्धस्य यत् जन्म स्थानम्, तदेवास्य महर्षेः कपिलस्यापीति 'जनरल्कर्निंघ्' 'गार्वे' महोदयाः अभिप्रयन्ति। तत्र 'कपिलवत्थु इति पालीशब्दस्य 'कपिलवास्तु' इत्येव संस्कृतं रूपं स्यादित्यपि वदन्ति। श्री आद्याप्रसादमिश्रास्तु शाक्यवंशीयस्य कस्यचित् क्षत्रियस्यैव राज्यं तत् न तु कपिलस्येति प्रतिपादयति। परं तु अश्वघोषस्य सौन्दरानन्द काव्यानुसारेण महर्षेः कपिलस्य नाम्नैव तन्नगरं 'कपिलवास्तु' इति प्रसिद्धमिति ज्ञायते। यथा—

---

[76] ब्र. सू. शां भा. 2-1-1

[77] ब्र. सू. शां भा. 2 1-1

[78] ब्र. सू. शां. भा. व्या 2.1.1

"कपिलस्य च तस्यर्षेः तस्मिन्नाश्रमवस्तुनि ।
यस्मात्ते तत्परं चक्रुः तस्मात् कपिलवास्तु तत् ॥"[79] इति ॥

श्रीमति भागवते तु—सरस्वतीनद्यास्तीरे बिन्दुसरःसमीपवर्तिनि कस्मिंश्चिदाश्रमे कर्दमदेवहूत्योः पुत्रभावेन महर्षिः कपिलोऽवततारेति दृश्यते। स चाश्रमः हिमालयप्रान्ते मानससरोवरात्पश्चिमदिशि आसीदिति महाभारतादवगम्यते। तथा चायं कपिलो भगवान् हिमवत्प्रदेशवर्तिनि बिन्दुसरस्सन्निकर्षे जन्म लब्ध्वा अनन्तरं कपिलवास्तुनगरे दीर्घकालं वसन् तत्त्वशास्त्रमिदं स्वकीयज्ञानविज्ञानवैभवेन समधिगतं युक्तेभ्योऽन्तेवासिभ्यः उपदिश्य प्रचार्य अन्ते गङ्गासागरसङ्गमप्रदेशसङ्गतायाः सरस्वतीनद्यास्तीरे कृतप्रशान्ताश्रमे कालं निनायेत्येव सुयुक्तमिति भाति ॥

## कपिलस्य कालः

कपिलमहर्षेः कालनिर्णयस्तावत् न सुलभः। परन्तु महाभारत-रचनायाः शतपथब्राह्मणसङ्कलनाच्च प्रागेव कपिलावतारस्य वक्तव्यतया कालकलनादृष्ट्या पञ्चसहस्रसंवत्सरेभ्यः प्रागेवासीदिति वक्तव्यं भवतीति डा॥ आद्याप्रसादमिश्रमहोदयाः निरूपयन्ति।

## कपिलग्रन्थः

कपिलरचितग्रन्थविषये पूर्वमेव किञ्चित्प्रस्तुतम्। तदनुसारेण परमतखण्डनरहितं परिमितैरेव पदैः निखिलतत्त्वप्रतिपादकं तत्त्वसमास-सूत्रमेव कपिलप्रणीतम। षडध्यायनिबद्धमिदं तु केनचिदर्वाचीनेनैव निबद्ध-मिति केचित्। अन्ये तु-उभयमपि न कापिलम्। सांख्यकारिकोप-जीव्यं षष्टितन्त्रमेव कापिलं, तच्च केवलं श्रुतिवत परम्परयोपदेशागतमेवासीत्, न तु ग्रन्थरूपम। अथवा नष्टमेव ग्रन्थरूपं स्यदिति च वक्तुं शक्यते इत्याहुः। षडध्यायनिबद्धमिदमेव षष्टितन्त्रमित्यपि केचन वदन्ति।

वस्तुतो विमृश्यमाने सूत्रेष्वेषु अर्वाचीनकालरचितसूत्राणां मतीयानां च खण्डनस्य दर्शनात, कस्यापि सूत्रस्य अतिप्राचीनग्रन्थेषु अनुद्धरणात, ईश्वरकृष्णविरचितसाङ्ख्यकारिकादृष्टनिर्दिष्टसिद्धान्तमनुसृत्य केनचित्प्रति-भावतैव इमानि सूत्राणि रचितानि स्युः इत्येव प्रतिभाति।

कथमपि वाऽस्तु। सिद्धान्तार्थान् मनसि धर्तुं अनुकूलतया रचितानि सूत्रलक्षणैर्युक्तानि इतरदर्शनेष्विव सूत्रस्थानसमभिषिक्तानीति, अमीषां

[79] सौन्दरनन्दे 12-57

सुसंक्षिप्ता काचन वृत्तिरपेक्ष्यत एव तदधिकारिभिरित्यालोच्य: सोऽयं सूत्रग्रन्थां सुसंक्षिप्तसाङ्ख्यप्रवचनवृत्तिसहित: प्रकटनायात्र स्वीकृत: इति प्रमोदस्थानमेवेति मन्यामहे ॥

एवं च 'सिद्धानां कपिलो मुनि:,[1] इति गीतोक्तप्रकारेण कपिलस्य आदिसिद्धसाङ्ख्याचार्यत्वं निर्विवादसिद्धमत्युपपादितम् ॥

श्रीगौडपादाचार्यविरचिते सांख्यकारिकाभाष्ये केवलं सांख्याचार्याणां सङ्ग्रह: कश्चन दृश्यते। यथा—

"सनकश्च सनन्दश्च तृतीयश्च सनातन:।
आसुरि: कपिलश्चैव वोढु: पञ्चशिखस्तथा" ॥[2]

इति। मनुस्मृतिव्याख्याता कुल्लूकभट्टोऽपि सनन्दं सांख्ये प्रमाणयति।

अस्त्वेवम्। प्रकृते–

इत: परं कपिलोपज्ञा साङ्ख्यपरम्परा किञ्चिदिव परामृश्यते। सोऽयं कपिल: आसुरये, आसुरिश्च पञ्चशिखाय इदं शास्त्रमुपदिदेश। तस्माच्च शिष्यपरम्परया भगवान् ईश्वरकृष्ण: इदं लब्धवानिति साङ्ख्यकारिकाभिरेव (कारिका=७०-७९) ज्ञायते ॥

## साङ्ख्याचार्या:

उपलब्धेतिहाससूचनानुसारेण आपाततोऽयं सांख्याचार्यशिष्यपरम्पराक्रम: आदृत:। यथा—

| | | | |
|---|---|---|---|
| 1 | कपिल: | 12 | शङ्कराचार्य: |
| 2 | आसुरि: | 13 | अनिरुद्ध: |
| 3 | पञ्चशिख: | 14 | विज्ञानभिक्षु: |
| 4 | जैगीषव्य: | 15 | भावागणेश: |
| 5 | वार्षगण्य: | 16 | श्रीधराचार्य: |
| 6 | विन्ध्यवासी | 17 | महादेवसरस्वती |
| 7 | ईश्वरकृष्ण: | 18 | स्वप्नेश्वर: |
| 8 | सांख्यनायकोमाधव: | 19 | रघुनाथतर्कवागीशभट्टाचार्य: |
| 9 | माठराचार्य: | 20 | नारायणतीर्थ: |
| 10 | गौडपाद: | 21 | राघवानन्दसरस्वती |
| 11 | वाचस्पतिमिश्र: | 22 | नागेश: |

[1] भगवद्गीता-११.

[2] सां. गौ. व्या-का. १.

23 विश्वेश्वरदत्तमिश्रः | 24 तारानाथतर्कवाचस्पतिः
25 पञ्चाननतर्करत्नाख्यः | 26 हरिहरानन्दःआरण्यः

इति ।

कालानुसार्ययं निर्देशः । निर्दिष्टशिष्याचार्यभावस्तु एषां सर्वत्र तथा न ज्ञायते ।

सप्तदशशताब्दीमारभ्य एकोनविंशशताब्दपर्यन्तमध्यकालीनाः इतोऽप्यन्ये सांख्यशास्त्रप्रवर्तकाः दृश्यन्ते । यथा—

27 अनन्तभट्टः
28 भट्टकेशवः
29 बोधभारती
30 भवदेवः
31 ज्ञानामृतयतिः
32 हरिभट्टः
33 कविराजयतिः
34 कुलमुनिः
35 महादेवाश्रमः
36 रामकृष्णभट्टाचार्यः
37 श्रीकृष्णमित्रः
38 श्रीनिवासयतिः
39 वंशीधरमिश्रः
40 वसन्तनरसिंहः
41 विग्रहराजभट्टः
42 योगानन्दः

इति ॥

निर्दिष्टानाममीषां देशकालादिकं तद्विरचितग्रन्थादिकं च संक्षेपेणात्र प्रदर्शयामः । विस्तरस्तु चरित्रेतिहासप्रकथनार्थमेव प्रवृत्तासु कृतिष्वनेकासु द्रष्टव्यो वर्तते ।

## [२] आसुरिः

कपिलस्यैवायं शिष्यः इति—

"मुनिरासुरयेऽनुकम्पया प्रददौ" [80]

इति कारिकयाऽवगम्यते । अनेन सांख्यपरम्परा प्रवर्तितेति—

"पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुतम् ।
प्रोवाचासुरये सांख्यं तत्त्वग्रामविनिर्णयम् ॥[81]

इति भागवतोक्त्या ज्ञायते । अयमेव पञ्चशिखस्याचार्य इति च

"आसुरेःप्रथमं शिष्यम्" [82]

---

[80] सां. का.
[81] श्रीमद्भागवतम् 1-3-11
[82] महाभारतम् शां. 218.6

इति महाभारतोक्तया अवगम्यते। षड्दर्शनसमुच्चये आसुरिवाक्यत्वेन उद्धृतात्—

"विविक्ते दृक्परिणतौ बुद्धौ भोगोऽस्य कथ्यते।
प्रतिबिम्बोदयः स्वच्छे यथा चन्द्रमसोऽम्भसि॥[83]

इति वचनात्, अनेन कश्चन ग्रन्थोऽपि निर्मितः इति ज्ञायते। स चेदानीं नोपलब्धः। कपिलकृतः एतदुपदेशश्च सांख्यकारिकाव्याख्ययोः जयमङ्गला-माठरवृत्योः चित्रितः। ऐतिहासिक एवायं पुरुषः इति महामहोपाध्यायः गोपीनाथकविराजः। इतिहासाविषयः इति 'कीत्' महाशय आह॥

## [३] पञ्चशिखः

आसुरेः प्रधानशिष्योऽयम् इति, वैदेहानां जनकानामेकतमस्य जनदेव-नाम्नः गुरुरयमिति, "जनदेवस्यास्थाने शतं विद्वांसः विभिन्नमताः आसन्, पञ्चशिखेन तेषु वादे निरुत्तरीकृतेषु पञ्चशिखमेव जनदेवः आचार्यत्वेन परिगृह्य सांख्यविज्ञानवान अभूत्" इति च महाभारतादवगम्यते।[84] कूर्मपुराणे तु अस्य साक्षात कपिलशिष्यत्वम् जैगीषव्यसब्रह्मचारित्वं च प्रतिपादितम्।[85] षष्टितन्त्राख्यग्रन्थस्य अयमेव कर्तेति चैनीयानामाशयः।[86] इदं सांख्यप्रवचनसूत्रमेवैतत्कर्तृकमिति स्वप्नेश्वरः स्वीयकौमुदीप्रभायामाह।[87] व्यासभाष्ये प्रमाणीकृतानि कानिचिद्वाक्यानि पञ्चशिखीयानीति वाचस्पति-मिश्राः आहुः।[88] तानि च वाक्यानि प्रकृतसाङ्ख्यसूत्रेष्वेव दृश्यन्ते। किमयं वैशेषिकेषु प्रसिद्धः पञ्चशिख एव वेत्यपि केचन संशेरते॥[89]

विमर्शका बहवः अनेनैव प्रथमं सांख्यप्रक्रियायाः क्रमबद्धं निरूपणं कृतमित्यभिप्रयन्ति। सांख्यसूत्रेष्वपि अस्याभिप्रायाः "आधेयशक्तियोगेनेति पञ्चशिखः।"[90] "आविवेकनिमित्तो वा पञ्चशिखः।[91] इत्यादिना पदेपदे उद्धृताः। केचित्तु पाञ्चरात्रसिद्धान्तीय एष इति प्राहुः। विज्ञानभिक्षुः भावागणेशश्च अनेन काचन तत्त्वसमाससूत्रव्याख्या कृतेत्याहतुः॥ यथा--

---

[83] षड्दर्शनसमुच्चये p 37
[84] महाभारते शान्ति 220, 221 अ.
[85] कूर्मपूराणे-पूर्वखं 9-119
[86] कीत्-सांख्यसिस्टम् p. 48
[87] J.O.R. Madras III. 2
[88] योगभाष्ये 1-4, 25, 2-5,
[89] Vaisheka philosophy p.8
[90] सां. सू. 5-32
[91] सां.सू. 6-68

'समाससूत्राण्यालम्ब्य व्याख्यां पञ्चशिखस्य च ।
भावागणेशः कुरुते तत्त्वयाथार्थ्यदीपनम्'' [92] इति ॥

## [४] जैगीषव्यः

अस्य जैगीषव्यस्य कपिलादीनां मध्ये परिगणनं महाभारते दृश्यते । यथा—

जैगीषव्यस्यासितस्य देवलस्य मया श्रुतम् ।
पराशरस्य विप्रर्षेः वार्षगण्यस्य धीमतः ॥ '' [93]

इति । साङ्ख्यप्रक्रियाभिमतशीलविषयमधिकृत्य जैगीषव्यस्यासितेन साकं संवादः महाभारते वर्णितः ।[94] अश्वघोषस्य बुद्धचरिते अराडकलामवाचा जैगीषव्य–जनक-पराशराणां सांख्यसाधनेन मुक्तिर्वर्णिता । यथा—

''जैगीषव्योऽथ जनकः वृद्धश्चैव पराशरः ।
सांख्यं पन्थानमासाद्य मुक्ताश्चान्ये च मोक्षिणः ॥'' इति ॥

## [५] वार्षगण्यः

अयं च सांख्ययेयोगयोराचार्यः इत्यत्र इदानीमेव महाभारतोक्तिरुदाहृता । इममेवाभिप्रायं वाचस्पतिरप्याह भामतीग्रन्थे । यथा—

''अत एव योगशास्त्रं व्युत्पादयिता आह स्म
भगवान् वार्षगण्यः ।''[97] इति ।

प्रायेणायं परिणामवादिषु वेदान्तिष्वेव गण्यते इति प्रो॥ हिरियण्णाप्रभृतयः आहुः ।[98] योगसूत्रव्यासभाष्ये वाचस्पतिमिश्रटीकायां च एत द्वाक्यानिकतिचन उद्धृतानि । यथा—

''मूर्तिव्यवधिजातिभेदाभावात नास्ति मूल-
पृथक्त्वम्'' इति वार्षगण्यः ॥[99] इति,
''गुणानां परमं रूपं न दृष्टिपथमृच्छति ।
यत्तु दृष्टिपथं प्राप्तं तन्मायेव सुतुच्छकम् ॥

---

[92] भावागणेशीयतत्त्वया थार्थ्यदीपनम् 1

[93] महाभारते-शान्ति 323-9

[94] महाभारते-शन्ति 236

[95] बुद्धचरितम् 12-67

[96] महाभारते शां 323-9

[97] ब्रह्मसूत्रभाष्यभामती 2-1-3

[98] J.O.R. Madras III. II.

[99] योगभाष्यम -3 53

इति वार्षगण्यः ॥[100] इति,

"पञ्चपर्वाविद्या इत्याह स्म भगवान् वार्षगण्यः"[101] इति च। गौडपाद-भाष्ये माठरवृत्तौ च उल्लिखितम्—

"पुरुषाधिष्ठितं प्रधानं प्रवर्तते ।" [102]

इति वाक्यम्, वार्षगण्यस्यैवेति डा॥ 'कीत' महाशयस्याभिप्रायः।वसुबन्धुजीवनचरित्रप्रणेता परमार्थस्तु-अयं वार्षगण्यः विन्ध्यवासिनः आचार्यः इत्याह ॥[103]

## [६] विन्ध्यवासी

अस्य च न कोऽपि ग्रन्थः इदानीं लभ्यते। परं तु मीमांसायोगशास्त्र-बौद्धग्रन्थेषु अस्य नामोल्लिखितं दृश्यते। यथा—

"सन्दिह्यमानसद्भाववस्तुबोधात् प्रमाणतः।
विशेषदृष्टमेतच्च लिखितं विन्ध्यवासिना ॥"[104]
"अन्तराभवदेहस्तु निषिद्धो विन्ध्यवासिना।
तदस्तित्वे प्रमाणं हि न किञ्चिदवगम्यते ॥"[105]
"तेन नात्यन्तभिन्नोऽर्थः सारूप्यमिति वर्णितम्।
ग्रन्थे विन्ध्यनिवासेन भ्रान्तैः सादृश्यमुच्यते ॥[106]
"सत्त्वतप्यत्वमेव पुरुषतप्यत्वम इति विन्ध्यवासी।"[107]
• "मनसः त्रिविधो भावः इति। वैशेषिकादिदृशि मनस्संयोगजः य आत्मनः स मनसः इत्युक्तः। कपिलदृशि तु विन्ध्यवासिनो मनस एव" [108] इति अभिनवगुप्तीयनाटयशास्त्रव्याख्यायाम्,

"सांख्या अपि केचिन्नान्तराभवमिच्छन्ति
विध्यवासप्रभृतयः" [109]

इति मानवे मेधातिथिभाष्ये,

"विन्ध्यवासी त्वेवं भोगमाचष्टे।
पुरुषोऽविकृतात्मैव स्वनिर्भासमचेतनम्।

[100] योगभाष्यम् 4-13
[101] तत्त्वकौमुदी 47 का
[102] माठरवृत्तिः 17 का.
[103] J.R.A.S. 1905
[104] श्लोकवार्तिके अनु 143
[105] श्लोकवार्तिके आत्मवादे 62
[106] „ आकृति 75
[107] भोजवृत्तिः योगसूत्रम् 4-23
[108] अभिनवगुप्तव्याख्या 12-32
[109] मनुस्मृतिव्याख्या 1-55

मनः करोति सांनिध्यात् उपाधिः स्फटिकं यथा ॥[110]

इति स्याद्वादमञ्जर्याम्, एवं कमलशीलेन तत्त्वसग्रहव्याख्यायां [111] च विन्ध्य वासिनोऽभिप्रायाः निरूपिताः ॥ विन्ध्यवास्यर्यं ईश्वरकृष्ण एवेति डा ॥ 'तकूकुसु डा ॥ 'कीत्' आभ्यां निरूपितम् । [112] परं तु इदं असङ्गतमिति--

"कपिलदृशि तु विन्ध्यवासिनो मनसः । ईश्वर
कृष्णादिमते मनश्शब्देनात्र श्रोत्रस्येत्यादिकं
विषयग्रहणक्रियास्वभीष्टविषयत्वे मिश्रयितव्यम्" ॥[113]

इत्यनेन अभिनवगुप्तवाक्येन, एवं मणिभद्रकृतषड्दर्शनसमुच्चयव्याख्यया-वगम्यते । [114] "तेन नात्यन्तभिन्नोऽर्थः"[115] इत्यादिकुमारिलवाक्यात् "सांख्या अपि केचित् नान्तराभवमिच्छन्ति विन्ध्यवासप्रभृतयः" [116] इति मेधातिथि-वाक्याच्च "विन्ध्यवास एवान्यः, विन्ध्यवासी चान्यः" इति डा ॥'कीत' मतमपि असङ्गतमेव । उभयोः पर्यायत्वात् ।

"अथ व्याडिः विन्ध्यनिवास्यपि ।
नन्दिनीपुत्रपर्यायः ।" [117]
"अथ व्याडिः विन्ध्यवासी नन्दिनीतनयश्च सः" ॥[118]
"अथ व्याडिर्विन्ध्यस्थः नन्दिनीसुतः, मेधावी च" ॥[119]

इत्यादयः कोशास्तु व्याडिमेव विन्ध्यवासिनमभिप्रयन्ति ॥ असौ च बुधमित्रं निर्जित्य विन्ध्ये उवासेति परमार्थग्रन्थात् ज्ञायते ।[120]

"यदेव दधि तत् क्षीरं यत् क्षीरं तत् दधीति च ।
वदता रुद्रिलेनैव व्यापिता विन्ध्यवासिना" ॥[121]

इति कमलशीलपञ्जिकावाक्यात अस्य रुद्रिलः इति नामान्तरं चासीदिति ज्ञायते । अस्य कालविषये- अयं क्रिस्तपूर्वं द्वितीयतृतीयशताब्दयोर्मध्ये आसीत् इति M. R. कविराह ।[122] प्रो ॥ ध्रुवः बि.भट्टाचार्यश्च क्रिस्तशकाब्दे तृतीयशताब्दयामासीदित्यूचतुः ॥ [123]

---

[110] स्याद्वादमञ्जरी p. 97 422, 423
[111] तत्त्वसङ्ग्रहः p. 22,
[112] J.R.A.S. 1905 p. 47-52
[113] नाट्यशास्त्रव्याख्या 12-32
[114] षड् दर्शनसमुच्चयव्याख्या
[115] श्लोकवार्तिकम् आकृतिपादः
[116] मनुस्मृतिव्याख्या 1-55
[117] केशवीयकल्पद्रुमकोशः ।
[118] हेमकोषः ।
[119] पुरुषोत्तमीयत्रिकाण्डशेषः ।
[120] J.R.A.S. 1905
[121] तत्त्वसंग्रहः p. 22
[122] J.A.R.S.II. 2. 1927. p. 130
[123] जर्नल् अफ् इन्डियन् हिस्ट्री II 36

## (७) ईश्वरकृष्णः

अयं च कः ? कुतस्त्यः ? इत्यादि सर्वं अज्ञातमेव वर्तते । ग्रन्थादौ च स्वगुरोर्नाम वा मङ्गलं वा न कृतमनेन । असौ 'पञ्चशिखशिष्यः मुनिः' इति नारायणतीर्थकृततात्पर्यचन्द्रिकातो ज्ञायते । सांख्यतत्त्वप्रदीपकर्ता कविराजयतिस्तु एनमेव "उक्तं च साङ्ख्यमूलकारेण" [124] इति वदन् साङ्ख्यदर्शनमूलकारं मनुते । ईश्वरकृष्णः कालिदासश्चेत्यभिन्नाविति कौमुदीप्रभाकर्ता स्वप्नेश्वरः आह । यथा—

ईश्वरकृष्णनाम्ना कालिदासेन कृताः कारिकाः । [125] इति । 'अस्य गुरोः देवलः इति नाम' इति श्री बेल्वल्कर् महाशय आह । [126] कौशिकवंश्योऽयं इति चीनापरम्परासु प्रसिद्धः । [127] अस्य कालविषये— A. D. पञ्चमशताब्दीति डा ॥ 'तकुकुसुः' ।[128] तृतीयचतुर्थयोर्मध्यकालः इति डा ॥ 'कीत्' ।[129] द्वितीयशताब्दयाः उत्तरार्धमिति डा ॥ बेल्वल्कर् । [130] अनुयोगद्वारसूत्रानुसारेण क्रिस्तपूर्वकालीनोऽयमिति डा । । गोपीनाथकविराजः[131] इति ॥

अनेन रचिताः साङ्ख्यकारिकाः प्रसिद्धाः अत्रापि अन्ते ससरलानुवादं संयोजिताः ॥

## [८] साङ्ख्यनायको माधवः

अनेन बहवो ग्रन्थाः रचिताः इति भाति । उम्बेकरचितश्लोकवार्तिकव्याख्यायाम्—

"सांख्यनायकमाधवस्त्वाह- विहायानुमानादीन् विधिप्रतिषेधनिबन्धनत्वमेव धर्माधर्मयोरवलम्ब्य अग्नीषोमीयादिषु अधर्मतामाह" [132] इति एतन्नाम्नः उल्लेखः दृश्यते । सांख्यकारिकाव्याख्याऽप्यनेन कृतेति भाति । अस्य कालस्तु कुमारिलादर्वाचीनः शबरस्वामिनस्तु प्राचीनः(A.D.400-500)

---

124 सांख्यसंग्रहः p. 126
125 कौमुदीप्रभा
126 भण्डारकरकमिमरेषन् वाल्युम p. 17
127 जयमङ्गलाभूमिकायाम् ।
128 J.R.A.S. 1905 p. 47-52
129 कीत्-सांख्यासिस्टम् 2-43
130 भण्डारकरकमिमरेषन् I. p. 178
131 जयमङ्गलाभूमिका p. 8
132 श्लोकवार्तिकव्याख्या

## [९] माठराचार्यः

माठर इति नेदं व्यक्तिनाम, किन्तु पक्षिलस्वामिनो वात्स्यायननामेव केवलं कुलनामेति पण्डितः तनुसुखाराम आह ।[133] "कानिष्कस्य राज्ञः गुरुः अश्वघोषः, चरकः भिषक्, प्रधानामात्यो माठरः" इति चीनादेशीय–विमर्शकाः । अनेनैव सांख्यकारिकाणां प्रथमा व्याख्या कृता । तमिलुभाषा–ग्रन्थे शिलप्पधिकारनाम्नि कश्चन माठरः श्रूयते, स च अस्मादन्यः । स हि पशुवधान्निवृत्तः अहिंसाप्रियः सन् चेरराजं तुष्टावेति कथा क्रिस्तशक 557-568 मध्यकाले अस्येयं कारिकाव्याख्या चीनाभाषायां परमार्थेनानूदिता ।[134] अस्य च कालः क्रिस्तशकद्वितीयतृतीयशताब्दयोर्मध्यकालः इति विमर्शकाः ॥

## [१०] गौडपादः

शङ्करभगवत्पादानां परमगुरुरयं माण्डूक्यकारिकाः चकार । सांख्य कारिकाव्याख्याऽपि, 'गौडपादभाष्यम्' इति नाम्ना प्रसिद्धैव वर्तते । अस्मादन्यः कश्चन गौडपादः विद्यते, यः उत्तरगीताऽनुगीतयोः भाष्यं चकार । श्रीविद्यासूत्रस्य शक्तिमीमांसायाश्चापि कर्ता अमीभ्योऽन्योऽपि कश्चन गौडपादः प्रतीयते । एषु चतुर्षु सांख्यव्याख्याकृद्गौडपादः कः ? इति निर्णेतुं वा, तद्देशकालौ सुदृढं निर्णेतुं वा न पारयामः ॥ सामान्यतः अस्य कालः क्रिस्तशके षष्ठशताब्दीति वक्तुं परं शक्यते ॥

## (११) वाचस्पतिमिश्रः

मैथिलोऽयं त्रिलोचनाख्यस्य गुरोः शिष्यः इति तु–

"त्रिलोचनगुरून्नीतमार्गानुगमनोन्मुखैः ।
यथामानं यथावस्तु व्याख्यातमिदमीदृशम् ॥"[135]

इति वचनेन न्यायवार्तिकतात्पर्यटीकास्थेन ज्ञायते ।

नृगराजाभ्यर्थनानुसारेण शाङ्करब्रह्मसूत्रभाष्यव्याख्या भामती विरचिता अनेनेति तदीयमङ्गलश्लोकादेव ज्ञायते यथा—

नरेश्वराः यच्चरितानुकारं
इच्छन्ति कर्तुं न च पारयन्ति ।

---

[133] माठरवृत्तिभूमिका P.S.

[134] भण्डरकरकमिमरेषन् वाल्युम् p. 172

[135] न्यायवार्तिकतात्पर्यटीकायाम् 1-1-4 p. 133

तस्मिन् महीपे महनीयकीर्तौ
श्रीमन्नृगेऽकारि मया निबन्धः ॥[136]

इत्युक्तम्। अन्यत्र च 'न चाद्यापि न दृश्यन्ते लीलामात्रविनिर्मितानि महाप्रासादप्रमदवनानि श्रीमन्नृगनरेन्द्राणामन्येषां मनसाऽपि दुष्कराणि नरेश्वराणाम् ॥ "[137] इत्युक्तम्।
एतत्कालविषये कस्या अपि चर्चाया अवकाश एव नास्ति। यतः—

"न्यायसूचीनिबन्धोऽसौ अकारि सुधियां मुदे।
श्रीवाचस्पतिमिश्रेण वस्वङ्कवसु (898) वत्सरे" ॥[138]

इति स्वयमेव स्वकीयं कालं निर्दिशति ॥ एवं चायं नवमशताब्दीय एव ॥ भामती-तात्पर्यटीका-तत्त्ववैशारदीग्रन्थेषु दृष्टैः मङ्गलश्लोकैः अयं शैव इति ज्ञायते यथा—

"शाश्वताय नमस्कुर्मो वेदाय च भवाय च।"[139]
विश्वव्यापी विश्वशक्तिः पिनाको
विश्वेशानो विश्वकृद्विश्वमूर्तिः" ॥[140]
"नमामि जगदुत्पत्तिहेतवे वृषकेतवे ॥ [141]

इति। अथापि देवतान्तरेष्वपि अस्य भक्तिभावः तत्रतत्रत्यैः वाक्यैः अस्तीत्येव ज्ञायते। सर्वतन्त्रस्वतन्त्रोऽयं अनेकदर्शनग्रन्थव्याख्यातेति च तदीयवाक्यादेव ज्ञायते। यथा—

"यन्न्यायकणिका तत्त्वसामीक्षा-तत्त्वबिन्दुभिः।
यन्न्यायसांख्ययोगानां वेदान्तानां निबन्धनैः। [142]

इत्यादिपद्यानि दृश्यन्ते।

एवं चतत्कृताः ग्रन्थाः- साङ्ख्ये-साङ्ख्यतत्त्वकौमुदी, योगे-तत्त्ववैशारदी, अद्वैते-भामती, ब्रह्मतत्त्वसमीक्षा च, मिमांसायाम् तत्त्वबिन्दुः, न्यायकणिका

---

136 भामती 1-1-1
137 भामती 2-1-33
138 न्यायसूचीनिबन्धे समाप्तिवाक्यम
139 भामतीमङ्गलश्लोकः
140 तात्पर्यटीकामङ्गलश्लोकः
141 तत्त्ववैशारदीमङ्गलश्लोकः
142 भामती श्लोकः 3.

च ; न्याये—न्यायवार्तिकतात्पर्यटीका, न्यायसूचीनिबन्धनं चेति । वेदान्तादिषु च- वेदान्ततत्त्वकौमुदी, ब्रह्मतत्त्वसंहितोद्दीपनी, युक्तिदीपिका चेति अपर ग्रन्थत्रितयं चानेन कृतमिति Dr. 'Aufrechit' महाशयः वदति ॥ [143]

## [१२] शङ्कराचार्यः

भगवत्पादशङ्कराचार्यादन्योऽयं साङ्ख्यकारिकायाः जयमङ्गलानाम्नीं व्याख्यां रचितवान्। यद्यपि जयमङ्गलाव्याख्यासमाप्तिवाक्येषु अस्य परमहंसपरिव्राजकाचार्यत्वम्, गोविन्दभगवत्पादशिष्यत्वम्, भगवत्पादत्वं च विशेषितं दृश्यते । अथापि नासौ सः, किन्तु केरलीयपय्यूरुवंशस्थः कश्चन तत्समाननामेति ज्ञायते । मातृकासु च" पय्यूरु भगवत्पादकृतम्' इत्येव दृश्यते । [144] अस्य च कालः A.D. 1400.

अनेन च- साङ्ख्यसप्ततिव्याख्या जयमङ्गला, योगसूत्रभाष्यविवरणम्, शाबरभाष्यव्याख्या-भाष्यप्रदीपः, कामन्दकीयनीतिसारव्याख्या जयमङ्गला चेति चत्वारः ग्रन्थाः विरचिताः ॥

[अनेन च शङ्कराचार्येण साङ्ख्यसिद्धान्तः एवं सुसंक्षेपेण निरूपितः— यथा— "साङ्ख्यशास्त्रं द्विधाभूतं सेश्वरं च निरीश्वरम्। चक्रे निरीश्वरं साङ्ख्य कपिलोऽन्यत पतञ्जलिः। कपिलो वासुदेवः स्यात् अनन्तः स्यात् पतञ्जलिः। योगी कपिलपक्षोक्तं तत्त्वज्ञानमपेक्षते॥ श्रुतिस्मृतीतिहासेषु पुराणे भारता-दिके। साङ्ख्योक्तं दृश्यते स्पष्टं तथा शैवागमादिषु। व्यक्ताव्यक्तविवेकेन पुरुषस्यैव वेदनात। दुःखत्रयनिवृत्तिः स्यात् एकान्तात्यन्ततो नृणाम् ॥ दुःखमा-ध्यात्मिकं चाधिभौतिकं चाधिदैविकम्। आध्यात्मिकं मनोदुःखं व्याधयः पिटकादयः। आधिभौतिकदुःखं स्यात् कीटादिप्राणिसम्भवम्। वर्षातपादि-सम्भूतं दुःखं स्यादाधिदैविकम। एकान्तात्यन्ततो दुःखं निवर्तेतात्मवेदनात्। उपायान्तरतो मोक्षः क्षयातिशयसंयुतः। न चौषधैः न यागाद्यैः स्वर्गादि-फलहेतुभिः। त्रैगुण्यविषयैर्मोक्षः तत्त्वज्ञानादृते परैः। पञ्चविंशतितत्त्वानि

---

[143] Cataloges Catalogarum vol. 1. p. 560

[144] स्फोटसिद्धिभूमिकायां S.K. रामनाथशास्त्रिभिः उट्टङ्कितम्।

***

व्यक्ताव्यक्तादिकानि यः। वेत्ति तस्यैव विस्पष्टं आत्मज्ञानं भविष्यति ॥ पञ्चविंशतितत्त्वज्ञः यत्र कुत्राश्रमे वसेत्। जडी मुण्डी शिखीवाऽपि मुच्यते नात्र संशयः ॥

पञ्चविंशतितत्त्वानि पुरुषः प्रकृतिर्महान्। अहङ्कारश्च शब्दश्च स्पर्शरूपरसास्तथा। गन्धः श्रोत्रं त्वक् च चक्षुः जिह्वा घ्राणं च वागपि। पाणिः पादस्तथा पायुः उपस्थश्च मनस्तथा। पृथिव्यापस्तथा तेजः वायु-राकाशमित्यपि। सृष्टिप्रकारं वक्ष्यामि तत्त्वात्मकमिदं जगत्। सर्वं हि प्रकृतेः कार्यं नित्यैका प्रकृतिर्जडा। प्रकृतेः त्रिगुणावेशात् उदासीनोऽपि कर्तृवत्। सचेतनावत्तद्योगात् सर्गः पंग्वन्धयोगवत्। प्रकृतिः गुणसाम्यं स्यात् गुणाः सत्त्वं रजस्तमः। सत्त्वोदये सुखं प्रीतिः शान्तिर्लज्जाऽङ्गलाघवम्। क्षमाधृतिरकार्पण्यं दमो ज्ञानप्रकाशनम्। रजोगुणोदये लोभः सन्तापः कोपविग्रहौ ॥ अभिमानो मृषावादः प्रवृत्तिर्दम्भ इत्यपि। तमोगुणोदये तन्द्री मोहो निद्राऽङ्गगौरवम्। आलस्यमप्रबोधश्च प्रमादश्चैवमादयः ॥

प्रकृतेः स्यान्महांस्तस्मात् अहङ्कारस्ततोऽप्यभूत्। तन्मात्राख्यानि पञ्च स्युः सूक्ष्मभूतानि तानि हि। वाक्पाणिपादसंज्ञानि पायूपस्थौ तथैव च। शब्दः स्पर्शः तथा रूपं रसो गन्ध इतीरिताः। खवाय्वग्न्यम्बुपृथ्व्यः स्युः सूक्ष्मा एव न चापरे। पटः स्यात् शुक्लतन्तुभ्यः शुक्ल एव यथा तथा। त्रिगुणानुगुणं तस्मात् तत्त्वसृष्टिरपि त्रिधा। सत्त्वात्मकानि सृष्टानि तेभ्यो ज्ञानेन्द्रियाण्यथ। श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणमित्यत्र पञ्चकम्। तैः शब्दस्पर्शरूपाणि रसगन्धौ प्रवेत्त्यसौ। रजोगुणोद्भवानि स्युः तेभ्यः कर्मेन्द्रियाण्यथा वाक्पाणिपादसंज्ञानि पायूपस्थौ तथैव च। वचनादानगमनविसर्गानन्दकर्म च। मनोऽन्तः-करणाख्यं स्यात् ज्ञेयमेकादशेन्द्रियम्। तमोगुणोद्भवान्येभ्यः महाभूतानि जज्ञिरे। पृथिव्यापस्तथा तेजः वायुराकाश इत्यपि। पञ्चविंशतितत्त्वानि प्रोक्तान्येतानि वै मया। एतान्येव विशेषेण ज्ञातव्यानि गुरोर्मुखात् ॥

आत्मानः प्रलये लीनाः प्रकृतौ सूक्ष्मदेहिनः। गुणकर्मवशात् ब्रह्मस्था-वरान्तस्वरूपिणः। प्रकृतौ सूक्ष्मरूपेण स्थितमेवाखिलं जगत्। अभिव्यक्तं भवत्येव नासदुत्पत्तिरिष्यते। असदुत्पत्तिपक्षे च शशशृङ्गादि संभवेत्। असत्तैलं तिलादौ चेत् सिकताभ्योऽपि तद्भवेत्। जनितं जनयेच्चेति यस्तु दोषस्त्वयेरितः। अभिव्यक्तिमते न स्यात् अभिव्यञ्जककारणैः। आत्मनः

बहवः माध्याः देहे देहे व्यवस्थिताः। एकश्चेद्युगपत्सर्वे म्रियेरन् संभवन्तु वा। पश्येयुर्युगपत्सर्वे पुंस्येकस्मिन् प्रपश्यति। अतः स्यात् आत्मनानात्वं अद्वैतं नोपपद्यते।

आत्मा ज्ञातव्य इत्यादिविधिभिः प्रतिपादितः। निवृत्तिरूपधर्मः स्यात् मोक्षदोऽन्यः प्रवर्तकः। अग्निष्टोमादयो यज्ञाः काम्याः स्युः विहिता अपि। प्रवृत्तिधर्मास्ते ज्ञेयाः यतः पुंसां प्रवर्तकाः। धर्मेणोर्ध्वगतिः पुंसां अधर्मात् स्यादधोगतिः। ज्ञानेनैवापवर्गः स्यात् मन्त्रार्थस्यान्यथाकृतेः। तस्माद्यागादयो धर्माः संसारेषु प्रवर्तकाः। निषिद्धेभ्योऽपि कर्तव्याः पुंसां सम्पत्तिहेतवः॥" इति॥]

## [१३] अनिरुद्धः

सांख्यसूत्रव्याख्यासु अस्यैव वृत्तिः प्राचीनतमा। एतदङ्गीकृताः सूत्रपाठाः विज्ञानभिक्षुणा स्वीयव्याख्यायां उद्धृताः।[145] अस्य कालः– A.D. 1503.

## [१४] विज्ञानभिक्षुः

सम्यक् परिशील्यमाने अयमेव साङ्ख्यप्रवर्तकेषु अन्तिमः इति वक्तुं शक्यते। नैतादृशः प्रतिभाशाली इतः परं कश्चनाजनिष्ट। क्रिस्तशकषोडशशताब्दीयोऽयं वाराणस्यामासीदिति ज्ञायते। भिक्षूपपदोऽप्यसौ न बौद्धः, नापि दशनामीसम्प्रदायानुगतः संन्यासी वा। बौद्धस्सन् कुतो वा शाङ्कराद्वैतं विमृशेत ? नासौ तावदनुवृत्तसांख्यसम्प्रदायागतसर्वप्रक्रियास्वपि निष्ठावान्। स्वतन्त्रोऽयं विमर्शदृष्टिः श्रुतिस्मृतीतिहासपुराणादिभारतीयसकलाध्यात्मिकग्रन्थानुसारी, औपनिषदेऽर्थे अत्यन्तश्रद्धावान् साङ्ख्यवेदान्तयोः सुन्दरं समन्वयं चकार, निरीश्वराः सांख्याः इत्यपप्रथां च यावच्छक्यं परिममार्ज। श्रीभावागणेशदीक्षितः, प्रसादमाधवयोगी, दिव्यसिंहमिश्रश्चेति त्रयोऽप्यमी अस्यैवान्तेवासिनः। सांख्यतत्त्वानां विचारणेन सिद्धान्तप्रतिपादनावसरे सर्वत्र च प्रायशः श्रुतिवाक्यान्येव प्रमाणीकृतवान्॥

---

[145] सांख्यसूत्रभूमिका डा गार्बे॥ विरचिता।

अनेन– सांख्यप्रवचनभाष्यम्, सांख्यसारः, योगवार्तिकम्, योगसारः, ब्रह्मसूत्रविज्ञानामृतभाष्यम, ईश्वरगीताभाष्यम, भगवद्गीताटीका; प्रश्नोपनिषदः कठोपनिषदः मैत्रेयोपनिषदः, कैवल्योपनिषदः, मुण्डकोपनिषदः माण्डूक्योपनिषदश्च एवं श्वेताश्वतरोपनिषदश्च आलोकाख्या व्याख्या अपि कृताः। अनेन उपदेशरत्नमालाऽख्योऽपि कश्चन ग्रन्थः कृतः इति ज्ञायते ॥

## [१५] भावागणेशदीक्षितः

भवानीविश्वनाथयोः पुत्रोऽयं विज्ञानभिक्षुशिष्यः। अयं स्वकीयां विज्ञानभिक्षुशिष्यतां स्वीयतत्त्वयाथार्थ्यदीपने, एवं स्वयमेव चित्रयामास। यथा- "कपिलासुरिपञ्चशिखान् गुरून् विज्ञानाचार्यवर्यांश्च" इति। अथ प्रबोधचन्द्रोदयव्याख्यायां स्वकीयं वृत्तं एवं प्रकटीकृतवान। यथा-

"आसीद् भावोपनामा भुवि विदितयशाः रामकृष्णोऽतिविज्ञः
तस्मात गौर्यां विनीत. विविधगुणनिधिः विश्वनाथोऽवतीर्णः।
तस्मात् प्रख्यातकीर्तेः विविधमखकृतः प्रादुरासीद्भवान्यां
श्रीमत्यां यो गणेशः भुवि विदितगुणः तस्य चिच्चन्द्रिकाऽस्तु ॥ इति ॥

अयं च क्रिस्तशकषोडशशताब्दीयः। अनेन तत्त्वयाथार्थ्यदीपनम्, योगानुशासनसूत्रवृत्तिः योगदीपिकानाम्नी, चिच्चन्द्रिका प्रबोधचन्द्रोदयटीका, तत्त्वप्रबोधिनी तर्कभाषाटीका चेतीमे ग्रन्थाः रचिताः। अस्य पुत्र एव श्रीधरः प्रकृतसांख्यदीपिकाकर्ता स्वपितरं एनं मध्ये स्मरति च ॥[146] यथा– "आसां विशेषलक्षणानि पित्रुक्तयोगवृत्तौ अनुसन्धेयानि" इति ॥

## [१६] श्रीधरः

अयमेव प्रकृतसांख्यदीपिकाग्रन्थरचयिता। अयं च भावागणेशात्मजः विज्ञानभिक्षुरचितसांख्यसूत्रभाष्यानुगुणां सुसंक्षिप्तां इमां सूत्रवृत्तिं रचयामास। अयं च क्रिस्तशकषोडशशताब्दीय एव। एतत्कृतः नान्यः कश्चन ग्रन्थः समुपलभ्यते ॥

---

[146] सांख्यप्रवचनभाष्यभूमिका डा ॥ गार्बेविरचिता अत्र द्रष्टव्या।

## [१७] महादेवसरस्वती

अस्य गुरुः स्वयंप्रकाशयतिः। तेनैवास्य वेदान्तीति बिरुदं दत्तमिति बुधमनोहराख्यायां अमरकोशव्याख्यायां स्वयमेव वदति। अस्य कृतिषु विज्ञानभिक्षोः प्रभावः दृश्यते इति, ततोऽप्यर्वाचीनोऽयम्। प्रायः सप्तदश-शताब्दी अस्य कालः इति ज्ञायते। अनेन-सांख्यसूत्रवृत्तिः, अद्वैतकौस्तुभम्, तत्त्व-चन्द्रिका, तत्त्वानुसन्धानम्, बुधमनोहरा, विष्णुसहस्रनामटीका, इत्येते ग्रन्थाः विरचिताः॥

## [१८] स्वप्नेश्वरः

अस्य पिता वाहिनीशः, भ्राता विद्यानिवासभट्टाचार्यः॥ विद्यनिवासभट्टा-चार्यस्यैव सुतः विश्वनाथपञ्चाननः कारिकावलीसिद्धान्तमुक्तावल्यादिग्रन्थकर्ता। विश्वनाथकालानुसारेण असावपि A.D. 1635 तमे वत्सरे आसीदिति ज्ञायते। अनेन सांख्यतत्त्वकौमुदीव्याख्या कौमुदीप्रभा विरचिता। शाण्डिल्यभक्तिसूत्रव्याख्याता स्वप्नेश्वरस्तु अन्य एवेत्याहुः॥

## [१९] रघुनाथतर्कवागीशभट्टाचार्यः

पार्वती-शिवरामचक्रवर्तिनोः पुत्रोऽयम्। मथुरेशः अस्य भ्राता। अयं मथुरेश एव अमरकोशव्याख्याकारः अयं। सप्तदशशताब्दयामासीत्। अनेन च-सांख्यतत्त्वकौमुदीव्याख्या-सांख्यतत्त्वविलासः, आगमतत्त्वविलास-श्चेत्युभौ ग्रन्थौ विरचिताविति ज्ञायते॥

## [२०] नारायणतीर्थः

महाविद्वान् अयं वासुदेवतीर्थपुत्रः रामगोविन्दतीर्थशिष्यश्च। अयं अद्वैतसिद्धिव्याख्यातुः श्रीमतः ब्रह्मानन्दसरस्वतीतिप्रसिद्धस्य गुरुः। यतः ब्रह्मा-नन्दसरस्वत्येवाह स्वग्रन्थादौ–

"श्रीनारायणतीर्थानां षट्शास्त्रीपारमीयुषाम्।" इति। अस्य कालः अष्टादशशताब्दी। अनेन– सांख्यतत्त्वकौमुदीव्याख्या तत्त्वचन्द्रिका, सांख्यकारिकाव्याख्या सांख्यचन्द्रिका, योगसूत्रवृत्तेः गूढार्थद्योतनिका गूढार्थचन्द्रिका; वेदान्तविभावनाटीका, सिद्धान्तबिन्दुलघु–गुरुटीके, कुसुमाञ्ज-लिव्याख्या, रघुनाथकृतदीधितिव्याख्या, न्यायसिद्धान्तमुक्तावलीव्याख्या, भक्त्यधिकारनाममालाः, भक्तिसूत्रव्याख्या, भक्तिचन्द्रिका, वेदस्तवटीका चेत्येते ग्रन्थाः कृताः॥

## (२१) राघवानन्दसरस्वती

अद्वयानन्दभगवत्पादशिष्योऽयं अष्टादशताब्दया आदिभागे आसीत्। अनेन–सांख्यतत्त्वकौमुदीव्याख्या तत्त्वार्णवः तत्त्वामृतप्रकाशः, मीमांसासूत्रार्थबोधिनी चैत्येतौ ग्रन्थौ विरचितौ॥

## (२२) नागेशः (नागोजिभट्टः)

भट्टोजिदीक्षितस्य पुत्रोऽसौ शृङ्गवेरपुराधीशस्य राज्ञः रामसिंहस्याऽऽस्थानेआसीदिति तदीयपद्यैरेव ज्ञायते। अयमपि अष्टादशशताब्दया आदिभागकालीनः। अनेन च लघुसांख्यवृत्तिः योगशास्त्रवृत्तिः, काव्यप्रकाश-कुवलयानन्द-रसगङ्गाधर–रसतरङ्गिणी—रसमञ्जर्यादिग्रन्थानां व्याख्याः, शब्देन्दुशेखर–मञ्जूषादिव्याकरणग्रन्थाः, वाल्मीकिरामायण-अध्यात्मरामायण-सप्तशती–गीतगोविन्द-सुधालहरीप्रभृतिग्रन्थानां व्याख्याः, पञ्चदशाधिकधर्मशास्त्र-ग्रन्थाश्च रचिताः॥

## (२३) विश्वेश्वरदत्तमिश्रः

अयं विद्यारण्यतीर्थस्यान्तेवासी। देवतीर्थस्वामीति अस्य संन्यासाश्रमनाम। स्ववाचालत्वनियन्त्रणार्थं स्वीयां जिह्वां काष्ठेन बबन्धेति 'काष्ठजिह्वा' इत्यपि नामान्तरमस्य। एकोनविंशशताब्दयाः आदिभागे अयमासीत्। सांख्यतरङ्गः, योगतरङ्गश्च अनेन कृताविति ज्ञायते॥

## (२४) तारानाथतर्कवाचस्पतिः

अयं दयानन्दसमानकालीनः महाविद्वान्। A.D 1825-1900 काले आसीत। अनेन सांख्यतत्त्वकौमुदीवृत्तिः, शब्दार्थरत्नम्, धातुरूपादर्शः, तुलादानपद्धतिः, बहुविवाहवादः, गयाश्राद्धादिपद्धतिः, गायत्रीव्याख्या, दशकुमारचरितव्याख्या, विक्रमोर्वशीयव्याख्या, वेणीसंहारव्याख्या, मुद्राराक्षसटीका, सिद्धान्तबिन्दुसारः इत्यादीनि बहूनि ग्रन्थरत्नानि विरचितानि॥

## (२५) पञ्चाननतर्करत्नाख्यः

अनेन सांख्यकारिकाव्याख्या पूर्णिमा, द्वैतोक्तिरत्नमाला, ब्रह्मसूत्रशक्ति-भाष्यम्, वैशेषिकसूत्रपरिष्कारः, अमरमङ्गलम्-इत्यादयो ग्रन्थाः कृताः। अयं विंशतितमशताब्दयाः आदिभागे आसीत्॥

[२६] हरिहरानन्द आरण्यः

समीपकाले शान्तलपर्गणास्प्रदेशे अयं तपस्यन् आसीत इति ज्ञायते। अनेन-सांख्यतत्त्वालोकः, सांख्यसूत्रव्याख्या, योगसूत्रव्याख्या-इत्यादयो ग्रन्थाः रचिताः ॥

[२७] अनन्तभट्टः

अनेन-सांख्यसूत्रप्रदीपिकानामा ग्रन्थः कृतः ॥

[२८] भट्टकेशवः

अयं सदानन्दपुत्रः। अनेन सांख्यार्थतत्त्वप्रदीपिकाग्रन्थः विरचितः ॥

[२९] बोधभारती

अयं बोधायनयतिशिष्यः। अनेन सांख्यतत्त्वकौमुदीविवरणं कृतम ॥

[३०] भवदेवः

अनेन-सांख्यकारिकाव्याख्या कृता ॥

[३१] ज्ञानामृतयतिः

अयं उत्तमामृतयतिशिष्यः। सांख्यसूत्रटीका अनेन विरचिता। एवं ऐतरेय-तैत्तिरीयोपनिषद्भाष्ययोः टीका, नैष्कर्म्यसिद्धिटीका च कृता ॥

[३२] हरिभट्टः

अनेन-सांख्यसूत्रवर्तिकम, ईशावास्योपनिषद्व्याख्या च कृता ॥

[३३] कविराजयतिः

अयं वैकुण्ठयतिपुत्रः। सांख्यतत्त्वप्रदीपः अनेन कृतः ॥

[३४] कुलमुनिः

अनेन-सांख्यकारिकाव्याख्या, नीतिप्रकाशः, समासार्णवश्चेत्येते ग्रन्थाः विरचिताः ॥

[३५] महादेवाश्रमः

अयं विश्वनाथाश्रमगुरुः। सांख्यकारिकाव्याख्या, तर्कदीपिका च अनेन विरचितौ ग्रन्थौ ॥

[३६] रामकृष्णभट्टाचार्यः

अनेन-सांख्यकौमुदी, सांख्यसारः, स्मृतिकौमुदी, गृह्यागकौमुदी इत्येते ग्रन्थाः विरचिताः ॥

### [३७] श्रीकृष्णमित्रः

अयं रामसेवकसूनुः। अनेन सांख्यकारिकाव्या-ख्या, सांख्यसूत्राविवरणम्, सांख्यसूत्रप्रक्षेपिका इत्येते ग्रन्थाः विरचिताः॥

### [३८] श्रीनिवासयतिः

अनेन सांख्यतत्त्वंप्रकाशः विरचितः॥

### [३९] वंशीधरमिश्रः

अनेन—सांख्यतत्त्वकौमुदीव्याख्या तत्त्वविभाकरः, शब्दप्रामाण्यखण्डनं चेत्येतौ ग्रन्थौ विरचितौ॥

### [४०] वसन्तनरसिंहः

अनेन—सांख्यतरुवसन्त नामा सांख्यकारिकाव्याख्याग्रन्थः व्यरचि॥

### [४१] विग्रहराजभट्टः

अनेन साख्यविवृतिः विरचिता॥

### [४२] योगानन्दः

अनेन—सांख्यकारिकाव्याख्या सांख्यसूत्रविवरणं चेति ग्रन्थद्वयं विरचितम्॥ इति॥

एवं सांख्यदर्शनप्रवर्तकानां सङ्ग्रहः कृतः॥ अथ सांख्यमूलग्रन्थानां व्याख्याग्रन्थानां च सक्रमं सङ्ग्रहः क्रियते—

### साङ्ख्यदर्शनानुबन्धिनो ग्रन्थाः

१ षष्टितन्त्रम् — कपिलः (?)

२ गाधाषष्टिसहस्रम् — पञ्चशिखाचार्यः

३ तत्त्वसमाससूत्रम् — कपिलः

(एतद्व्याख्याः)

1. तत्त्वसमासव्याख्या--विभानन्दः (Halls Index p. 4)
2. सांख्यसूत्रविवरणम् (?) ( „ p. 3)
3. तत्त्वसमासवृत्तिः (?) (DCSN skt calcutta)
4. सांख्यक्रमदीपिका (?) (DCSM Madras)
5. सर्वोपकारिणी (?) „

6. सांख्यतत्त्वप्रदीपः— कविराजयतिः
7. सांख्यमीमांसा — कृष्णमित्रमिश्रः
8. सांख्यविवेचनम्— क्षेमानन्ददीक्षितः
9. सांख्यतत्त्वप्रदीपिका—भट्टकेशवः
10. तत्त्वयाथार्थ्यदीपनम्—भावागणेशदीक्षितः.

४ साङ्ख्यदर्शनम्—साङ्ख्यसूत्राणि—कपिलः

(एतद्व्याख्याः)

1 सांख्यसूत्रप्रदीपिका— अनन्तभट्टः
2 सांख्यसूत्रवृत्तिः— अनिरुद्धः
3 सांख्यसूत्रवृत्तिः— कविपतिः
4 सांख्यसूत्रलघुवृत्तिः—नागेशः
5 सांख्यसूत्रव्याख्या— ज्ञानामृतः (C.C.N.W. Mss)
6 सांख्यसूत्रव्याख्या— बुद्धभारती (C.S.M. Oud)
7 कपिलसूत्रव्याख्या (?) (C.O.M.L. Mysore)
8 सांख्यसूत्रविवरणम्—हरिहरान्दः आरण्यः
9 सांख्यप्रवचनभाष्यम्—विज्ञानभिक्षुः
10 सांख्यप्रवचनवृत्तिसार;—महादेवः
11 सांख्यवृत्तिः—विग्रहराजभट्टः
12 सांख्यसूत्रवैदिकवृत्तिः—हरिप्रसादः
13 सांख्यदीपिका—कैयटः
14 सांख्यदीपिका—श्रीधरः
15 सांख्यतत्त्वसुबोधिनी (?) (C. C. N. W. Mss)
16 साङ्ख्यतरङ्गः—विश्वेश्वरदत्तमिश्रः (Halls Index p.2)
17 राजवार्तिकम्— (Hall's preface to Sankhyasara p.33)

(सांख्यदर्शन (सूत्र) व्याख्याव्याख्याः)

1 टीकासारः = अनिरुद्धटीकाव्याख्या—माधववेदान्ती
2 सांख्यप्रवचनभाष्यवृत्तिः C.S.Mss. Oudl)

(भाषानुवादाः)

1 सूत्रार्थानुवादः आङ्ग्लानुवादः— Dr. R. गार्वे
2 „ „ —Dr. प्रमथनाथतर्कभूषणः

3 सूत्रार्थानुवादः- वेङ्गालिभाषानुवादः —वेदान्तवागीशः
4 „ हिन्दीभाषानुवादः —(?)
5 भाष्यानुवादः - जर्मनभाषानुवादः Dr. R. गार्वे
6 „ - वेङ्गालिभाषानुवादः Dr. M. पाल्. कल्कता.

५ साङ्ख्यकारिकाः—ईश्वरकृष्णः

(एतद्व्याख्याः)

1 सांख्यकारिकाव्याख्या–कुलमुनिः (N.W. Mss. C.C.)
2 „ –गौडपादः
3 „ चन्द्रिका –नारायणतीर्थः
4 „ –भवदेवः (audh. Mss. C.C)
5 „ –भारतीमतीयः (C.O.M.L. Mysore)
6 „ –माठराचार्यः
7 „ –युक्तिदीपिका (?)
8 „ –योगानन्दः (N.W. Mss. C.C)
9 „ सांख्यकौमुदी - श्री रामकृष्णभट्टाचार्यः Hall's Index p. 8
10 „ पूर्णिमा –पञ्चानतनर्करत्नः
11 „ जयमङ्गला –शङ्कराचार्यः (C. O. S कल्कता)
12 सांख्यकारिकाभाष्यम्-वसन्तनरसिह्मपण्डितः (CSM. Ady)
13 सांख्यतत्वकौमुदी –वाचस्पतिमिश्रः
14 सांख्यकारिकाव्याख्या-श्रीकृष्णः (audh Mss.)

(सांख्यकारिकाव्याख्याव्याख्याः)

1. सांख्यतत्त्वकौमुदीव्याख्या- श्री तारानाथतर्कवाचस्पतिः
2. „ (वृत्त्युपोद्घातः) „ (C.S.M. Ady)
3. „ तत्त्वचन्द्रः–नारायणतीर्थः
4. „ (विवरणम्)—बोधभारती (D.C.S.M. Madras)
5. „ (परिभाषामात्रम्)— „ (C.S.M.A.S.B.)
6. „ भारतीयतिः
7. „ सांख्यतत्त्वविलासः—रघुनाथः
8. „ =तत्त्वार्णवः–राघवानन्दसरस्वती

9 सांख्यतत्त्वकौमुदीव्याख्या तत्त्वामृतप्रकाशिनी (Hall's Index p.6)
10 „ तत्त्वविभाकरः–वंशीधरमिश्रः
11 „ कौमुदीप्रभा–स्वप्नेश्वरः (Hrll's Index p.6)
12 „ सुषुमा—हरिरामशुक्लः

(अनुवादाः)

1 कारिकानुवादः आंग्लानुवादः –Davies J 1894
2 „ „ S. S. सूर्यनारायणशास्त्री
3 „ „ हिन्दीअनुवादः–सीतारामशास्त्री
4 „ चीनीभाषानुवादः– Dr. तककुसु
1 गौडपादीयानुवादः- आंग्लानुवादः- Dr. H. H. विलूसन्
2 „ „ Dr. H.D. शर्मा
3 „ वेङ्गालिअनुवादः–Dr. रेवतीकान्तः

1 सांख्यतत्त्वकौमुद्याः अनुवादः-आंग्लानुवादः-प्रो ॥ रामचन्द्रतर्कतीर्थः
2 „ , –Dr. झा
3 „ „ -Dr. H. D. शर्मा
4 „ , Dr. O. N. झा
5 „ „ Dr. राजेश्वरशास्त्री
6 „ जर्मन्भाषानुवादः प्रो ॥ R. गार्वे

६ तत्त्वमीमांसा—कृष्णमित्रमिश्रः
७ सदसत्ख्यातिः—गोविन्दभट्टः (I.O. call. vol. IV)
८ सांख्यकौमुदी—रामकृष्णभट्टाचार्यः (Hall's Index p.6)
९ सांख्यतत्त्वविचारः-रघुनाथतर्कवागीशभट्टाचार्यः (D C.S.M skt. call. cal)
१० सांख्यतत्त्वालोकः-श्री हरिहरानन्द आरण्यः
११ सांख्यशास्त्रशाखा (C.S & Mss C.P)
१२ सांख्यश्लोकाः—श्री चाणक्यपण्डितः
१३ सांख्यसारः—श्री विज्ञानभिक्षुः
१४ सांख्यतत्त्वसुबोधिनी (?) हिन्दीअनुवादेन सहिता
1 सांख्यसारस्य आंग्लानुवादः–Dr. J. धालूमेन्)
2 „ वेङ्गालिअनुवादः Dr. M. पालू)

एवं सांख्यग्रन्थकर्तॄणां द्विचत्वरिंशत्संख्याकानाम् (42), नवतिसंख्या-कानां (90) सांख्यग्रन्थानां च गणमिका अनेकग्रन्थसाहाय्येन सङ्कलिता ॥

### प्रकृतग्रन्थ-तत्कर्तारौ

प्रकृते च –योऽत्र षोडशः श्रीधराचार्यः स एव अत्र प्रकटितायाः सांख्यदीपिकायाः कर्ता। अयं च ग्रन्थः एतावता कालेन कुत्राप्यमुद्रितः। सांख्यशास्त्रप्रविविक्षूणां अत्यन्तोपकारकश्चेति विभाव्य अस्मदीयप्राच्य-विद्यासंशोधनालयद्वारा प्रकटितुं वयं संनद्धाः अभूम। अत्र च—

"नामूलं लिख्यते किञ्चित् नानपेक्षितमुच्यते।"

इति मल्लिनाथोक्तिवत् यावदपेक्षितं तावदेवोक्तम्। यदाह ग्रन्थादौ स्वयमेव–

"विज्ञानभिक्षुरचितसाङ्ख्यभाष्यानुसारतः।
गणेशतनयः कुर्वे श्रीधरः साङ्ख्यदीपिकाम्" [147] इति ॥

एवम्—

विज्ञानभिक्षुविरचितभाष्यानुसार्यप्ययं ग्रन्थः न तावद्विस्तरात्मकः। क्वचित् क्वचित् पाठांश्च संशोधयति। सुग्रहैः पदैः सूत्रार्थान् विवृणोति च ॥ ग्रन्थेऽस्मिन् वर्तमानाः एवंजातीयकाः गुणाः अध्येतॄणां अनुभवगोचरीभवत्ये-वेति नात्राधिकं वक्तुं वयमभिलषामः ॥ सिद्धान्तार्थग्रहणसौलभ्यकृते पठनपाठनादिना प्रचारे वर्तमाना श्रीमदीश्वरकृष्णविरचिता सांख्यकारिकाऽपि अनेन साकं समयोजि। बहवोऽनुबन्धाश्च ग्रन्थांशविशेषाणां झटिति परिज्ञानाय परिष्कृत्य संयोजिताः ॥

अस्य ग्रन्थकर्तुश्च विषये इतोऽप्यधिकं न किञ्चिदुपलभामहे ॥

### ग्रन्थमातृकां प्रति—

एतद्ग्रन्थसंशोधनाय च अस्मिन्नेव प्राच्यविद्यासंशोधनालये सङ्गृहीते द्वे आदर्शमातृके संनिधापिते। तत्रैका तालपत्रात्मिका S. P. 1550 अङ्कने-नाङ्किता, इयं च सप्तत्रिंशत्पत्रात्मिका, ग्रन्थलिपिः, तत्र तत्र जीर्णा, क्रिमिदष्टा, त्रुटिता च। या अत्र पाठभेदनिर्देशावसरे '*a*' संज्ञया सूचिता। द्वितीया तु-S. A. 812 अङ्कनेनाङ्किता आन्ध्रलिपिः कागदपत्रात्मिका प्रायशः शोधिता च। इयं च मातृका एतत्संशोधनालयाधिकृतैरेव श्रीमद्भिः वि ॥ सीतारामशास्त्रिभिः प्रतिलिपीकृता। तथा श्रीमद्भिः वि ॥ सूर्यनारायणशास्त्रिभिः पुनरवलोकनेन पर्यवेक्षिता च। सैवात्र पाठभेदनिर्देशनावसरे '*b*' संज्ञया निर्देशिता।

---

[147] साङ्ख्यदीपिका p. 57-14

द्वयोरप्यनयोः मातृकयोः बह्वयः अशुद्धयः उपलब्धाः । यथा-पूर्वयोज्यस्य उत्तरयोजनम्, उत्तरयोज्यस्य पूर्वयोजनम, वर्णाशुद्धिः, पदाशुद्धिः, अक्षरच्युतिः, मात्राच्युतिः इत्यादयः । अनेकादर्शसंवादनेनैव परिष्करणीयेऽस्मिन ग्रन्थे आदर्शान्तरालाभेन, ग्रन्थकर्त्रा स्वग्रन्थमूलत्वेनोट्टङ्कितात् श्रीविज्ञानभिक्षु-भाष्यादेव शुद्धपाठानां यावच्छक्तिसङ्ग्रहणेन, पाठपरिशोधनपूर्वकं अविकृत-ग्रन्थरूपसम्पादनेन च आन्तं मुद्राणाय सज्जीकृतस्माभिः ॥

## सांख्यसूत्रमातृकाः

सूत्रमूलपाठसंशोधने च- ग्रन्थकारविवरणम, विज्ञानभिक्षुभाष्यम्, अनिरुद्धवृत्तिः, नागेशवृत्ति, महादेववृत्तिश्चेत्येतेषां साहाय्यकं समुपलब्धम् ॥

## सांख्यकारिकासंयोजनम्

एवं वृत्तिसहितेऽस्मिन् ग्रन्थे निरूपितानेव सिद्धान्तार्थान् सरलतया संक्षिप्ततया हृदि छात्राणां धारणानुगुणं पद्यरूपेण वर्णयन्ती श्रीमदीश्वरकृष्ण-विरचिता साङ्ख्यकारिका अतिप्राचीनैरपि प्रमाणग्रन्थतया स्वीकृता च यद्यनेनैव ग्रन्थेन साकं प्रेक्षकाणां दृशिगोचरीभवेत्, तदा सांख्यदर्शनसारसिद्धान्तावगमे महानेवोपकारो भवेदित्यालोच्य, साऽपि अस्माभिरेव नूतनत्वेन सङ्कलितया भावप्रकाशिकानाम्न्या अतिसरळया व्याख्यया साकं प्रथमानुबन्धतया संयोजिता ॥

## मातृकासंज्ञाः

एवं अस्य ग्रन्थस्य संशोधने उपयुक्तानां मातृकाणां, पाठभेदनिर्देशे च दत्तानां तत्तत्संज्ञानां च विवरणं एवं वर्तते—यथा—

## साङ्ख्यदर्शनस्य-साङ्ख्यसूत्रपाठस्य संज्ञाः

1. विज्ञानभिक्षुभाष्यम्—K.
2. अनिरुद्धवृत्तिः—K.H.
3. विज्ञानभिक्षुसूचितान्येव पाठान्तराणि G.
4. नागेशवृत्तिः G.H.
5 महादेववृत्तिः C.

## अस्या एव सूत्रवृत्तेः साङ्ख्यदीपिकायाः संज्ञाः

1. S.P. 1550 ग्रन्थलिपिः O.R.I. M.S.S. (a)
2. S.A. 812 आन्ध्रलिपिः O.R.I. M.S.S. (b)

## साङ्ख्यकारिकायाः संज्ञाः

1. बालगङ्गाधरतिलकव्याख्या—(B)
2. चन्द्रिकाव्याख्या—(C)
3. चीनाभाषान्तरसंमतेत्युट्टङ्किता—(Ch)
4. गौडपादभाष्यम्—(G)
5. जयमङ्गलाव्याख्या—(J)
6. माठरवृत्तिः—(M)
7. नारायणतीर्थव्याख्या—(N)
8. वाचस्पतिमिश्रव्याख्या—(V)
9. युक्तिदीपिका (Y) इति ॥

## अनुबन्धभागः

अनुबन्धभागे च-अध्येतॄणां संशोधकानां च सौलभ्यकल्पनाय, विनेयोन्मुखीकरणकृते, जिज्ञासूनां दर्शने प्रवेशलाभार्थं च, जिज्ञासूनां विविधलौकिकव्यापाराणामुपरोधं विनैव निर्दिष्टसारांशविज्ञाने सौलभ्यपरिकल्पनाय च विविधाः अनुक्रमण्यः संयोजिताः

तत्र-विषयानुक्रमणीस्थानां सर्वेषामपि सांख्यसूत्रसांख्यदीपिका-सांख्यकारिकास्थानां विषयाणां अकाराद्यनुक्रमः संयोजितः। ततः प्रायशः सर्वेषामपि सिद्धान्तार्थानां सर्वत्र दृष्टान्तद्वारैव सुग्रहताकल्पनसम्प्रदायस्य सत्त्वेन, दृष्टान्तमन्तरा कस्याप्यर्थस्य बुद्धिस्पर्श एव अशक्य इति च विषयस्वरूपानुगुणं अत्रापि प्रकृतदर्शनार्थोपपादनाय च ये ये दृष्टान्ताः न्यायाश्च ग्रन्थेप्रयुक्ताः तेषां सविवरणं अकाराद्यनुक्रमेण सूचनी दत्ता। अथ च व्याख्यायां प्रमाणतया उदाहृतानां सर्वेषामपि प्रमाणानां आकरनिर्देशपूर्वकमनुक्रमणिका संयोजिता। एवं सूत्राणां, सांख्यकारिकार्धानां च अकाराद्यनुक्रमः प्रदत्तः। ततश्च सांख्यशास्त्रसाधारणपारिभाषिकपदानां, प्रकृतकालानुगुण्येन कठिनानां च ग्रन्थे प्रयुक्तानां पदानां निर्वचनविवरणादिप्रदर्शनपूर्वकं अकाराद्यनुक्रमणिका संयोजिता। तदनु ग्रन्थदृष्टानां ग्रन्थान्तर-ग्रन्थकार-मत-मतीयादिनाम्नां अनुक्रमो दत्तः। अन्ते च आकरनिर्देशादिसमये ग्रन्थबाहुल्यादिभिया येषां ग्रन्थानां नामानि संक्षिप्य संज्ञारूपेण सूचितानि, तेषां पूर्णरूपं प्रदर्शितम्। एवं विविधाः अनुबन्धाः, शास्त्रवर्त्मानुयायिनी चारित्रिकार्थसिद्धान्तार्थयोः प्रदर्शिनी दर्शनोत्पत्तिप्रचयगमनादिकाथसमवलोकनी चेयं भूमिकाऽपीत्येते अनेन ग्रन्थेनसाकं सयोजिताः॥

## कृतज्ञतासमर्पणम्

एवं एतद्ग्रन्थसम्पादने सर्वविधसहकारसम्पत्तिप्रदानेन, तदा तदा दिग्दर्शनेन च प्रोत्साहितवद्भिः,सर्वत्र दत्तहस्तावलम्बैः यैः अहमन्वरुध्ये; तेषाममीषां अत्रभवतां एतत्प्राच्यविद्यासंशोधनालयाध्यक्षाणां, मैसूरु विश्वविद्यानिलय-स्नातकोत्तर-संस्कृताध्ययनसंशोधनविभाग मुख्यस्थानाम् प्राध्यापकानां विदुषां च श्रीमतां डा ॥ हेच्. पि. मल्लेदेवरु एम्. ए. पिहेच्. डि. महोदयानां संनिधौ हार्दीः इमाः अनन्ताः कृतज्ञताः धन्यवादांश्च निवेदयामि॥

## दोषपरिमार्जनप्रार्थना

एवं सुसम्पन्नेऽप्यस्मिन् महति कार्ये मानवधीसुलभाः मुद्रणतन्त्रानुबन्धिनश्च अनेके दोषाः सम्भाव्येरन्नेवेति सत्यं मन्यामहे। अत एव-प्रेक्षकाणां सविधे—

"न चात्रातीव कर्तव्यं दोषदृष्टिपरं मनः।
दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते॥"

—किमुत विद्यमानः! इति अभिज्ञवचनं स्मारयन्, तं च दोषं संशोधने नापबाध्य कृपां कुर्युरिति अधीतिनः सहृदयान् सर्वान् — सप्रश्रयं प्रार्थयंश्च विरमत्ययं जनः॥

## अन्तिममाशंसनम्

भूयश्चेदमाशास्ते—

जयतु जगतां मूलं सत्यं सनातनमञ्जसा
जयतु सरसा वाणी दिव्या तदीयमनोऽनुगा।
जयतु विदुषां वर्गः तस्याः सदातन आश्रयः
जयतु च निधिः तेषां पूर्णा चिरन्तनभारती॥

इति विदुषां वशंवदः—
एन्. एस्. वेङ्कटनाथाचार्यः

श्री दुर्मतिनामसंवत्सर कार्तिकशुक्ल-
गुरुपूर्णिमा बुधवासरः
(11-11-1981)
मैसूरु विश्वविद्यानिलयः
प्राच्यविद्यासंशोधनालयः
मैसूरु-५

———

# सव्याख्यसांख्यसूत्रविषयानुक्रमणिका



## १. विषयाध्यायः प्रथमः



## २. प्रधानकार्याध्यायः द्वितीयः



## ३. वैराग्याध्यायः तृतीयः



---

## ४. आख्यायिकाध्यायः चतुर्थः

---



## ५. परपक्षनिर्जयाध्यायः पञ्चमः



---

## ६. तन्त्राध्यायः षष्ठः

---

# सांख्यकारिकाविषयानुक्रमणिका

# सा ङ्ख्य द र्श न म्
## (मूलसूत्रपाठः)

### विषयाध्यायः प्रथमः

1 अथ त्रिविधदुःखात्यन्तनिवृत्तिः अत्यन्तपुरुषार्थः ।

2 न दृष्टात् तत्सिद्धिः निवृत्तेऽप्यनु[1]वृत्तिदर्शनात् ।

3 प्रात्यहिक[2]क्षुत्प्रतीकारवत् तत्प्रतीकारचेष्टनात् पुरुषार्थत्वम्[3] ।

4 सर्वासम्भवात् सम्भवेऽपि[4] सत्तासम्भवात्[5] हेयः प्रमाणकुशलैः ।

5 उत्कर्षादपि मोक्षस्य सर्वोत्कर्षश्रुतेः ।

6 अविशेषश्चोभयोः ।

7 न स्वभावतो बद्धस्य मोक्षसाधनोपदेशविधिः ।

8 स्वभावस्यानपायित्वात्[6] अननुष्ठानलक्षणमप्रामाण्यम् ।

9 नाशक्योपदेशविधिः उपदिष्टेऽप्य[7]नुपदेशः ।

10 शुक्लपटवत् बीजवच्चेत् ।

11 शक्त्युद्भवानुद्भवाभ्यां[8] नाशक्योपदेशः ।

12 न कालयोगतो व्यापिनो नित्यस्य सर्वसम्बन्धात् ।

13 न देशयोगतोऽप्यस्मात्[9] ।

14 नावस्थातो देहधर्मत्वात् तस्याः ।

15 असङ्गो ह्ययं पुरुषः इति[10] ।

16 न कर्मणाऽन्य[11]धर्मत्वात् अतिप्रसक्तेश्च[12] ।

17 विचित्रभोगानुपपत्तिः अन्यधर्मत्वे ।

---

[1] निवृत्तेरप्यनु–*g*.

[2] प्रात्याहिक–*g*.

[3] तत्पुरुषार्थत्वम्–*kh*.

[4] तत्सम्भवेऽपि–*k*.

[5] अत्यन्तासम्भवात्–*c*
सर्वत्रासम्भवात्–*kh*.
सर्वत्र सम्भवात्–*g*.

[6] नपायत्वात्–*g*.

[7] उपदेशोऽप्य–*g*.

[8] शक्त्युद्भवाभिभवाभ्यां–*k*.

[9] इदं सूत्रं न दृश्यते–*c*.

[10] इति श्रुतिरस्ति, सा बाधिता स्यात्–*c*.

[11] कर्मणोऽन्य–*c*.

[12] प्रसक्तेः–*kh*.

18 प्रकृतिनिबन्धनाच्चेन्न[13] तस्या अपि पारतन्त्र्यम् ।
19 न नित्यशुद्ध[14]बुद्धमुक्तस्वभावस्य तद्योगस्तद्योगादृते ।
20 नाविद्यातोऽप्यवस्तुना बन्धायोगात् ।
21 वस्तुत्वे सिद्धान्तहानिः ।
22 विजातीय[15]द्वैतापत्तिश्च[16] ।
23 विरुद्धोभयरूपा चेत् ।
24 न तादृक्पदार्थाप्रतीतेः ।
25 न वयं षट्पदार्थवादिनः वैशेषिकादिवत् ।
26 अनियतत्वेऽपि नायौक्तिकस्य सङ्ग्रहः अन्यथा[17] बालोन्मत्तादिसमत्वम् ।
27 नानादिविषयोपरागनिमित्तकोऽप्यस्य[18] ।
28 न बाह्याभ्यन्तरयोः उपरज्योपरञ्जकभावोऽपि[19] देशव्यवधानात्[20] स्रुघ्नस्थपाटलिपुत्रस्थयोरिव ।
29 द्वयोरेकदेशलब्धोपरागान्न व्यवस्था ।
30 अदृष्टवशाच्चेत् ।
31 न द्वयोरेककालायोगात् उपकार्योपकारकभावः ।
32 पुत्रकर्मवदिति चेत ।
33 नास्ति हि तत्र[21] स्थिर एक आत्मा[22] यो गर्भाधानादिकर्मणा संस्क्रियते[23] ।
34 स्थिरकार्यासिद्धेः क्षणिकत्वम्[24] ।
35 न[25] प्रत्यभिज्ञाबाधात् ।
36 श्रुतिन्यायविरोधाच्च ।
37 दृष्टान्तासिद्धेश्च ।
38 युगपज्जायमानयोः न कार्यकारणभावः ।
39 पूर्वापाये उत्तरायोगात्[26] ।
40 तद्भावे तदयोगात उभयव्यभिचारादपि न ।
41 पूर्वभावमात्रे[27] न नियमः ।

---

13 निबन्धना चेन्न–*g*.
14 न शुद्ध–*g*.
15 विजातीये–*g*.
16 पत्तिः–*g*.
17 'अनियतत्वेऽपि नायौक्तिकस्य सङ्ग्रहः अन्यथा' इति नास्ति–*c*.
18 निमित्ततोऽप्यस्य–*gh*. निमित्तोऽप्यस्य–*c*.
19 उपरज्य–*g*.
20 देशभेदात्–*g*.
21 नास्ति तत्र–*g*.
22 एकात्मा–*g*.
23 गर्भाधानादिना संस्क्रियेत–*c*.
24 क्षणिकत्वम्, क्षणिकत्वे सत्त्वमर्थक्रियाकारित्वम्–*gh*.
25 'न' इति नास्ति–*g*.
26 उत्तरयोगात्–*c*.
27 पूर्वभावित्वमात्रे–*g*. पूर्वभाविमात्रेण–*gh*. पूर्वभावित्वमात्रेण–*c*.

42 न विज्ञानमात्रं बाह्यप्रतीतेः ।
43 तदभावे तदभावात् शून्यं तर्हि ।
44 शून्यं तत्त्वं भावो विनश्यति वस्तुधर्मत्वात् विनाशस्य ।
45 अपवादमात्रं अबुद्धानाम् ।
46 उभयपक्षसमानक्षेमत्वादयमपि[28] ।
47 अपुरुषार्थत्वमुभयथा ।
48 न गतिविशेषात् ।
49 निष्क्रियस्य तदसम्भवात् ।
50 मूर्तत्वात् घटादिवत् समानधर्मापत्तौ अपसिद्धान्तः ।
51 गतिश्रुतिरपि उपाधियोगात् आकाशवत् ।
52 न कर्मणाऽप्यतद्धर्मत्वात्[29] ।
53 अतिप्रसक्तिः अन्यधर्मत्वे[30] ।
54 निर्गुणादिश्रुतिविरोधश्चेति[31] ।
55 तद्योगोऽप्य[32]विवेकान्न समानत्वम् ।
56 नियतकारणात् तदुच्छित्तिः ध्वान्तवत् ।
57 प्रधानाविवेकात्[33] अन्याविवेकस्य तद्धाने हानम् ।
58 वाङ्मात्रं न तु तत्त्वं[34] चित्तस्थितेः ।
59 युक्तितोऽपि न बाध्यते दिङ्मूढवदपरोक्षादृते ।
60 अचाक्षुषाणामनुमानेन बोधः धूमादिभिरिव वह्नेः ।
61 सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः, प्रकृतेर्महान् , महतोऽहङ्कारः, अहङ्कारात् पञ्चतन्मात्राणि, उभयमिन्द्रियं तन्मात्रेभ्यः, स्थूल[35]भूतानि, पुरुषः इति पञ्चविंशतिर्गणः ।
62 स्थूलात् पञ्चतन्मात्रस्य[36] ।
63 बाह्याभ्यन्तराभ्यां तैश्चाह[37]ङ्कारस्य ।
64 तेनान्तःकरणस्य ।
65 ततः प्रकृतेः ।
66 संहत[38]परार्थत्वात् पुरुषस्य ।
67 मूले मूलाभावात् अमूलं मूलम् ।

---

[28] क्षेमादयमपि–*g*.

[29] णाप्येतद्धर्मत्वात्–*g*.

[30] इदं सूत्रं निर्गुणादीत्युत्तर सूत्रानन्तरं वृत्तौ पठितम्–*c*.

[31] विरुद्धश्चेति–*g*.
विरोधः–*g*.

[32] तद्योगेऽप्य–*g*.

[33] प्रधानात्–*c*.

[34] वाङ्मात्रं तु न तत्त्वं–*g*.

[35] मिन्द्रियं स्थूल–*c*.

[36] पञ्चतन्मात्राः–*gh*.

[37] तैरह–*g*.

[38] सङ्घात–*gh*.

68 पारम्पर्येऽपि एकत्र परिनि-
ष्ठेति संज्ञामात्रम् ।
69 समानः प्रकृतेः द्वयोः ।
70 अधिकारित्रैविध्यात् न
नियमः ।
71 महदाख्यमाद्यं[39] कार्यं
तन्मनः ।
72 चरमोऽहङ्कारः ।
73 तत्कार्यत्वमुत्तरेषाम्[40] ।
74 आद्यहेतुता तद्द्वारा[41]
पारम्पर्येऽप्यणुवत्[42] ।
75 पूर्वभावित्वे[43] द्वयोरेकतरस्य
हाने[44] अन्यतरयोगः ।
76 न परिच्छिन्नं[45] सर्वोपादानम् ।
77 तदुत्पत्तिश्रुतेश्च[46] ।
78 नावस्तुनो वस्तुसिद्धिः ।
79 अबाधात् अदुष्टकारणजन्य-
त्वाच्च नावस्तुत्वम् ।
80 भावे तद्योगेन तत्सिद्धिः,
अभावे तदभावात् कुतस्तरां
तत्सिद्धिः[47] ।
81 न कर्मण[48] उपादानत्वा-
योगात्[49] ।
82 नानुश्रविकादपि[50] तत्सिद्धिः
साध्यत्वेनाऽऽवृत्तियोगाद-
पुरुषार्थत्वम् ।
83 तत्र प्राप्तविवेकस्य अनावृत्ति-
श्रुतिः ।
84 दुःखाद्दुःखं जलाभिषेकवत् न
जाड्यविमोकः[51] ।
85 काम्येऽकाम्येऽपि[52]
साध्यत्वाविशेषात् ।
86 निजमुक्तस्य बन्धध्वंसमात्रं
परं[53] न समानत्वम्[54] ।
87 द्वयोरेकतरस्य वाऽप्य[55]सं-
निकृष्टार्थपरिच्छित्तिः प्रमा,
तत्सा[56] धकतमं यत् तत्
त्रिविधं प्रमाणम्[57] ।

---

39 महदाद्यं–*c.*
40 त्वमन्येषाम्–*g.*
41 आद्यहेतुद्वारा–*gh.*
42 पारम्पर्येणाणुवत्–*c.*
43 पूर्वाभावित्वे–*g.*
44 एकतरहानेन–*g.*
45 परिच्छिन्नं न–*kh.*
न परिच्छिन्नत्वात्–*c.*
46 श्रुतेः–*g.*
47 कुतस्तत्सिद्धिः–*g.*
48 कर्मणा–*kh.*
49 उपादानायोगात्–*c.*
50 श्राविकादपि–*g.*
51 विमोक्षः–*g.*
52 काम्याकाम्येऽपि–*g.*
53 मात्रपरं–*g.*
54 समत्वम्–*kh.*
55 चाप्य–*g.*
वाऽ–*c.*
56 प्रमा सा–*g.*
57 यत्तत्–*kh.*
यत्तत्प्रमाणम्–*g.*

88 तन्निसिद्धौ[58] सर्वसिद्धेर्नाधिक्यसिद्धिः ।

89 यत्सम्बद्धं सत्[59] तदाकारोल्लेखि विज्ञानं तत् प्रत्यक्षम् ।

90 योगिनामबाह्यप्रत्यक्षत्वात् न दोषः ।

91 लीनवस्तुलब्धातिशयसम्बन्धाद्वाऽदोषः[60]।

92 ईश्वरासिद्धेः ।

93 मुक्तामुक्तयो[61]रन्यतराभावात् न तत्सिद्धिः ।

94 उभयथाऽप्यसत्करत्वम् ।

95 मुक्तात्मनः प्रशंसा, उपासा[62] सिद्धस्य वा[63]।

96 तत्संनिधानात् अधिष्ठातृत्वं मणिवत् ।

97 विशेषकार्येष्वपि[64]जीवानाम् ।

98 सिद्धरूपबोद्धृत्वात् वाक्यार्थोपदेशः ।

99 अन्तःकरणस्य तदुज्ज्वलित[65]त्वात् लोहवदधिष्ठातृत्वम् ।

100 प्रतिबन्धदृशः[66] प्रतिबद्धज्ञानमनुमानम्[67]।

101 आप्तोपदेशः शब्दः ।

102 उभयसिद्धिः प्रमाणात् तदुपदेशः ।

103 सामान्यतोदृष्टादुभयसिद्धिः ।

104 चिदवसानो भोगः ।

105 अकर्तुरपि फलोभोगोऽन्नाद्यवत् ।[68]

106 अविवेकाद्वा तत्सिद्धेः[69] कर्तुः फलावगमः[70]।

107 नोभयं च तत्त्वाख्याने ।

108 विषयोऽविषयोऽप्यति[71]दूरादेर्हानोपादानाभ्यामिन्द्रियस्य ।

109 सौक्ष्म्यात् तदनुपलब्धिः[72]।

---

[58] त्रिविधं प्रमाणं तत्सिद्धौ–*g*.

[59] द्धं सिद्धं–*kh*.
द्वसिद्धं–*c*.

[60] द्वा न दोषः–*g*.
न्न दोषः–*c*.

[61] मुक्तबद्धयो–*k*.

[62] प्रशंसोपासा–*kh*.
प्रशंसा उपासना–*g*.
प्रशंसा उपास्या–*c*.

*2

[63] सिद्धस्य वेति–*g*.

[64] कार्येऽपि–*g*.

[65] तदुपज्वलित–*g*.

[66] प्रतिबद्धदृशः–*kh*.

[67] मानमिति वा–*c*.

[68] अन्नादिवत्–*c*.

[69] तत्सिद्धिः–*g*.

[70] फलावगतः–*g*.

[71] विषयोऽप्यति–*g*.

[72] सौक्ष्म्यादनुपलब्धिः–*g*.

110 कार्यदर्शनात् तदुपलब्धेः[73]।
111 वादिविप्रतिपत्तेः तदसिद्धिरिति चेत्[74]।
112 तथाऽप्ये[75]कतरदृष्ट्या एकतरा[76]सेद्धेर्नापलापः ।
113 त्रिविधविरोधापत्तेश्च[77]।
114 नासदुत्पादो नृशृङ्गवत् ।
115 उपादाननियमात् ।
116 सवत्र सर्वदा सर्वासम्भवात् ।
117 शक्तस्य[78] शक्यकरणात्[79]।
118 कारणभावाच्च[80]।
119 न भावे भावयोगश्चेत्[81]।
120 नाभिव्यक्तिनिबन्धनौ व्यवहाराव्यवहारौ ।
121 नाशः कारणलयः ।
122 पारम्पर्यतोऽन्वेषणा[82] बीजाङ्कुरवत् ।
123 उत्पत्तिवददोषः[83]।
124 हेतुमदनित्यमव्यापि[84] सक्रियमनेक[85]माश्रितं लिङ्गम् ।
125 आञ्जस्यादभेदतो वा गुणसामान्यादेः तत्सिद्धिः प्रधान व्यपदेशाद्वा[86]।
126 त्रिगुणाचेतन[87]त्वादि द्वयोः ।
127 प्रीत्यप्रीतिविषादाद्यैः गुणानां अन्योन्यं[88] वैधर्म्यम् ।
128 लघ्वादिधर्मैः साधर्म्यं वैधर्म्यं च गुणानाम्[89]।
129 उभयान्यत्वात् कार्यत्वं महदादेः घटादिवत् ।
130 परिमाणात्[90]।
131 समन्वयात् ।
132 शक्तितश्चेति ।
133 तद्धाने प्रकृतिः पुरुषो वा ।

---

73 तदुपलब्धिः–*g*.
74 तदसिद्धिरिति–*c*.
75 अथाप्ये–*g*.
76 अन्यतर–*kh*.
77 विरोधापत्तेः–*g*.
78 शक्यस्य–*g*.
79 कारणात्–*g*.
80 कारणभावात्–*kh*.
81 भावे भावयोगश्चेन्न वाच्यम्–*g*.
82 न्वेषणात्–*g*.
83 वद्धाऽदोषः–*k*.
84 दनित्यं–*g*.
85 सक्रियकमनेक–*kh*.
86 शाद्वा तथा प्रधानशब्दात्–*g*.
87 त्रिगुणचेतन–*g*.
88 अन्योन्य–*g*.
89 धर्मैरन्योन्यं साधर्म्यवैधर्म्ये गुणानाम = धर्मैरन्योन्यं साधर्म्यं वैधर्म्यं इतरेषाम्–*c*.
90 परिणामात्–*c*.

134 तयो[91]रन्यत्वे तुच्छत्वम्[92]।
135 कार्यात् कारणानुमानं तत्साहित्यात्।
136 अव्यक्तं त्रिगुणाल्लिङ्गात्।
137 तत्कार्यतः तात्सिद्धेर्नापलापः।
138 सामान्येन विवादाभावात् धर्मवन्न साधनम्[93]।
139 शरीरादिव्यतिरिक्तः पुमान्।
140 संहतपरार्थत्वात्[94]।
141 त्रिगुणादिविपर्ययात्।
142 अधिष्ठानाच्चेति[95]।
143 भोक्तृभावात्।
144 कैवल्यार्थं[96] प्रवृत्तेश्च[97]।
145 जडप्रकाशयोगात् प्रकाशः।
146 निर्गुणत्वात्[98] न चिद्धर्मा।
147 श्रुत्या सिद्धस्य नापलापः तत्प्रत्यक्षबोधात्।
148 सुषुप्त्याद्यसाक्षित्वम्[99]।
149 जन्मादिव्यवस्थातः पुरुषबहुत्वम्[100]
150 उपाधिभेदेऽप्येकस्य नाना योगः आकाशस्येव[101] घटादिभिः।
151 उपाधिः भिद्यते न तु तद्वान्,
152 एवमेकत्वेन[102] परिवर्तमानस्य न विरुद्धधर्माध्यासः।
153 अन्यधर्मत्वेऽपि नारोपात् तत्सिद्धिरेकत्वात्।
154 नाद्वैतश्रुतिविरोधः जातिपरत्वात्।
155 विदितबन्धकारणस्य दृष्ट्याऽतद्रूपम्।[103]
156 नन्धादृष्ट्या[104] चक्षुष्मतामनुपलम्भः।
157 वामदेवादिर्मुक्तो[105] नाद्वैतम्।
158 अनादावद्ययावदभावात् भविष्यदप्येवम्।

---

[91] उभयो–*g*.
[92] तुच्छता–*g*.
[93] न तत्साधनम्–*g*.
[94] पदार्थत्वात्–*c*.
[95] ष्ठातृत्वाच्चेति–*g*.
[96] कैवल्यार्थे–*kh*.
[97] प्रवृत्तेः–*kh*.
प्रकृतेः–*c*.
[98] निर्गुणत्वाच्च–*g*.
[99] प्त्यादिसाक्षित्वम्–*g*.
[100] षस्य बहुत्वम्–*g*.
[101] आकाशस्य च (=इव)–*g*.
[102] एकमेकत्वेन–*gh*.
परमेकत्वेन–*c*.
[103] दृष्ट्या तद्रूपम्–*kh*.
[104] नान्धदृष्ट्या–*g*.
[105] वादिमुक्तेः–*gh*.

159 इदानीमिव सर्वत्र नात्यन्तोच्छेदः।
160 व्यावृत्तोभयरूपः[106]।
161 साक्षात् सम्बन्धात्[107] साक्षित्वम्।
162 नित्यमुक्तत्वम्।
163 औदासीन्यं चेति[108]।
164 उपरागात् कर्तृत्वं चित्सांनिध्यात् चित्सांनिध्यात्॥

---

## प्रधानकार्याध्यायः द्वितीयः

---

1 विमुक्तमोक्षार्थं[1] स्वार्थं वा प्रधानस्य।
2 विरक्तस्य तत्सिद्धेः[2]
3 न श्रवणमात्रात् तत्सिद्धिः[3] अनादिवासनायाः बलवत्त्वात्[4]
4 बहुभृत्यवद्वा प्रत्येकम्।
5 प्रकृतिवास्तवे च पुरुषस्याध्यासिसिद्धिः।
6 कार्यतः तत्सिद्धेः।[5]
7 चेतनोद्देशान्नियमः कण्टकमोक्षवत्।
8 अन्ययोगेऽपि तत्सिद्धिः नाऽञ्जस्येनायोदाहवत्।
9 रागविरागयोः योगः सृष्टिश्च।[6]
10 महदादिक्रमेण पञ्चभूतानाम्।[7]
11 आत्मार्थत्वात्[8] सृष्टेः नैषां आत्मार्थ आरम्भः।
12 दिक्कालावाकाशादिभ्यः।
13 अध्यवसायो बुद्धिः।
14 तत्कार्यं धर्मादि।[9]
15 महदुपरागाद्विपरीतम्।
16 अभिमानोऽहङ्कारः।
17 एकादश[10] पञ्चतन्मात्रं तत्कार्यम्।[11]
18 सात्त्विकमेकादशकं प्रवर्तते वैकृतादहङ्कारात्।

---

106 उभयं रूपः–*c*
107 अक्षसम्बन्धात्–*kh*
108 नित्यमुक्तत्वमौदासीन्यंच–*g*
1 विमोक्षार्थं–*gh*
2 तत्सिद्धिः–*c*
3 न वाङ्मात्रात् तत्सिद्धिः–*g*
4 अनादिवासनापटुत्वात्–*g*
5 तत्सिद्धिः–*g*
6 रागविरागयोगः–*g*
7 क्रमेण च भूतानाम्–*g*
8 आत्मार्थं–*gh*
9 धर्मादिः–*c*
10 एकादशं–*c*
11 यत्कार्यम्–*g*

19 कर्मेन्द्रियबुद्धीन्द्रियैः आन्तर मेकादशकम् ।

20 आहङ्कारिकत्वश्रुतेः[12] न भौतिकानि ।

21 देवतालयश्रुतिर्नारम्भकस्य ।[13]

22 तदुत्पत्तिश्रुतेः[14] विनाशदर्शनाच्च ।

23 अतीन्द्रियमिन्द्रियं[15] भ्रान्तानामधिष्ठाने ।[16]

24 शक्तिभेदेऽपि भेदसिद्धौ[17] नैकत्वम् ।

25 न कल्पनाविरोधः प्रमाणदृष्टस्य ।

26 उभयात्मकं च मनः ।[18]

27 गुणपरिणामभेदात् नानात्व मवस्थावत् ।

28 रूपादिरसमलान्त[19] उभयोः ।

29 द्रष्टृत्वादिरात्मनः[20] करणत्वमिन्द्रियाणाम् ।

30 त्रयाणां[21] स्वालक्षण्यम् ।[22]

31 सामान्य[23]करणवृत्तिः प्राणाद्या: वायवः पञ्च [24]।

32 क्रमशोऽक्रमशश्चेन्द्रियवृत्तिः ।[25]

33 वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः ।[26]

34 तन्निवृत्तौ उपशान्तोपरागः[27] स्वस्थः ।

35 कुसुमवच्च मणिः ।

36 पुरुषार्थं कारणोद्भवोऽप्य दृष्टोल्लासात् ।

37 धेनुवद्वत्साय ।

38 करणं त्रयोदशविधं[28] अवान्तरभेदात्[29] ।

---

[12] कत्वं श्रुतेः–*g*

[13] श्रुतेर्नारम्भकस्य–*g*

[14] तदुत्पत्तिः श्रूयते–*kh*

[15] न्द्रियमुभयं–*kh*

[16] अधिष्ठानम्–*g*

[17] शक्तिभेदसिद्धौ–*g*

[18] त्मकं मनः–*gh*

[19] रसवर्गान्तः–*c*

[20] रात्मनां–*c*

[21] महदहङ्कारमनसां–*kh*

[22] स्वलक्षण्यम्–*g*

[23] सामान्या–*g*

[24] प्राणाद्याः वायवः पञ्च-इति नास्ति–*gh*

[25] वृत्तयः–*c*

[26] क्लिष्टाक्लिष्टाः प्रमाणविपर्ययविकल्पनिद्रास्मृतयः–*g*

[27] उपशान्तोपक्लेशः–*gh*

[28] त्रयोदशं–*g*. द्वादशविधं–*c*.

[29] बाह्यान्तरभेदात्–*g*.

39 इन्द्रियेषु साधकतमत्वगुण-योगात्[30]कुठारवत्।

40 द्वयोः प्रधानं मनो लोकवत्[31] भृत्यवर्गेषु।

41 अव्यभिचारात्[32]।

42 तथा[33] अशेषसंस्काराधार-त्वात्।

43 स्मृत्याऽनुमानाच्च।

44 सम्भवेन्न स्वतः।

45 आपेक्षिको गुणप्रधानभावः[34] क्रियाविशेषात्।

46 तत्कर्मार्जितत्वात् तदर्थ-मभिचेष्टा[35] लोकवत्।[36]

47 समानकर्मयोगे बुद्धेः प्राधान्यं लोकवल्लोकवत्॥[37]

---

## वैराग्याध्यायः तृतीयः

---

1 अविशेषात् विशेषारम्भः।

2 तस्मात् शरीरस्य[1]।

3 तद्बीजात् संसृतिः।

4 आविवेकाच्च[2] प्रवर्तनम-विशेषाणाम्।

5 उपभोगा[3]दितरस्य[4]।

6 सम्प्रति परिमुक्तो[5] द्वाभ्याम्।

7 मातापितृजं स्थूलं प्रायशः इतरन्न तथा।

8 पूर्वोत्पत्तेः तत्कार्यत्वं भोगा देकस्य नेतरस्य।

9 सप्तदशैकं लिङ्गम्।

10 व्यक्तिभेदः कर्मविशेषात्।

11 तदधिष्ठानाश्रये देहे[6] तद्वा-दात् तद्वादः।

12 न स्वातन्त्र्यात् तदृते छाया वत् चित्रवच्च।

13 मूर्तत्वेऽपि न सङ्घातयो-गात्[7] तरणिवत्।

---

30 तमत्वयोगात्–*g*.
तमत्वं–*c*.

31 बुद्धिर्लोकवत्–*k*.

32 अव्यभिचारिणी–*kh*.

33 यथा–*g*.

34 प्रवाहभावः–*g*.

35 मपि चेष्टा–*g*.

36 लोकवल्लोकवत्–*g*.

37 इदं सूत्रं नास्ति।–*g*.

1 इदं सूत्रं नास्ति।–*kh*.

2 अविवेकाच्च–*g*.
अविवेकात्–*c*.

3 यदुपभोगा–*g*.

4 इदं सूत्रं नास्ति–*g*.

5 परिष्वक्तो–*g*.

6 श्रयदेहे–*g*.

7 न सङ्घात् योगात्–*kh*.
न सङ्घातः योगात्–*c*.

14 अणुपरिमाणं तत् कृति-श्रुतेः[8] ।
15 तदन्नमयत्वश्रुतेश्च[9] ।
16 पुरुषार्थं संसृतिः लिङ्गानां[10] सूपकारवद्राज्ञः[11] ।
17 पाञ्चभौतिको देहः ।
18 चातुर्भौतिकमित्येके[12] ।
19 ऐकभौतिकमित्यपरे[13] ।
20 न सांसिद्धिकं चैतन्यं प्रत्येका दृष्टेः[14] ।
21 प्रपञ्चमरणाद्यभावश्च ।[15]
22 मदशक्तिवच्चेत् प्रत्येक [16] परिदृष्टे सांहत्ये[17] तदुद्भवः ।
23 ज्ञानान्मुक्तिः ।
24 बन्धो विपर्ययात् ।
25 नियतकारणत्वात् [18] न समुच्चयविकल्पौ ।
26 स्वप्नजागराभ्यामिव मायिकामायिकाभ्यां नोभयोर्मुक्तिः पुरुषस्य ।
27 इतरस्यापि नात्यन्तिकम् ।[19]
28 सङ्कल्पितेऽप्येवम् ।
29 भावनोपचयात् शुद्धस्य[20] सर्वं प्रकतिवत् ।
30 रागोपहतिः[21]ध्यानम् ।
31 वृत्तिनिरोधात् तत्सिद्धिः ।
32 धारणासनस्वकर्मणा तत्सिद्धिः ।
33 निरोधः छर्दिविधारणाभ्याम् ।[22]
34 स्थिरसुखमासनम् ।
35 स्वकर्म स्वाश्रमविहित[23]कर्मानुष्ठानम् ।
36 वैराग्यात् अभ्यासाच्च ।
37 विपर्ययभेदाः पञ्च ।
38 अशक्तिरष्टाविंशतिधा तु ।[24]
39 तुष्टिर्नवधा ।
40 सिद्धिरष्टधा ।

---

[8] तद्गतिश्रुतेः–*g*.
[9] मयत्वश्रुतेः–*g*.
[10] संसृतिलिङ्गानां–*kh*. प्रवृत्तिलिङ्गानां–*c*.
[11] सूपकारवद्वा–*g*.
[12] मित्यन्ये–*g*.
[13] कमित्यपरः–*g*. कमपरे–*c*.
[14] प्रत्येकादृष्टे–*g*.
[15] प्रपञ्चत्वाद्यभावश्च–*kh* प्रपञ्चाद्यभावश्च–*c*
[16] वच्चैतत् प्रत्येकं–*g*.
[17] परिदृष्टे सौक्ष्म्यात् सांहत्ये–*g*.
[18] नियतकारणज्ञानात्–*g*.
[19] नात्यन्तिकत्वम्–*g*.
[20] बुद्धस्य–*g*.
[21] रागापाहतिः–*g*.
[22] इदं उत्तरसूत्रादनन्तरं पठितम्–*kh*.
[23] विहितं–*g*.
[24] ‘तु’ इति नास्ति–*g*.

41 अवान्तरभेदाः[25] पूर्ववत् ।
42 एवमितरस्याः ।
43 आध्यात्मिकादिभेदात् नवधा तुष्टिः
44 ऊहादिभिः सिद्धिरष्टधा ।[26]
45 नेतरादितरहानेन विना ।
46 दैवादिप्रभेदा ।[27]
47 आब्रह्मस्तम्बपर्यन्तं तत्कृते[28] सृष्टिः आविवेकात् ।
48 ऊर्ध्वं सत्त्व[29]विशाला ।
49 तमोविशाला मूलतः ।
50 मध्ये रजोविशाला ।
51 कर्मवैचित्र्यात् प्रधानचेष्टा गर्भदासवत् ।
52 आवृत्तिस्तत्राप्युत्तरोत्तरयोनियोगात् हेयः ।
53 समानं जरा[30]मरणादिजं दुःखम्
54 न कारणलयात् कृतकृत्यता मग्नवदु[31]त्थानात् ।
55 अकार्यत्वेऽपि तद्योगः पारवश्यात् ।
56 स हि सर्ववित् सर्वकर्ता ।
57 ईदृशेश्वरसिद्धिः सिद्धा ।
59 उष्ट्रकुङ्कुमवहनवत् ।[32]
58 प्रधानसृष्टिः परार्थं स्वतोऽप्यभोक्तृत्वात् ।
60 अचेतनत्वेऽपि क्षीरवच्चेष्टितं प्रधानस्य ।
61 कर्मवत् दृष्टेर्वा[33] कालादेः ।
62 स्वभावाचेष्टितमनभिसन्धानात् भृत्यवत् ।
63 कर्माकृष्टेर्वाऽनादितः[34] ।
64 विविक्तबोधात् सृष्टिनिवृत्तिः प्रधानस्य सूदवत् पाके ।
65 इतर इतरवत् तद्दोषात्[35] ।
66 द्वयोरेकतरस्य[36] वौदासीन्य[37]मपवर्गः ।
67 अन्यसृष्ट्युपरागेऽपि न[38]

---

[25] भेदात्–*g*.
[26] सिद्धिः–*k*.
[27] प्रभेदाः–*kh*.
[28] तत्कृता–*g*.
[29] सत्य–*c*.
[30] समानजरा–*gh*.
सर्वत्र जरा–*c*.
[31] स्नानवद्ु–*g*.
[32] भोक्तृत्वादुष्ट्रकुङ्कुमवहनवत्–*kh*.
भोक्तृत्वादुष्ट्रकुङ्कुमवत्–*c*.
[33] कर्मकरकृष्टं वा–*kh*.
कर्मकरकृतवत् दृष्टेर्वा–*c*.
[34] वाऽप्यनादितः–*g*.
[35] इतरइतरज्जहाति–*g*.
[36] द्वयोरितरस्य–*g*.
[37] वाऽप्यौदासीन्य–*g*.
[38] परागान्न–*g*.

विरज्यते प्रबुद्ध[39]रज्जु तत्त्व-
स्येवोरगः[40]।

68 कर्मनिमित्तयोगाच्च[41]।

69 नैरपेक्ष्येऽपि प्रकृत्युपका
रेऽविवेको[42] निमित्तम्।

70 नर्तकीवत् प्रवृत्तस्यापि[43]
निवृत्तिः चारितार्थ्यात्।

71 दोषबोधेऽपि[44] नापसर्पणं
प्रधानस्य कुलवधूवत्।

72 नैकान्ततो बन्धमोक्षौ पुरुष-
स्याविवेका[45]दृते।

73 प्रकृतेराञ्जस्यात् ससङ्गत्वात्[46]
पशुवत्।

74 रूपैः सप्तभिरात्मानं बध्नाति
प्रधानं कोशकार[47]वद्विमो
चयत्ये[48]करूपेण[49]।

75 निमित्तत्वमविवेकस्य[50] न
दृष्टहानिः।[51]

76 तत्त्वाभ्यासान्नेति नेतीति[52]
त्यागात् विवेकसिद्धिः।

77 अधिकारि[53]प्रभेदान्न नियमः।

78 बाधितानुवृत्त्या[54] मध्यवि-
वेकतोऽप्युपभोगः[55]।

79 जीवन्मुक्तश्च[56]।

80 उपदेश्योपदेष्टृ[57]त्वात्
तत्सिद्धिः।

81 श्रुतिश्च।

82 इतरथा अन्धपरम्परा।

83 चक्रभ्रमणवत् धृत[58]शरीरः।

84 संस्कारलेशतः तत्सिद्धिः।[59]

85 विवेकात् निःशेषदुःखनिवृत्तौ
कृतकृत्यः[60] नेतरान्नेतरात्॥

———

[39] विरमते अप्रबुद्ध–*kh*.
निवर्तते अप्रबुद्ध–*c*.

[40] तत्त्वस्येवोपरागः–*g*.

[41] निमित्तायोगाच्च–*g*.

[42] नैरपेक्षेऽप्यविवेकः–*g*.

[43] प्रवर्तकस्यापि–*g*.

[44] बोधोऽपि–*g*.

[45] स्य विवेका–*kh*.

[46] संसर्गत्वात्–*c*.

[47] कोषकार–*g*.

[48] वन्मोचयत्ये–*gh*.

[49] केन रूपेण–*c*.

[50] वेकस्येति–*g*.

[51] दृष्टान्तहानिः–*g*.

[52] नेति नेति–*gh*.

[53] अधिकार–*c*.

[54] तानुवृत्तेः–*k*.

[55] विवेकताऽप्यपभोगः–*g*.

[56] जीवन्मुक्तः–*gh*.

[57] उपदेशोपदेष्टृ–*gh*.
उपदेश–*c*.

[58] हत–*k*.

[59] संस्कारलेशतस्सिद्धिः–*kh*.
संस्कारलोपस्तत्सिद्धिः–*c*.

[60] कृतकृत्यता–*k*.

## आख्यायिकाध्यायः चतुर्थः

——

1 राजपुत्रवत्[1] तत्त्वोपदेशात्।
2 पिशाचवदन्यार्थोपदेशेऽपि[2]।
3 आवृत्तिरसकृदुपदेशात्।
4 पितापुत्रवदुभयोः दृष्टत्वात्।
5 श्येनवत्[3] सुखदुःखी त्याग वियोगाभ्याम्[4]
6 अहिनिर्ल्वयिनीवत्[5]।
7 छिन्नहस्तवद्वा।
8 असाधनानुचिन्तनं बन्धाय भरतवत्[6]।
9 बहुभिर्योगे विरोधः[7] रागादिभिः कुमारीकङ्कणवत्[8]।
10 द्वाभ्यामपि तथैव[9]।
11 निराशः सुखी पिङ्गलावत्[10]।
12 अनारम्भेऽपि[11] परगृहे सुखी सर्पवत्।
13 बहुशास्त्रगुरूपासनेऽपि सारादानं षट्पदवत्।
14 इषुकारवन्नैकचित्तस्य समाधिहानिः।
15 कृतनियमलङ्घना[12]दानर्थक्यं लोकवत्।
16 तद्विस्मरणेऽपि[13] भेकीवत्।
17 नोपदेश[14]श्रवणेऽपि कृतकृत्यता[15] परामर्शादृते विरोचनवत्।
18 दृष्टस्तयोरिन्द्रस्य।
19 प्रणतिब्रह्मचर्योपसर्पणानि[16] कृत्वा सिद्धिः बहुकालात् तद्वत्।
20 न कालनियमः वामदेववत्।
21 अध्यस्तरूपोपासनात्

---

1 राजपुत्रः–*kh*.
2 र्थोपदेशोऽपि–*g*.
3 श्वानवत्–*g*.
4 सुखदुःखभोगाभ्याम्–*kh*.
5 निर्ल्वयनी–*k*.
निर्ल्वियिनी–*kh*.
निर्लयनी–*g*.
निर्लयिनी–*c*.
6 चिन्तनवधाय बन्धवत्–*g*.
7 योगविरोधः–*g*.
8 कुमारीशङ्खवत्–*g*.
कुमारीकङ्कणशङ्खवत्–*g*.
9 तथैव च–*gh*.
10 पिङ्गलादिवत्–*g*.
11 अनारम्भे–*gh*.
12 व्रतनियमोल्लङ्घना–*kh*.
व्रतनियमलङ्घना–*g*
वृत्तनियमलङ्घना–*c*.
13 द्विस्मरणे–*g*.
14 नोपदेशे–*g*.
15 कृतकृत्यः–*g*.
16 सर्पणान्–*g*.

पारम्पर्येण यज्ञोपासकाना-
मिव ।

22 इतरलाभेऽप्यावृत्तिः[17]
पञ्चाग्नियोगतो जन्मश्रुतेः ।

23 विरक्तस्य हेयहानं उपादे-
योपादानं हंसक्षीरवत् ।

24 लब्धातिशय[18]योगाद्वा[19]
तद्वत् ।

25 न कामचारित्वं[20] रागोपहते
शुकवत्[21] ।

26 गुणयोगात् बद्धः[22] शुकवत् ।

27 न भोगाद्रागशान्तिः मुनिवत् ।

28 दोषदर्शनादुभयोः ।

29 न मलिन[23]चेतस्युपदेशबीज-
प्ररोहः अजवत् ।

30 नाभासमात्रमपि मलिनदर्प-
णवत् ।

31 न तज्जस्यापि[24] तद्रूपता
पङ्कजवत्[25] ।

32 न भूतियोगेऽपि[26] कृत-
कृत्यता उपास्यसिद्धिवदुपा-
स्यसिद्धिवत् ।

---

## परमतनिर्जयाध्यायः पञ्चमः

---

1 मङ्गलाचरणं शिष्टाचारात्
फलदर्शनात् श्रुतितश्चेति[1] ।

2 नेश्वराधिष्ठिते[2] फलनिष्पत्तिः[3]
कर्मणा तत्सिद्धेः ।

3 स्वोपकारादधिष्ठानं लोकवत् ।

4 लौकिकेश्वरवदितरथा ।

5 पारिभाषिको वा ।

6 न रागादृते तत्सिद्धिः[4]
प्रतिनियतकारणत्वात् ।

7 तद्योगेऽपि न नित्यमुक्तः ।

8 प्रधानशक्तियोगाच्चेत्
सङ्गापत्तिः ।

---

[17] भे व्यावृत्तिः–*g*.

[18] तिशये–*kh*.

[19] योगात्–*g*.

[20] न कामविचारित्वं–*kh*.
न कामिचारित्वं–*c*.

[21] नकारस्यान्तेशुकवत्–*g*.

[22] बन्धः–*g*.

[23] मलिने–*g*.

[24] तज्जन्यस्यापि–*gh*.

[25] पङ्कजादिवत्–*c*.

[26] भूतियोगे–*g*.

[1] भूतितश्चेति–*k*.

[2] राधिष्ठितैव–*g*.
राधिष्ठित–*gh*.
राधिष्ठितः–*c*.

[3] फलसम्पत्तिः-*kh*.
फलसम्पत्–*gh*,
सदा फलसम्पत्तिः–*c*.

[4] हते जगत्सिद्धिः–*g*.

9 सत्तामात्राच्चेत् सर्वैश्वर्यम् ।
10 प्रमाणाभावात् न तत्सिद्धिः ।
11 सम्बन्धाभावान्नानुमानम् ।
12 श्रुतिरपि प्रधानकार्यत्वस्य[5] ।
13 नाविद्याशक्तियोगो निस्सङ्गस्य ।
14 तद्योगे तत्सिद्धौ अन्योन्याश्रयत्वम् ।
15 न बीजाङ्कुरवत् सादिसंसारश्रुतेः[6] ।
16 विद्यातोऽन्यत्वे ब्रह्मबाधप्रसङ्गः[7] ।
17 अबाधे नैष्फल्यम्[8] ।
18 विद्याबाध्यत्वे जगतोऽप्येवम् ।
19 तद्रूपत्वे सादित्वम् ।
20 न धर्मापलापः प्रकृतिकार्यवैचित्र्यात् ।
21 श्रुतिलिङ्गादिभिः तत्सिद्धिः ।
22 न नियमः प्रमाणान्तरावकाशात् ।
23 उभयत्राप्येवम् ।
24 अर्थात् सिद्धिश्चेत् समानमुभयोः ।
25 अन्तःकरणधर्मत्वं धर्मादीनाम् ।
26 गुणादीनां च[9] नात्यन्तबाधः ।
27 पञ्चावयवयोगात्[10] सुखसंवित्तिः[11] ।
28 न सकृद्ग्रहणात् सम्बन्धसिद्धिः[12] ।
29 नियत[13]धर्मसाहित्यमुभयोरे[14]कतरस्य वा व्याप्तिः ।
30 न तत्त्वान्तरं वस्तुकल्पनाप्रसक्तेः ।
31 निजशक्त्युद्भवमित्याचार्याः ।
32 आधेयशक्तियोग इति पञ्चशिखः ।
33 न स्वरूपशक्तिर्नियमः[15] पुनर्वादप्रसक्तेः ।
34 विशेषणानर्थक्यप्रसक्तेः ।
35 पल्लवादिष्वनुपपत्तेश्च[16] ।
36 आधेयशक्तिसिद्धौ निजशक्तियोगः समानन्यायात् ।

---

[5] कार्यस्य–*g*.
[6] सादिश्रुतेः–*g*.
[7] ब्रह्मबाधप्रसक्तेः–*kh*.
[8] नैफल्यम्–*kh*.
नैष्कल्यम्–*c*.
[9] 'च' इति नास्ति–*g*.
[10] वयवसंयोगात्–*g*.
[11] सुखादिसंवित्तिः–*gh*.
[12] सिद्धिः स्वप्रतीतिविरोधात्-*kh*.
[13] नियतं–*c*.
[14] साहित्य उभयोरे–*g*.
[15] शक्तिनियमः–*g*.
[16] नुपपत्तेः–*gh*.

37 वाच्यवाचकभावः सम्बन्धः[17] शब्दार्थयोः ।
38 त्रिभिः सम्बन्धसिद्धिः[18] ।
39 न कार्ये नियमः उभयथा दर्शनात् ।
40 लोके[19] व्युत्पन्नस्य वेदार्थप्रतीतिः[20] ।
41 न त्रिभिरपौरुषेयत्वाद्वेदस्य[21] तदर्थस्याप्यतीन्द्रिय[22]त्वात्।
42 न यज्ञादेः स्वरूपतो धर्मत्वं
43 निजशक्तिः व्युत्पत्त्या व्यच्छिद्यते[23] ।
44 योग्यायोग्येषु प्रतीतिजनकत्वात तत्सिद्धिः[24] ।
45 न नित्यत्वं वेदानां कार्यत्वश्रुतेः[25] ।
46 न पौरुषेयत्वं तत्कर्तुः पुरुषस्याभावात् ।
47 मुक्तामुक्तयो[26]रयोग्यत्वात्।
48 नापौरुषेयत्वान्नित्यत्वमङ्कुरादिवत् ।
49 तेषामपि तद्योगे दृष्टबाधादिप्रसक्तिः ।
50 यस्मिन्नदृष्टेऽपि कृतबुद्धिरुपजायते तत्पौरुषेयम् ।
51 निजशक्त्यभि[27]व्यक्तेः स्वतः प्रामाण्यम् ।
52 नासतः ख्यानं नृशृङ्गवत् ।
53 न सतो बाधदर्शनात ।
54 नानिर्वचनीयस्य तदभावात्।
55 नान्यथाख्यातिः स्ववचोव्याघातात् ।
56 सदसत्ख्यातिः[28]बाधाबाधात्[29] ।
57 प्रतीत्यप्रतीतिभ्यां न स्फोटात्मकः शब्दः ।
58 न शब्दनित्यत्वं कार्यताप्रतीतेः ।
59 पूर्वसिद्धसत्त्वस्याभि[30]व्यक्तिः दीपेनेव[31] घटस्य ।
60 सत्कार्यसिद्धान्तश्चेत् सिद्धसाधनम् ।

---

[17] वाच्यवाचकसम्बन्धः—*g*.
[18] सिद्धेः—*kh*.
[19] लोक—*k*.
[20] प्रतीतेः—*g*.
[21] र्थस्यातीन्द्रिय—*g*.
[22] वेशेष्यात्—*g*.
[23] त्त्या विच्छिद्यते—*c*.
[24] तत्सिद्धेः—*g*.
[25] कार्यश्रुतेः—*g*.
[26] न मुक्तामुक्तयो—*gh*.
[27] शक्त्याभि—*g*.
[28] सदसत्ख्याति—*kh*.
सदसद्याप्तिः—*c*.
[29] बाधाबाधाभ्याम्—*g*.
[30] पूर्वसत्त्वस्याभि—*g*.
[31] प्रदीपेनेव—*g*.

61 नाद्वैतमात्मनो[32] लिङ्गात् तद्भेद[33]प्रतीतेः ।
62 नानात्माऽपि प्रत्यक्षबाधात् ।
63 नोभाभ्यां तेनैव ।
64 अन्यपरत्वमविवेकिनां तत्र ।
65 नात्माविद्या[34] नोभयं जगदु पादानकारणं निस्सङ्गत्वात् ।
66 नैकस्यानन्दचिद्रूपत्वे द्वयो-र्भेदात्[35] ।
67 दुःखनिवृत्तेर्गौणः ।
68 विमुक्तिप्रशंसा मन्दानाम् ।
69 न व्यापकत्वं मनसः करण-त्वात् इन्द्रियत्वाद्वा वास्यादि वत् चक्षु[36]रादिवच्च[37] ।
70 सक्रियत्वात् गतिश्रुतेः[38] ।
71 न निर्भागत्वं तद्योगाद्घ टवत्[39] ।
72 प्रकृतिपुरुषयोरन्यत्सर्वम-नित्यम् ।
73 न भागलाभः भागिनो[40] निर्भागत्वश्रुतेः[41] ।
74 नानन्दाभिव्यक्तिः मुक्तिः निर्धर्मत्वात्[42] ।
75 न विशेषगुणोच्छित्ति[43]स्तद्वत्
76 न विशेषगतिः निष्क्रियस्य[44] ।
77 नाकारोपरागोच्छित्तिः क्षणिकत्वादिदोषात् ।
78 न सर्वोच्छित्तिः अपुरु[45]षार्थ त्वादिदोषात् ।
79 एवं शून्यमपि ।
80 संयोगाश्च वियोगान्ताः इति न[46] देशादिलाभोऽपि ।
81 न भागियोगो भागस्य[47] ।
82 नाणिमादियोगोऽप्यवश्यंभा वित्वात्[48] तदुच्छित्ते[49]रि-तरयोगवत्[50] ।

---

[32] मात्मनां–*g*.

[33] लिङ्गाच्च भेद–*gh*.

[34] नात्मानाविद्या–*kh*.
नात्मानाद्यविद्या–*g*.
नात्मनाविद्या–*c*.

[35] इदं सूत्रं नास्ति–*c*.

[36] इन्द्रियत्वाद्वा चक्षु–*g*.

[37] वच्च तदाशु संचारित्वात्–*g*.

[38] श्रुतेश्च–*g*.

[39] घटादिवत्–*kh*.

[40] भोगिनो–*c*.

[41] गित्वश्रुतेः–*g*.

[42] निर्धर्मकत्वाद्वा–*gh*.

[43] न गुणोच्छित्ति–*c*.

[44] गतिनिष्क्रियस्य–*g*.

[45] च्छित्तिः पुरु–*kh*.

[46] विभागान्ताः न–*g*.

[47] न भागयोगोऽभागस्य–*ch*.

[48] भावितत्वात्–*c*.

[49] तदुच्छित्ति–*g*.

[50] रितरवियोगवत्–*g*.

83 नेन्द्रादिपदयोगोऽपि तद्वत् ।
84 न भूतप्रकृतिकत्व[51]मिन्द्रियाणां आहङ्कारिकत्व[52]श्रुतेः ।
85 न षट्पदार्थनियमः तद्बोधान्मुक्तिः[53] ।
86 षोडशादिष्वप्येवम् ।
87 नाणुनित्यता तत्कार्यत्वश्रुतेः ।
88 न निर्भागत्वं[54] कार्यत्वात् ।
89 न रूपनिबन्धनात्[55] प्रत्यक्षनियमः[56] ।
90 न परिमाण[57]चातुर्विध्यं द्वाभ्यां तद्योगात् ।
91 अनित्यत्वेऽपि स्थिरतायोगात् प्रत्यभिज्ञानं सामान्यस्य ।
92 न तदपलापः तस्मात् ।
93 नान्यनिवृत्तिरूपत्वं भावप्रतीतेः ।
94 न तत्त्वान्तरं सादृश्यं प्रत्यक्षोपलब्धेः ।
95 निजशक्त्यभिव्यक्तिर्वा[58] वैशिष्ट्यात्तदुपलब्धेः ।
96 न संज्ञासंज्ञि[59]सम्बन्धोऽपि ।
97 न सम्बन्धनित्यतोभयानित्यत्वात् ।
98 नाजः[60] सम्बन्धः धर्मिग्राहकप्रमाणबाधात्[61] ।
99 न समवायोऽस्ति[62] प्रमाणाभावात् ।
100 उभयत्रा[63]प्यन्यथासिद्धेः न प्रत्यक्षमनुमानं वा[64] ।
101 नानुमेयत्वमेव[65] क्रियायाः नेदिष्ठस्य तत्तद्वतोरेवापरो[66]क्षप्रतीतेः ।
102 न पाञ्चभौतिकं शरीरं बहूनामुपादानायोगात् ।

---

[51] भूताप्रकृतित्व–*g*.
[52] अहङ्कारत्व–*kh*.
अहङ्कारिकत्व–*g*.
अहङ्कारकत्व–*c*.
[53] न्मुक्तिश्च–*g*.
[54] न तन्निर्भागत्वं–*g*.
[55] निबन्धनः–*g*.
[56] प्रत्यक्षत्वनियमः–*gh*.
प्रत्यक्षत्वमिति नियमः–*c*.
[57] परिमाणे–*g*.
[58] निजधर्माभिव्यक्तिर्वा–*g*.
[59] संज्ञासंज्ञिनोः–*g*.
[60] नातः–*k*.
[61] मानबाधात्–*k*.
[62] वायस्तत्राप्यस्ति–*kk*.
[63] उभयथा–*gh*.
[64] सिद्धिर्न प्रत्यक्षानुमाने वा–*kh*.
सिद्धेः प्रत्यक्षमनुमानं वा–*c*.
[65] मेयत्वं–*g*.
[66] तत्तद्वतोरपरो–*g*.

103 न स्थूलमिति न नियमः आतिवाहकस्यापि विद्यमानत्वात् ।

104 नाप्राप्तप्रकाशकत्वमिन्द्रियाणां अप्राप्तेः सर्वप्राप्तेर्वा ।

105 न तेजोऽपसर्पणात् तैजसं चक्षुः, वृत्तितः तत्सिद्धेः ।

106 प्राप्तार्थप्रकाशलिङ्गात् वृत्तिसिद्धिः ।

107 भागगुणाभ्यां तत्त्वान्तरं वृत्तिः सम्बन्धार्थं सर्पतीति[67] ।

108 न द्रव्यनियमः[68] तद्योगात् ।

109 न देशभेदेऽप्य[69]न्योपादानताऽस्मदादिवन्नियमः[70] ।

110 निमित्तव्यपदेशात् तद्व्यपदेशः ।

111 ऊष्मजाण्डजजरायुजोद्भिज्ज-साङ्कल्पिक[71]सांसिद्धिकं चेति नियमः ।

112 सर्वेषु पृथिव्युपादानमसाधारण्यात् तद्व्यपदेशः पूर्ववत्।

113 न देहारम्भकस्य प्राणत्वं इन्द्रियशक्तितः तत्सिद्धेः[72] ।

114 भोक्तुरधिष्ठानात् भोगायतन निर्माणम् अन्यथा पूति[73]भाव प्रसङ्गात्[74] ।

115 भृत्यद्वारा[75] स्वाम्यधिष्ठितिः नैकान्त्यात्[76] ।

116 समाधिसुषुप्ति[77]मोक्षेषु ब्रह्म रूपता ।

117 द्वयोः सबीज[78]मन्यत्र[79] तद्धतिः[80] ।

118 द्वयोरिव त्रयस्यापि[81] दृष्ट त्वात् न तु द्वौ[82] ।

119 वासनया न स्वार्थ[83]ख्यापनं दोषयोगेऽपि न निमित्तस्य प्रधानबाधकत्वम् ।

---

[67] सर्पयतीति–*g*.

[68] द्रव्ये नियमः–*g*.

[69] भेदोऽप्य–*gh*.

[70] स्मदादाविव नियमः–*c*.

[71] सङ्कल्पज–*g*.

[72] तत्सिद्धौ–*gh*.

[73] भूति–*g*.

[74] प्रसक्तेः–*g*.
प्रवृत्तिः–*gh*.
प्रसङ्गः–*c*.

[75] भृत्यवर्गद्वारा–*kh*.

[76] नैकान्तात्–*k*.
'भृत्यवदधिष्ठानम्' इत्येव सूत्रं क्वचित्–*c*.

[77] सुषुप्त–*g*.

[78] सबीजत्व–*g*.

[79] अन्यस्य–*g*.

[80] तद्धानिः–*g*.

[81] त्रयस्य–*g*.

[82] न द्वौ–*c*.

[83] वासनयाऽनर्थ–*c*.
न वासनाया आनर्थक्य–*kh*.

120 एकः संस्कारः क्रियानिर्वर्तक:[84] न तु प्रतिक्रियं संस्कारभेदः बहु[85]कल्पनाप्रसक्तेः ।

121 न बाह्यबुद्धिनियमः[86]वृक्ष-गुल्मलतौषधिवनस्पतितृण-वीरुधादीनामपि[87] भोक्तृ-भोगायतनत्वं पूर्ववत् ।

122 स्मृतेश्च ।

123 न देहमात्रतः कर्माधिकारित्वं वैशिष्ट्यश्रुतेः ।

124 त्रिधा त्रयाणां व्यवस्था कर्म देहोपभोगदेहोभयदेहाः ।

125 न किञ्चिदप्यनुशयिनः[88] ।

126 न बुद्ध्यादिनित्यत्वं आश्रया विशेषेऽपि वह्निवत् ।

127 आश्रयासिद्धेश्च[89] ।

128 योगसिद्धयोऽप्यौषधादिवत् नापलपनीयाः ।

129 न भूतचैतन्यं प्रत्येकादृष्टेः[90] सांहत्येऽपि[91] च सांहत्येऽपि च ॥

---

## तन्त्राध्यायः षष्ठः

---

1 अस्त्यात्मा नास्तित्व[1]साधनाभावात् ।

2 देहादिव्यतिरिक्तोऽसौ[2]वैचित्र्यात् ।

3 षष्ठीव्यपदेशादपि ।

4 न शिलापुत्रवत्[3] धर्मिग्राहकमानबाधात् ।

5 अत्यन्तदुःखनिवृत्त्या कृतकृत्यता ।

6 यथा दुःखात् क्लेशः[4] पुरुषस्य, न तथा सुखाभिलाषः ।

7 कुत्रापि[5] कोऽपि सुखीति ।

---

[84] या निवर्तकः–*g*.
यानुवर्तकः–*c*.

[85] क्रियं संस्कारभेदाः बहु–*k*.
क्रियं बहु–*kh*.

[86] एतावदेव सूत्रं क्वचित्–*g*.

[87] वीरुदादीनां वा–*g*.

[88] प्यनुशायिनः–*g*.

[89] यासिद्धेः–*g*.

[90] प्रत्येकानुपलब्धेः–*kh*.

[91] स्वसांहत्येऽपि–*kh*.
सांहत्ये–*c*.

[1] नास्तित्वे–*g*.

[2] व्यतिरिक्तः–*c*.

[3] पुत्रकवत्–*c*.

[4] दुःखात द्वेषः–*g*.

[5] न कुत्रापि–*g*.

8 तदपि दुःखशबलमिति दुःखपक्षे निःक्षिपन्ते[6] विवेचकाः ।

9 सुखलाभाभावात् अपुरुषार्थत्वमिति चेन्न[7] द्वैविध्यात्[8]

10 निर्गुणत्वमात्मनोऽसङ्गत्वा[9] दिश्रुतेः ।

11 परमधर्मत्वेऽपि तत्सिद्धि रविवेकात् ।

12 अनादिरविवेकः अन्यथा-दोषद्वयप्रसक्तेः ।

13 न नित्यः[10] स्यादात्मवद न्यथाऽनुच्छित्तिः[11] ।

14 प्रतिनियतकारणनाश्यत्व मस्य ध्वान्तवत् ।

15 अत्रापि प्रतिनियमः अन्वय व्यतिरेकात् ।

16 प्रकारान्तरासम्भवात्[12] अविवेक एव बन्धः ।

17 न मुक्तस्य पुनर्बन्धयोगोऽप्य-नावृत्तिश्रुतेः ।

18 अपुरुषार्थत्वमन्यथा[13] ।

19 अविशेषापत्तिरुभयोः ।

20 मुक्तिरन्तरायध्वस्तेर्न परः[14] ।

21 तत्राप्यविरोधः[15] ।

22 अधिकारित्रैविध्यान्न नियमः ।

23 दार्ढ्यार्थमुत्तरेषाम् ।

24 स्थिर[16]सुखमासनमिति न नियमः ।

25 ध्यानं निर्विषयं मनः ।

26 उभयथाऽप्यविशेषश्चेत्[17]नैव मुपरागनिरोधा[18]द्विशेषः ।

27 निस्सङ्गेऽप्युपरागोऽविवे-कात् ।

---

[6] निक्षिपन्ते–*kh*.
निक्षिपन्ति–*c*.

[7] चैन्नेवं–*g*.

[8] वैचित्र्यात्–*g*.

[9] असङ्गा–*kh*.
असङ्गत्व–*c*.

[10] न परिणामिनित्यः–*gh*.
न कूटस्थपरिणामी–*c*.

[11] आत्मवदुच्छित्तः–*g*.

[12] न्तराभावात्–*g*.

[13] मन्यथा पुनर्बन्धकत्वम्–*kh*.
मन्यथा रहितिः–*g*.
मन्यथा पुरुषार्थत्वम्–*c*.

[14] ध्वस्तेर्नापरः–*kh*.
ध्वंसो न परः–*g*.
ध्वंसो न परा–*c*.

[15] प्याविरोधः अन्यथा कौटस्थ्य हानिः–*c*.

[16] स्थिरं–*g*.

[17] ऽप्यविशेषं चेत्–*kh*.

[18] विरोधा–*c*.

28 जपा[19]स्फटिकयोरिव नोपरागः किन्त्वभिमानः ।

29 ध्यानधारणाभ्यासवैराग्यादिभिः तन्निरोधः ।

30 लयविक्षेपयोर्व्यावृत्त्येत्याचार्याः ।

31 न स्थाननियमः चित्तप्रसादात्[20] ।

32 प्रकृतेराद्योपादानताऽन्येषां कार्यत्वश्रुतेः ।

33 नित्यत्वेऽपि नात्मनो योग्यत्वाभावात्[21] ।

34 श्रुति[22]विरोधान्न कुतर्कापसदस्यात्मलाभः

35 पारम्पर्येऽपि प्रधानानुवृत्तिरणुवत् ।

36 सर्वत्र कार्यदर्शनात् विभुत्वम् ।

37 गतियोगेऽप्याद्यकारणताहानिरणुवत् ।

38 प्रसिद्धाधिक्यं प्रधानस्य न नियमः ।

39 सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वात् ।

40 अनुपभोगेऽपि पुमर्थं सृष्टिः प्रधानस्योष्ट्रकुङ्कमवहनवत् ।

41 कर्मवैचित्र्यात् सृष्टिवैचित्र्यम् ।

42 साम्यवैषम्याभ्यां कार्यद्वयम्।

43 विमुक्तबोधान्न सृष्टिः प्रधानस्य लोकवत् ।

44 नान्योपसर्पणेऽपि मुक्तो[23]पभोगः[24] निमित्ताभावात् ।

45 पुरुषबहुत्वं व्यवस्थातः ।

46 उपाधि[25]श्चेत् तत्सिद्धौ पुनर्द्वैतम् ।

47 द्वाभ्यामपि[26] प्रमाणविरोधः ।

48 द्वाभ्यामप्यविरोधात् न पूर्वमुत्तरं च साधकाभावात्।

49 प्रकाशतः तत्सिद्धौ कर्मकर्तृ[27] विरोधः ।

50 जडव्यावृत्तो[28] जडं प्रकाशयति चिद्रूपः ।

51 न श्रुतिविरोधो रागिणां वैराग्याय तत्सिद्धेः ।

52 जगत्सत्यत्वं अदुष्टकारणजन्यत्वात् बाधकाभावात् ।

---

[19] जवा–*g*.
जपा–*c*.

[20] प्रसादाभावात्–*g*

[21] नोऽयोग्यत्वाभावात्–*gh*
नो योग्यत्वाभावाच्च–*c*

[22] आत्म–*g*

[23] विमुक्तो–*g*

[24] विमुक्तभोगः–*c*

[25] उपाधिसिद्धि–*kh*

[26] द्वाभ्यामयं–*gh*

[27] कर्तृत्व–*g*

[28] व्यावृत्तौ–*g*

53 प्रकारान्तरासम्भवात् सद्‌दुत्पत्तिः[29] ।
54 अहङ्कारः कर्ता न पुरुषः ।
55 चिदवसाना भुक्तिः तत्कर्मार्जितत्वात् ।
56 चन्द्रादिलोकेऽप्यावृत्तिः निमित्तसद्भावात्[30] ।
57 लोकस्य नोपदेशात् सिद्धिः[31] पूर्ववत् ।
58 पारम्पर्येण तत्सिद्धौ विमुक्ति[32]श्रुतिः ।
59 गतिश्रुतेश्च व्यापकत्वेऽप्युपाधियोगात भोगदेश काल[33]लाभः व्योमवत् ।
60 अनधिष्ठितस्य पूतिभावप्रसङ्गात्[34] न तत्सिद्धिः ।
61 अदृष्टद्वारा चेदसम्बद्धस्य तदसम्भवाज्जलादिवदङ्कुरे ।
62 निर्गुणत्वात्तदसम्भवादहङ्कारधर्मा ह्येते ।
63 विशिष्टस्य जीवत्वं अन्वयव्यतिरेकात ।
64 अहङ्कारकर्त्रधीना कार्यसिद्धिः नेश्वराधीना प्रमाणाभावात् ।
65 अदृष्टोद्भूतिवत[35] समानत्वम् ।
66 महतोऽन्यत ।
67 कर्मनिमित्तः प्रकृतेः स्वस्वामिभावोऽप्यनादिः बीजाङ्कुरवत् ।
68 अविवेकनिमित्तो वा[36] पञ्चशिखः ।
69 लिङ्गशरीरनिमित्तक इति सनन्दनाचार्यः ।
70 यद्वा तद्वा तदुच्छित्तिः पुरुषार्थः तदुच्छित्तिः पुरुषार्थः ।

साङ्ख्यसूत्राणि समाप्तानि

---

अथ कपिलमहर्षिप्रणीतानि
तत्त्वसमाससूत्राणि

---

1 अथातस्तत्त्वसमासः[1] ।
2 अष्टौ प्रकृतयः ।
3 षोडश विकाराः[2] ।

---

29 तदुत्पत्तिः–*g*
30 सम्भवात्–*g*.
31 शात् तत्सिद्धिः–*g*.
32 विमुक्त–*g*.
33 कालादि–*c*.
34 भावयोगात–*k*.
35 ष्टोद्भूतवत्–*g*.
36 निमित्ते वा–*g*.
निमित्तको वा–*c*.
1 इदं सूत्रं क्वचित् नास्ति–*k*.
2 षोडशकस्तु विकाराः–*k*.

4 पुरुषः[3] ।
5 त्रैगुण्यम् ।
6 सञ्चरः[4] ।
7 प्रतिसञ्चरः[5] ।
8 अध्यात्मम् ।
9 अधिभूतम् ।
10 अधिदैवतम्[6] ।

---

इति तत्त्वपादः प्रथमः

---

1 पञ्चाभिबुद्धयः[1] ।
2 पञ्च कर्मयोनयः ।
3 पञ्च वायवः ।
4 पञ्च कर्मात्मानः ।
5 पञ्चपर्वाऽविद्या ।
6 अष्टाविंशतिधाऽशक्तिः[2] ।
7 नवधा तुष्टिः ।
8 अष्टधा सिद्धिः[3] ।
9 दशमूलिकार्थाः[4] ।
10 अनुग्रहः सर्गः[5] ।
11 चतुर्दशविधो भूतसर्गः
12 त्रिविधो बन्धः ।
13 त्रिविधो मोक्षः ।
14 त्रिविधं प्रमाणम् ।
15 त्रिविधं दुःखम्[6] ।
16 एतत्[7] परं याथातथ्यम्[8] ।
17 एतत् ज्ञात्वा[9] कृतकृत्यः स्यात् ।
18 नासौ पुनः[10] त्रिविधेन[11] दुःखेनाभिभूयते नाभिभूयते[12] ।

इति प्रकीर्णपादः द्वितीयः

इति तत्त्वसमाससूत्राणि

---

[3] पुरुषश्च–*g*.
आत्मा–*c*.
[4] सञ्चारः–*c*.
सञ्चरः प्रतिसञ्चरश्च–*c*.
[5] प्रतिसञ्चरश्च–*c*.
[6] अधिदैवम्–*g*.
[1] पञ्च वद्धयः–*g*.
[2] अष्टाविंशतिरशक्तिः–*c*.
अष्टाचत्वारिंशधा अशक्तिः–*g*.
[3] अष्टधा शक्तिः–*g*.
[4] दश मूलिकाः अर्थाः–*g*.
दश फलिकार्थाः–*gh*.
[5] अनुग्रहसर्गः–*c*.
[6] दुःखमिति–*gh*.
[7] इत्येतत्–*g*.
[8] याथार्थ्यम्–*c*.
[9] एतत् सम्यग् ज्ञात्वा–*k*.
[10] न पुनः–*k*.
[11] त्रिविध–*g*.
[12] दुःखेनाभिभूयते–*k* अन्तिमं सूत्रत्रयमपि एकसूत्रत्वेन पठ्यते क्वचित्–*gh*.

# ईश्वरकृष्णविरचिताः साङ्ख्यकारिकाः

1 दुःखत्रयाभिघातात्
जिज्ञासा तदपघातके[1] हेतौ।
दृष्टे साऽपार्था चेत्
नैकान्तात्यन्ततोऽभावात्॥

2 दृष्टवदानुश्रविकः
स ह्यविशुद्धि[2]क्षयातिशययुक्तः।
तद्विपरीतः श्रेयान्
व्यक्ताव्यक्तज्ञविज्ञानात्।

3 मूलप्रकृतिरविकृतिः
महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकस्तु विकारः
न प्रकृतिः न विकृतिः पुरुषः॥

4 दृष्टमनुमानमाप्तवचनं
सर्वप्रमाणसिद्धत्वात्।
त्रिविधं प्रमाणमिष्टं
प्रमेयसिद्धिः प्रमाणाद्धि॥

5 प्रतिविषयाध्यवसायो दृष्टं
त्रिविधमनुमानमाख्यातम्।
तल्लिङ्गलिङ्गिपूर्वकं
आप्तश्रुतिराप्तवचनं तु[3]॥

6 सामान्यतस्तु दृष्टात्
अतीन्द्रियाणां प्रतीतिरनु-
मानात्[4]।
तस्मादपि चासिद्धं
परोक्षमाप्तागमात् सिद्धम्[5]॥

7 अतिदूरात् सामीप्यात्
इन्द्रियघातात् मनोऽनवस्था
नात्॥
सौक्ष्म्यात् व्यवधानात्
अभिभवात् समानाभिहाराच्च॥

8 सौक्ष्म्यात् तदनुपलब्धिः
नाभावात् कार्यतः तदुपलब्धेः[6]।
महदादि तच्च कार्यं
प्रकृतिसरूपं विरूपं च[7]।

9 असदकरणात् उपादानग्रहणात्
सर्वसम्भवाभावात्
शक्तस्य शक्यकरणात्
कारणभावाच्च सत्कार्यम्॥

10 हेतुमदनित्यं अव्यापि
सक्रियमनेकमाश्रितं लिङ्गम्।
सावयवं परतन्त्रं
व्यक्तं विपरीतमव्यक्तम्॥

11 त्रिगुणमविवेकि विषयः
सामान्यमचेतनं प्रसवधर्मि।
व्यक्तं तथा प्रधानं
तद्विपरीतः तथाच पुमान्[8]॥

---

[1] तदभिघातके–*m.g.*
तदुपघातके–*v*.
तदवघातके–*j*.

[2] विशुद्धः–*m*.

[3] वचनं च–.

[4] प्रसिद्धिरनुमानात्–*j*

[5] साध्यम्–*m*.

[6] तदुपलब्धिः–*m*.

[7] प्रकृतिविरूपं सरूपं च–*g*.

[8] इयमार्या युक्तिदीपिकायां न व्याख्याता–*y*.

12 प्रीत्यप्रीतिविषादात्मका:
प्रकाशप्रवृत्तिनियमार्था:।
अन्योन्याभिभवाश्रय
जननमिथुनवृत्तयश्च गुणा:[9]॥

13 सत्त्वं लघुप्रकाशकमिष्टं
उपष्टम्भकं चलं च रज:।
गुरुवरणकमेव तम:
प्रदिपवच्चार्थतो वृत्ति:॥

14 अविवेक्यादे: सिद्धि:[10]
त्रैगुण्यात तद्विपर्ययाभावात्[11]।
कारणगुणात्मकत्वात
कार्यस्याव्यक्तमपि सिद्धम्॥

15 भेदानां परिमाणात्
समन्वयात् शक्तित: प्रवृत्तेश्च।
कारणकार्यविभागात्
अविभागात् वैश्वरूप्यस्य।

16 कारणमस्त्यव्यक्तं
प्रवर्तते त्रिगुणत: समुदयाच्च।
परिणामत: सलिलवत्
प्रतिप्रतिगुणाश्रयविशेषात्॥

17 सङ्घातपरार्थत्वात
त्रिगुणादिविपर्यायादधिष्ठानात्।
पुरुषोऽस्ति भोक्तृभावात
कैवल्यार्थं प्रवृत्तेश्च॥

18 जन्ममरण[12]करणानां
प्रतिनियमात अयुगपत्प्रवृत्तेश्च।
पुरुषबहुत्वं सिद्धं
त्रैगुण्य[13]विपर्ययाच्चैव॥

19 तस्माच्च विपर्यासात्
सिद्धं साक्षित्वमस्य पुरुषस्य।
कैवल्यं माध्यस्थ्यं
द्रष्टृत्वं अकर्तृभावश्च॥

20 तस्मात् तत्संयोगात्
अचेतनं चेतनावदिव लिङ्गम्।
गुणकर्तृत्वेऽपि तथा[14]
कर्तेव भवत्युदासीन:॥

21 पुरुषस्य दर्शनार्थं
कैवल्यार्थं[15] तथा प्रधानस्य।
पङ्ग्वन्धवदुभयोरपि
संयोग: तत्कृत: सर्ग:॥

22 प्रकृतेर्महान् ततोऽहङ्कार:
तस्मात् गणश्च षोडशक:।
तस्मादपि षोडशकात्
पञ्चभ्य: पञ्चभूतानि॥

23 अध्यवसायो बुद्धि:
धर्मो ज्ञानं विराग ऐश्वर्यम्।
सात्त्विकमेतद्रूपं
तामसमस्मात विपर्यस्तम्॥

---

[9] इयं च कारिका युक्तिदीपिकायां न व्याखयाता–*y*.

[10] अविवेक्यादि: सिद्ध:–*m*.

[11] तद्विपर्ययेऽभावात्–*v*.

[12] जननमरण–*y*.

[13] त्रिगुणादि–*j*.

[14] त्वे च तथा–*g*.*y*.

[15] दर्शनार्थ: कैवल्यार्थ:–*y*.

24 अभिमानोऽहङ्कारः
तस्मात् द्विविधः[16] प्रवर्ततेसर्गः।
एकादशकश्च गणः[17]
तन्मात्रपञ्चकश्चैव[18]॥
25 सात्त्विक एकादशकः
प्रवर्तते वैकृतादहङ्कारात्।
भूतादेः तन्मात्रः[19]
स तामसः तैजसादुभयम्॥
26 बुद्धीन्द्रियाणि चक्षुः-
श्रोत्रघ्राणरसनत्वगाख्यानि[20]।
वाक्पाणिपादपायू-
पस्थाः[21] कर्मेन्द्रियाण्याहुः॥
27 उभयात्मकमत्र मनः
सङ्कल्पकमिन्द्रियं च साधर्म्यात्।
गुणपरिणामविशेषात्
नानात्वं बाह्यभेदाश्च॥[22]
28 रूपादिषु[23] पञ्चानां
आलोचनमात्रमिष्यते वृत्तिः।
वचनादानविहरणो-
त्सर्गानन्दाश्च पञ्चानाम्॥
29 स्वालक्षण्यं[24] वृत्तिः त्रयस्य
सैषा भवत्यसामान्या।
सामान्यकरणवृत्तिः
प्राणाद्याः वायवः पञ्च॥
30 युगपच्चतुष्टयस्य तु वृत्तिः
क्रमशश्च तस्य निर्दिष्टा।
दृष्टे तथाऽप्यदृष्टे
त्रयस्य तत्पूर्विका वृत्तिः॥
31 स्वां स्वां प्रतिपद्यन्ते
परस्पराकूतहेतुकां[25] वृत्तिम्।
पुरुषार्थ एव हेतुः
न केनचित् कार्यते करणम्॥
32 करणं त्रयोदशविधं
तदाहरणधारणप्रकाशकरम्
कार्यं तस्य च दशधा
आहार्यं धार्यं प्रकाश्यं च।

---

16 विविधः–*y*
17 ऐन्द्रिय एकादशकः–*m*
18 तन्मात्रं पञ्चकश्चैव–*v*
तन्मात्रः पञ्चकश्चैव–*g*
19 तान्मात्रः–*y*
20 याणि श्रोत्रत्वक्चक्षूरसननासि
काऽऽख्यानि–*m.*
याणि चक्षुःश्रोत्रघ्राणरसन-
स्पर्शनकानि–*g.*
कर्णत्वक्चक्षूरसननासि-
काख्यानि–*v.*
21 पायूपस्थान्–*g.j.m.y.*
22 अस्याः आर्यायाः स्थाने–
" सङ्कल्पकमत्र मनः
तच्चेन्द्रियमुभयथा समा-
ख्यातम्।
अन्तस्त्रिकालविषयं
तस्मादुभयप्रचारं तत्॥"
इति भट्टोत्पलेन पठितम्॥
'बाह्यभेदाश्च' इत्यस्य स्थाने
'ग्राह्यभेदाच्च' इति–*m*
23 शब्दादिषु–*g.j.v.y.*
24 स्वालक्षण्या–*m*
25 कृतहैतुकीं–*j.*

33 अन्तःकरणं त्रिविधं
दशधा बाह्यं त्रयस्य विष-
याख्यम् ।
साम्प्रतकालं बाह्यं
त्रिकालमाभ्यन्तरं करणम् ॥

34 बुद्धीन्द्रियाणि तेषां
पञ्चविशेषाविशेषविषयाणि ।
वाग् भवति शब्दविषया
शेषाणि तु[26] पञ्चविषयाणि ॥[27]

35 सान्तःकरणा बुद्धिः
सर्वं विषयमवगाहते यस्मात् ।
तस्मात् त्रिविधं करणं
द्वारि द्वाराणि शेषाणि ॥

36 एते प्रदीपकल्पाः
परस्परविलक्षणाः गुणविशेषाः ।
कृत्स्नं पुरुषस्यार्थं
प्रकाश्य बुद्धौ प्रयच्छन्ति ॥

37 सर्वं प्रत्युपभोगं यस्मात्
पुरुषस्य साधयति बुद्धिः ।
सैव च विशिनष्टि पुनः[28]
प्रधानपुरुषान्तरं सूक्ष्मम ॥

38 तन्मात्राण्यविशेषाः
तेभ्यो भूतानि पञ्च पञ्चभ्यः ।
एते स्मृताः विशेषाः
शान्ता घोराश्च मूढाश्च ॥

39 सूक्ष्माः मातापितृजाः सह-
प्रभूतैः त्रिधा विशेषाः स्युः ।
सूक्ष्माः तेषां नियताः
मातापितृजाः निवर्तन्ते ॥

40 पूर्वोत्पन्नमसक्तं नियतं
महदादिसूक्ष्मपर्यन्तम् ।
संसरति निरुपभोगं
भावैरधिवासितं लिङ्गम ॥

41 चित्रं यथाश्रयमृते
स्थाण्वादिभ्यो विना यथा
छाया ।
तद्वद्विनाऽविशेषैः[29]
न तिष्ठति[30] निराश्रयं लिङ्गम् ॥

42 पुरुषार्थहेतुकमिदं
निमित्तनैमित्तिकप्रसङ्गेन ।
प्रकृतेर्विभुत्वयोगात्
नटवत् व्यवतिष्ठते लिङ्गम ॥

43 सांसिद्धिकाश्च भावाः
प्राकृतिकाः वैकृतिकाश्च[31]
धर्माद्याः ।
दृष्टाः करणाश्रयिणः
कार्याश्रयिणश्च कललाद्याः ॥

44 धर्मेण गमनमूर्ध्वं
गमनमधस्तात् भवत्यधर्मेण ।
ज्ञानेन चापवर्गः
विपर्ययादिष्यते बन्धः ॥

---

[26] शेषाण्यपि–*m.*
[27] पञ्चविषयीणि-*j.*
पञ्चविशेषाविशेषविषयीणि–*y.*
[28] विशिनष्टि ततः–*m.*
[29] द्विना विशेषैः–*v.*
[30] तिष्ठति न–*j. m.y.*
[31] वैकृताश्च–*g.v.*

45 वैराग्यात् प्रकृतिलयः
संसारो भवति राजसाद्रा-
गात्[32]।
ऐश्वर्यादविघातः
विपर्ययात् तद्विपर्यासः[33]।

46 एष प्रत्ययसर्गः
विपर्ययाशक्तितुष्टिसिद्ध्याख्यः।
गुणवैषम्यविमर्दात्
तस्य[34] भेदास्तु पञ्चाशत् ॥

47 पञ्च विपर्ययभेदाः
भवन्त्यशक्तिश्च[35] करणवै-
कल्यात् ॥
अष्टाविंशतिभेदा तुष्टिः
नवधाऽष्टधा सिद्धिः ॥

48 भेदस्तमसोऽष्टविधः
मोहस्य च दशविधो महा-
मोहः।
तामिस्रोऽष्टादशधा
तथा भवत्यन्धतामिस्रः॥

49 एकादशेन्द्रियवधाः
सह बुद्धिवधैः अशक्तिरुद्दिष्टा।
सप्तदश वधा बुद्धेः[36]
विपर्ययात् तुष्टिसिद्धीनाम् ॥

50 आध्यात्मिक्यः चतस्रः
प्रकृत्युपादानकालभागाख्याः।
बाह्याः विषयोपरमात्
पञ्च च नव तुष्टयोऽभि
मताः[37]॥

51 ऊहः शब्दोऽध्ययनं
दुःखविघाताः त्रयः[38] सुहृ-
त्प्राप्तिः।
दानं च सिद्धयोऽष्टौ
सिद्धेः पूर्वोऽङ्कुशः त्रिविधः ॥

52 न विना भावैर्लिङ्गं
न विना लिङ्गेन भावनिर्वृत्तिः[39]
लिङ्गाख्यो भावाख्यः
तस्मात् द्विधा प्रवर्तते-
सर्गः[40] ॥

53 अष्टविकल्पो दैवः
तैर्यग्योनश्च पञ्चधा भवति।
मानुष[41]श्चैकविधः
समासतो भौतिकः सर्गः ॥

---

[32] संसारी राजसाद्भवति-
रागात्-*m.*

[33] अनैश्वर्यात्तद्विपर्यासः-*j.*

[34] तस्य च-*g. v.*

[35] भवन्त्यशक्तेश्च-*m.*
भवन्त्यशक्तिस्तु-*y.*

[36] बुद्धिः-*m.*

[37] पञ्च नव च तुष्टयोऽभिमताः-*m.*
पञ्च नव तुष्टयोऽभिहिताः-*j.*

[38] दुःखविघातत्रयम्-*m.*

[39] भावसंसिद्धिः-*y.*
भावनिष्पत्तिः-*j.*

[40] तस्मात् भवति द्विधा सर्गः-*m.*
तस्मात द्वेधा प्रवर्तते सर्गः-*j.*
तस्मात् द्विविधः प्रवर्तते सर्गः-*g.*

[41] मानुष्य-*v.*

54 ऊर्ध्वं सत्त्वविशाल:
तमोविशालश्च[42] मूलत: सर्ग:।
मध्ये रजोविशाल:
ब्रह्मादिस्तम्बपर्यन्त: ॥

55 तत्र जरामरणकृतं
दु:खं प्राप्नोति चेतन: पुरुष:।
लिङ्गस्याविनिवृत्ते:
तस्मात् दु:खं स्वभावेन[43] ॥

56 इत्येष प्रकृतिकृत:[44]
महदादिविशेषभूतपर्यन्त:।[45]
प्रतिपुरुषविमोक्षार्थं
स्वार्थ इव परार्थ आरम्भ:॥

57 वत्सविवृद्धिनिमित्तं
क्षीरस्य यथा प्रवृत्तिरज्ञस्य।
पुरुषविमोक्षनिमित्तं
तथा प्रवृत्ति: प्रधानस्य ॥

58 औत्सुक्यनिवृत्त्यर्थं
यथा क्रियासु प्रवर्तते लोक:।
पुरुषस्य विमोक्षार्थं
प्रवर्तते तद्वदव्यक्तम् ॥

59 रङ्गस्य दर्शयित्वा
निवर्तते नर्तकी यथा
नृत्यात्[46]।
पुरुषस्य तथाऽऽत्मानं
प्रकाश्य विनिवर्तते प्रकृति:॥

60 नानाविधैरुपायै:
उपकारिण्यनुपकारिण: पुंस:।
गुणवत्यगुणस्य सत:
तत्कार्यमपार्थकं चरति[47] ॥

61 प्रकृते: सुकुमारतरं न
किञ्चिदस्तीति मे मतिर्भवति।
या दृष्टाऽस्मीति पुन:
न दर्शनमुपैति पुरुषस्य[48] ॥

62 तस्मात् न बध्यतेऽद्धा
न मुच्यते[49] नापि संसरति
कश्चित्।
संसरति बध्यते मुच्यते च
नानाश्रया प्रकृति: ॥

---

[42] तमोविशालस्तु–*j*.

[43] समासेन–*m*.

[44] प्रकृतिकृतौ–*g*.

[45] प्रवर्तते तत्त्वभूतभावाख्य:–*v*. महदादि विषयभूतपर्यन्त:–*m*.

[46] नृत्तात्–*j*.

[47] एनांकारिकामारभ्य 60, 61, 62, 63, आर्याचतुष्टयं कैश्चित् त्यक्तम्–*c*.

[48] एतदनन्तरं श्रीबालगङ्गाधरतिलकपरिशोधिते पुस्तके–
"कारणमीश्वरमेके
पुरुषं कालं स्वभावं वा।
प्रजा: कथं निर्गुणतो
व्यक्त: काल: स्वभावश्च ॥
इति अधिका एका आर्या दृश्यते।

[49] न बध्यते नापि मुच्यते–*g*.
न बध्यतेऽसौ न मुच्यते–*v*.

63 रूपैः सप्तभिरेव तु[50]
बध्नात्यात्मानमात्मना
प्रकृतिः।
सैव च पुरुषार्थं[51] प्रति
विमोचयत्येकरूपेण[52]॥

64 एवं तत्त्वाभ्यासात् नास्मि[53]
न मे नाहमित्यपरिशेषम्।
अविपर्ययाद्विशुद्धं
केवलमुत्पद्यते ज्ञानम्॥

65 तेन निवृत्तप्रसवां
अर्थवशात् सप्तरूपविनिवृत्ताम्।
प्रकृतिं पश्यति पुरुषः
प्रेक्षकवदवस्थितः स्वस्थः[54]॥

66 दृष्टा मयेत्युपेक्षक[55] एकः
दृष्टाऽहमित्युपरमत्यन्या[56]।
सति संयोगेऽपि तयोः
प्रयोजनं नास्ति सर्गस्य[57]॥

67 सम्यग् ज्ञानाधिगमात्
धर्मादीनां अकरणप्राप्तौ।
तिष्ठति संस्कारवशात्
चक्रभ्रमिवत्[58] धृतशरीरः॥

68 प्राप्ते शरीरभेदे
चरितार्थत्वात् प्रधानविनि-
वृत्तौ[59]।
ऐकान्तिकमात्यन्तिकं
उभयं कैवल्यमाप्नोति॥

69 पुरुषार्थ[60]ज्ञानमिदं गुह्यं
परमर्षिणा समाख्यातम्[61]।
स्थित्युत्पत्तिप्रलयाः
चिन्त्यन्ते यत्र भूतानाम्[62]॥

70 एतत् पवित्रमग्र्यं मुनिः
आसुरयेऽनुकम्पया प्रददौ।
आसुरिरपि पञ्चशिखाय
तेन च बहुधा कृतं[63] तन्त्रम्[64]॥

71 शिष्यपरम्परयाऽऽगतं
ईश्वरकृष्णेन चैतदार्याभिः।
संक्षिप्तमार्यमतिना
सम्यग् विज्ञाय सिद्धान्तम्॥

---

50 सप्तभिरेव–*j*.
सप्तभिरेवं–*g*.

51 पुरुषस्यार्थं–*m*.

52 इयमार्या चीनीभाषान्तरकारेण परित्यक्ता।

53 नास्ति–*c*.

54 सुस्थः–*v*.
इयं चार्या कैश्चित् परित्यक्ता–*c*.

55 रङ्गस्थ इत्युपेक्षकः–*g*.

56 त्युपरमत्येका–*g*.
त्युपरमतैका–*v*.

57 इयमार्या परित्यक्ता–*c*.

58 भ्रमवत्–*g*.

59 विनिवृत्तेः–*n*.

60 पुरुषार्थं–*n*.

61 परमर्षिणा ख्यातम्–*v*.

62 इत आरभ्य आसमाप्ति आर्याचतुष्टयं माठरवृत्तिकारेण परित्यक्तम्–*m*.

63 बहुलीकृतं–*v*. *c*.

64 इतः प्रभृति आसमाप्ति आर्यात्रयं गौडपादेन न व्याख्यातम्–*g*.

72 सप्तत्यां किल येऽर्थाः
तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य।
आख्यायिकाविरहिताः
परिवादविवर्जिताश्चापि[65]॥

इति साङ्ख्यकारिकाः समाप्ताः

---

[65] परवादविवर्जिताश्चेति–*m.*
इतः परं माठरवृत्तौ इयमार्या
दृश्यते–
तस्मात् समासदृष्टं
शास्त्रमिदं नार्थतश्च परिहीनम्।
तन्त्रस्य च बृहन्मूर्तेः
दर्पणसङ्क्रान्तमिव बिम्बम्॥
इति–*m.*



# साङ्ख्यदीपिकायां पाठभेदाः

| पुटम्—पंक्तिः | | मुद्रितःपाठः | पाठान्तरम् |
|---|---|---|---|
| 4 | 12 | स्वसङ्घात | सङ्घात–*a* |
| 4 | 16 | दाहाद्युत्थं | दाहाद्युत्थितम्–*b* |
| 5 | 5 | गतावस्थं | गतावस्थः–*a* |
| 6 | 15 | अपिः | अपि–*a* |
| 7 | 14 | नोऽस्वस्थः | नोऽस्वच्छः–*b* |
| 9 | 13 | औपाधिक | सोपाधिक–*b* |
| 11 | 2 | सांवृतिकं | सांवृत्तिकं–*a* |
| 11 | 2 | संवृतिश्च | संवृत्तिश्च–*a* |
| 11 | 5 | संवित्तिभेदवानिव | संवृतिभेदवानेव–*a* |
| 12 | 9 | सङ्ग्रहः | सङ्ग्रहे–*b* |
| 12 | 17 | रागे विषयवासना, तन्निमित्त | रागोपासनानिमित्त–*a* |
| 13 | 19 | यथा व्यधि | यथाऽप्यधि–*a* |
| 14 | 18 | प्रवृत्तिनिवृत्त्यन्य | प्रवृत्तिरित्यन्य–*a* |
| 16 | 1 | विज्ञानाभा | विज्ञानभा–*a* |
| 17 | 11 | यदि | यदि च–*a* |
| 17 | 12 | श्रुतीरुप | श्रुतिमुप–*a* |
| 18 | 12 | त्वदुक्त | त्वदुक्तं–*b* |
| 18 | 15 | प्रकृति | प्रकृत–*a* |
| 19 | 9 | योगाङ्गानु | योगानु–*a* |
| 20 | 21 | साक्षात्कार | साक्षात्कारि–*b* |
| 21 | 19 | यथाश्रुते | तथाच श्रुतेः |
| 22 | 20 | त्यवधेयम | त्यविधेयम्–*a* |
| 22 | 21 | वृत्तिम | वृत्तिव–*b* |
| 23 | 1 | ततः प्रकृतेः | पूर्ववद्व्यतिरेकः–*a* |
| 23 | 15 | परार्थं | पदार्थ–*a* |
| 23 | 17 | परार्थं | पदार्थजातं–*a* |

| | | | |
|---|---|---|---|
| 23 | 18 | परार्था | पदार्था–*a* |
| 23 | 23 | अनादीत्यर्थ | अनादित्वात् |
| 25 | 4 | मननं | मनसः–*a* |
| 26 | 10 | कारणत्वो | कारणिको–*a* |
| 27 | 2 | योगेन संयोगेनैव | योगे संयोगेनेव–*a* |
| 27 | 9 | मोक्षाहे | मोक्षहे–*a* |
| 28 | 4 | विमोकः | विमोक्षः-*a* |
| 28 | 11 | निज | नित्य–*b* |
| 29 | 14 | धारि | धारं |
| 30 | 5 | लब्धाति | शद्धाति–*a* |
| 31 | 3 | यथायोग्यं | यथायोगं–*a* |
| 31 | 3 | सामान्यस्य | सामान्यज्ञेयस्य–*a* |
| 31 | 6 | त्याद्यखि | त्याप्यखि–*a* |
| 31 | 7 | धानात् | धानत्वात्–*a* |
| 31 | 11 | लोहः | ऊहः–*a* |
| 32 | 14 | बोधः | बोध्यः–*a* |
| 33 | 12 | इत्यत्रोक्ते | इत्यत्रोक्तेः–*a* |
| 33 | 13 | 'प्रमाणफलभूतसिद्धेः' इतिनास्ति–*a* | |
| 33 | 13 | परिणामा | परिणामिता–*b* |
| 34 | 18 | नुपलब्ध्या | नुपलभ्या–*a* |
| 35 | 8 | नन्वभावा | सर्वभाव–*a* |
| 37 | 13 | लयःप्राग | लयप्राग–*a* |
| 37 | 20 | लीनपरम्परया इति | लीनयेत्यन्यथैवेत्यर्थः–*b* |
| 38 | 20 | व्यपदेशात् | शद्धात्–*b* |
| 38 | 22 | सधर्मक | सधर्म–*a* |
| 40 | 5 | पञ्चभूतान्तं | भूम्यन्तं |
| 40 | 5 | न तावत् पुरुषः | न चित्–*b* |
| 40 | 5 | मोक्षान्यथा | मोक्षादन्यथा–*a* |
| 42 | 2 | त्याशङ्कापरिहारेण | त्यत आह–*a* |
| 42 | 6 | शरीरादि | शारीरादि–*a* |
| 42 | 22 | विशेष | विशेषण–*a* |
| 43 | 17 | पूर्णः सदाशिवः | सर्वगतः शिवः–*a* |

| | | | |
|---|---|---|---|
| 47 | 3 | साधना | प्रयोगा–*a* |
| 48 | 11 | चित्सान्नि | पुरुषसान्नि–*b* |
| 48 | 16 | श्रीभाव | श्रीभावा–*a* |
| 49 | 4 | 'विस्तरतः' इतिनास्ति–*b* | |
| 49 | 7 | यान्तिम | यशेषं–*a* |
| 50 | 2 | बन्धोऽपि | भोगोऽपि–*b* |
| 50 | 3 | सृष्ट्यैव | सृष्टस्यैव–*a* |
| 50 | 5 | ख्यात्या उत्पन्न | ख्यातृत्वं–*a* |
| 50 | 8 | वासनायाः वलवत्त्वात् | वासनापटुत्वात्–*a* |
| 50 | 11 | 'न' इति नास्ति–*a* | |
| 50 | 12 | पुनः·····यावत् | ज्ञानसिद्धिः–*a* |
| 51 | 7 | 'अपि' इति नास्ति–*a* | |
| 51 | 9 | अर्थक्रियाकारि | अर्थकार्य–*a* |
| 51 | 13 | संज्ञाने | संविज्ञाने–*a* |
| 52 | 4 | त्वेऽपि न अ | त्वेऽत्य–*a* |
| 52 | 9 | पेणाऽव | पेऽव–*b* |
| 53 | 2 | भूतौ····षावेव | भूतः····ष एव–*a* |
| 55 | 8 | न तु | न–*a* |
| 55 | 9 | इत्येव | इत्येव वा–*a* |
| 55 | 15 | विरोधः | विरोधकः–*a* |
| 55 | 18 | 'च' इति नास्ति–*a* | |
| 56 | 2 | संसर्गेण | संगवशात्–*b* |
| 56 | 3 | सङ्गादगुणतः | सङ्गगुणतः–*a* |
| 56 | 8 | त्सृष्टव्या | त्स्रष्टव्या–*a* |
| 56 | 10 | येनोपकारेणै | येनेन्द्रियस्योपकरणेनै–*a* |
| 56 | 19 | सङ्कल्पविकल्पा | सङ्कल्पा–*a* |
| 57 | 2 | सामान्य | सामान्यं–*a* |
| 57 | 8 | पिण्डीकृत्यं | पुरुषात् स्वस्थ वृत्तेः पिण्डीकृत्य–*a* |
| 58 | 11 | करण | सरण–*b* |
| 58 | 20 | बाह्याभ्यन्तरैर्मि | बाह्यान्तर्मि–*a* |
| 59 | 1 | अवान्तर | बाह्याभ्यन्तर–*a* |

| | | | |
|---|---|---|---|
| 59 | 5 | तमत्व | तमत्वं–*a* |
| 59 | 6 | 'पुरु....तया' इति नास्ति–*a* | |
| 60 | 9 | मनसः प्रा | मनः प्रा–*a* |
| 60 | 11,12 | आपेक्षिकः | अपेक्षिकः–*a* |
| 60 | 17,20 | कर्मार्जित | कर्मज–*a* |
| 61 | 5 | मूढत्वादिवि | मूढत्वाद्वि–*a* |
| 63 | 4 | देहाद्देहान्तरसंसरण | संसृति–*a* |
| 63 | 6 | सम्प्रति परि | सम्परि–*a* |
| 63 | 7 | संसरण | संसृति–*b* |
| 63 | 19 | तस्यैव | तथैव–*a* |
| 63 | 20 | कार्यत्वं यतः | कार्यकत्वं कुतः–*a* |
| 64 | 4 | विचित्र | विलक्षण–*a* |
| 64 | 11 | सूक्ष्मं | सूक्ष्मात्–*a* |
| 64 | 15 | निराश्रयं | निराश्रया–*a* |
| 64 | 18 | काशमेव | काश एव–*a* |
| 65 | 13 | संसृतिः | प्रवृत्तिः–*a* |
| 65 | 14 | राजार्थं | राज्ञोऽर्थे–*a* |
| 66 | 5 | पृथ्व्याख्ये | वृद्धयाख्ये–*b* |
| 66 | 6 | अपरे | नपरे अपरे–*a* |
| 66 | 15 | काद्दष्टे | काद्दष्टि–*a* |
| 66 | 17 | द्रव्यव्यावृ | द्रव्यावृ–*b* |
| 67 | 6 | अविवेकनिवृत्तौ | अविवेकोच्छेदे–*a* |
| 67 | 17 | नात्यन्तिकं | नात्यन्तिकत्वम्–*a* |
| 68 | 3 | पुण्यवत् | पुण्यात्–*a* |
| 68 | 13 | णासनस्व | णाससर्व–*a* |
| 68 | 16,17 | विधार | विदार–*b* |
| 69 | 2 | स्थिरसु | स्थिरसत् सु–*a* |
| 70 | 1 | योगिसन्तु | यौगिनौ तु–*a* |
| 70 | 17 | भावनायाय | भावनाद्य–*b* |
| 71 | 12 | पैत्र | पैत्र्य–*a* |
| 71 | 13 | तैर्यग्योन्यः | तैर्यग्योनः–*b* |
| 71 | 20 | मूलतः | भूतलतः |

*4

| | | | |
|---|---|---|---|
| 72 | 7 | सत्त्व | सर्व-*b* |
| 72 | 14 | कारण | करण-*b* |
| 72 | 20 | अकार्यत्वेऽपि | अकार्येऽपि-*a* |
| 72 | 24 | योनियोगः | योगियोगः-*b* |
| 73 | 1 | कारण | प्रमाण-*a* |
| 73 | 8 | विस्तरतः | विस्तारतः-*a* |
| 73 | 12 | र्थं वा | र्थं स्वार्थं वा-*a* |
| 74 | 15 | निवर्त्तते | निवर्त्यते-*b* |
| 75 | 10 | निवृत्तेऽपि | निवृत्तोऽपि-*a* |
| 78 | 5 | विवेक | अविवेक-*a* |
| 78 | 5 | गुरुशिष्यभावप्रमाणात् | शिष्यप्रवणात्-*a* |
| 78 | 15 | कुलाल | कुल्या-*a* |
| 79 | 6 | कार्योऽव्यक्तस्य | कार्याण्यस्याप्य-*a* |
| 80 | 1 | प्रदर्श्यन्ते | प्रदृश्यन्ते-*a* |
| 80 | 4 | विविच्य | विवेच्य-*a* |
| 80 | 8 | पदेशेऽपि | पदेशोऽपि-*b* |
| 80 | 9 | नार्थके गीतोप | नार्थमीशोप-*a* |
| 81 | 6 | यथा आमिष | यथाविष-*a* |
| 82 | 11 | संछिद्य | संछिन्द्य-*b* |
| 82 | 13 | अनारम्भेऽपि | अनारम्भोऽपि-*a* |
| 83 | 7 | तदैव | तदेव-*a* |
| 83 | 13 | तद्वत् वर्णा | तद्वर्णा-*a* |
| 83 | 14 | नियमलङ्घनात् ज्ञानादिक | नियमलङ्घनादिक-*a* |
| 83 | 18 | नियमं | नियत-*a* |
| 84 | 8 | जन्मान्तरी | ज्ञानान्तरी-*b* |
| 85 | 20 | परिग्रहेण | पाणिग्रहेण-*a* |
| 86 | 1 | 'बीज' इति नास्ति-*a* | |
| 86 | 5 | 'अपि' इति नास्ति-*a* | |
| 86 | 9 | बीजाज्ज्ञातो | बीजात् ज्ञातो-*b* |
| 86 | 16 | न्तरङ्गकम् | न्तरङ्गतः-*a* |
| 87 | 1 | विरुद्धान् पर | विरुद्धानपर-*a* |
| 87 | 10 | रस्याधिष्ठा | रस्यफलदा-*a* |

| | | | |
|---|---|---|---|
| 88 | 10 | सन्निधि | प्रकृतिसन्निधि–*a* |
| 91 | 2 | विध्यादि | विद्यादि–*a* |
| 91 | 20 | तव | तैः–*a* |
| 92 | 5 | संवित्तिः | संपत्तिः–*a* |
| 92 | 6 | विषये | विवादविषये–*a* |
| 94 | 4 | 'शब्दार्थयोः' इति नास्ति–*a* | |
| 94 | 5 | शब्दार्थो | शब्दादर्थो–*b* |
| 95 | 5 | यज्ञादेः | पश्चादेः–*a* |
| 96 | 3 | मुक्ता | न मुक्ता–*b* |
| 96 | 13 | बुद्धिरुपजा | बुद्धिरूपं ज्ञा–*a* |
| 97 | 2 | अभिव्यक्तेः | अव्यक्तेः–*a* |
| 97 | 8 | न सतो | नासतो–*a* |
| 97 | 16 | सम्बन्धा | सहबन्धा–*a* |
| 97 | 19 | बाधाबाधात् | बाधाबाधाभ्याम्–*a* |
| 99 | 4 | त्याग | त्यागात्याग–*a* |
| 100 | 14 | 'वास्यादिवच्चक्षुरादिवच्च' इति नास्ति–*a* | |
| 100 | 20 | न निर्भागत्वं | ननिर्भास–*a* |
| 103 | 1 | नेन्द्रादिपदयोगोऽपि | सेन्द्रादिपदयोगेऽपि–*a* |
| 104 | 8 | रुक्तरूपा | रुत्तेजकत्वादरूपा–*a* |
| 105 | 16 | स्यात्,तत्राह | स्यात्,किमत्रबाधकं तत्राह–*a* |
| 105 | 19 | सम्बन्ध | सम्बन्धा–*a* |
| 107 | 7 | अतैजसं | अतैजसमपि–*a* |
| 107 | 13 | भागः | भोगः–*b* |
| 107 | 20 | स्थिति | बुद्धिस्थिति–*a* |
| 109 | 10 | नैकान्त्यात् | नैकान्तात्–*b* |
| 109 | 19 | 'द्वयोः' इति नास्ति–*a* | |
| 110 | 15 | भेदः | भेदात्–*a* |
| 110 | 18 | बुद्ध्यभावा | बुद्ध्युद्भवा–*a* |
| 114 | 10 | दुःखात् क्लेशः | दुःखात् द्वेषः–*a* |
| 114 | 11 | सुखाभिलाषः | सुखादभिलाषः–*a* |
| 117 | 14 | रन्तराय | रनन्तराय–*a* |
| 118 | 7 | दार्ढ्यार्थं | श्रवणमननयोर्दार्ढ्यार्थं–*a* |

| | | | |
|---|---|---|---|
| 119 | 14 | प्राणादि | प्रमाणादि–*a* |
| 124 | 10 | करण | कारण–*a* |
| 124 | 13 | रासम्भवा | रानुभवा–*a* |
| 125 | 3 | साध्योऽपि भो | साध्योपभो–*a* |
| 125 | 14 | मनन | मननादि–*a* |
| 127 | 21 | प्रागुक्तो | प्राज्ञो–*a* |
| 128 | 18 | संयोग | संयोगादि–*a* |
| 130 | 5 | एकः | एवम्–*a* |



श्रीः

श्रीधराचार्यविरचिता

# साङ्ख्य दीपिका

(साङ्ख्यप्रवचनसूत्रवृत्तिः)

अव्यक्तादिसमस्तवस्तुविषयाद्यौपाधिकैः[1] भेदकैः
दुःखाद्यैरखिलैर्विमुक्तमत एवैकं च यत्साम्यतः।
ब्रह्म[2] व्यापकभावतोऽथ परमप्रेमास्पदत्वात् सुखं
ज्ञेयं साङ्ख्यविशुद्धबुद्धिभिरलं चिन्मण्डलं चिन्तये॥

विज्ञानाचार्यरचितसाङ्ख्यभाष्यानुसारतः।
गणेशतनयः कुर्वे श्रीधरः साङ्ख्यदीपिकाम्॥

## विषयाध्यायः प्रथमः

"पञ्चविंशतितत्त्वज्ञः यत्रकुत्राश्रमे स्थितः।
जटी मुण्डी शिखी वाऽपि मुच्यते नात्र संशयः॥"

इति पञ्चशिखोदाहृतवाक्यादिभ्यः मुमुक्षूणां पञ्चविंशतितत्त्वानि

### टिप्पणी

ग्रन्थेऽस्मिन् क्लिष्टशब्दार्थपाठभेदादिदर्शिनी।
मूलभाष्यानुसारेण टिप्पणीयं विलिख्यते॥

1 स्वरूपतो भिन्नानामप्यात्मनां समानधर्मप्रयुक्तं साम्यं ऐक्यं च सहजं श्रुतिसिद्धमपि तद्विरोधिनः विविधविषयसंबन्धरूपोपाधिजन्याः दुःखादयः, तैः इत्यर्थः॥ 'विषयादौपाधिकैः'—क.

2 'बृह बृहि वृद्धौ' इति धातोः ब्रह्मशब्दनिष्पत्तेः।

ज्ञेयतया अवगम्यन्ते इति, तज्ज्ञानाय [1]कपिलमूर्तिर्भगवान् तन्निरूपकं शास्त्रं प्रणिनाय। यथा चिकित्साशास्त्रं आरोग्य–रोग–तन्निदान-भैषज्यरूपैः चतुर्भिर्व्यूहैः प्रवर्तते, तथेदं [2]मोक्षशास्त्रमपि दुःखनिवृत्ति–दुःख–तद्धेत्वविवेक–तद्धानोपायविवेकज्ञानरूपैः चतुर्भिः व्यूहैः प्रवर्तते। व्यूहपदेनात्र उपकरण सङ्ग्रहः अभिप्रेतः॥

तत्र आदौ अथशब्दोच्चारणरूपं मङ्गलं कुर्वन् प्रयोजनं हानं तत्प्रतियोगि हेयं च प्रतिपादयन् शिष्यावधानाय शास्त्रकृत् शास्त्रारम्भं प्रतिजानीते—अथेति।

अथ त्रिविधदुःखात्यन्तनिवृत्तिः [3]अत्यन्तपुरुषार्थः । १ ॥

अत्र अथशब्दः अधिकारार्थः। अधिकारश्च–आधिक्येन[4] करणम। आरम्भ इति यावत्। स च शास्त्रद्वारा तदर्थतद्विचारयोरपि॥

तत्र आत्मानं स्वसङ्घातमधिकृत्य प्रवृत्तं आध्यात्मिकम्। तच्च द्विविधं–शारीरं मानसं च। तत्र व्याध्याद्युत्थं[5] शारीरम्। कामाद्युत्थं[6] मानसम्। सर्व दुःखानां मनोजन्यत्वेऽपि तन्मात्रजन्यत्वेन[7] मानसत्वं ज्ञानवत् बोध्यम्। तथा भूतानि व्याघ्रादिप्राणिनोऽधिकृत्य प्रवृत्तं आधिभौतिकम्। देवान् अग्न्यादीनधिकृत्य प्रवृत्तं आधिदैविकम्, दाहाद्युत्थम्। इति त्रिविधानां अत्यन्तनिवृत्तिः स्वसमानाधिकरणानागतावस्थासमानकालीनातीतावस्था अत्यन्तः परमः पुरुषार्थः = पुरुषाणां बुद्धेः इष्टः, इति अवान्तरवाक्यार्थः। तथाच सोपकरणः पुरुषार्थः प्राधान्येन निरूपयितुं अस्माभिरारब्धः इति सूत्रार्थः।

---

1 सांख्यशास्त्रोपदेष्टृत्वेन श्रीमद्भागवतोत्कीर्तितस्य एतत्सूत्रप्रणेतुश्च कपिलस्य चैक्ये बहवो विमर्शकाः संशेरते।

2 संख्यापदस्य सम्यक् विवेकेन आत्मस्वरूपकथनपरत्वमभिप्रेत्यैवमुक्तम्।

3 अन्तमतिक्रान्तः पुरुषमात्रेणार्थनीयः परमपुरुषार्थः। भोगापवर्गौ हि पुरुषार्थौ, यत्कृते प्रधानस्य प्रवृत्तिः। तत्र भोगस्य जन्यभावत्वेन अन्तातिक्रमस्याभावात् अपवर्ग एव तादृश इति भावः।

4 प्राधान्येन।

5 वातपित्तश्लेष्मणां वैषम्यनिमित्तमित्यर्थः।

6 कामक्रोधलोभमोहभयेर्ष्याविषयविशेषादर्शनादिनिमित्तमित्यर्थः।

7 मनोमात्रजन्यत्वेन।

अत्र अतीतवर्तमानदुःखनिवृत्तेः साधनानपेक्षत्वात्[1] परिशेषेण अनागतदुःखनिवृत्तिः फलम् । तथा च योगसूत्रम्—

"हेयं दुःखं अनागतम्" इति ॥

कार्यजननशक्तिर्हि यावद्वस्तुस्थायिनी इति पातञ्जलसिद्धान्तः[2]। शक्तिश्च अनागतावस्थं कार्यमेव[3]। तथा च यावच्चित्तावस्थानं अनागतावस्थं दुःखमत्र-सेयम्[4]

अत्रेदमवधेयम्—यद्यपि दुःखस्य चित्तधर्मत्वेन, न तन्निवृत्तिः पुरुषार्थः, तथापि दुःखभोगस्यैव "दुःखं मा भुञ्जीया"मिति प्रद्वेषविषयत्वेन, तन्निवृत्तिरेव स्वतः पुरुषार्थः। दुःखनिवृत्तिस्तु कण्टकनिवृत्तिवत् तच्छेषतयैवोपयुज्यते। एवं सुखमपि भोगशेषतयैव पुरुषार्थः इति भाव्यम् ॥ १ ॥

तदनेन सूत्रेण व्यूहद्वयमुद्दिष्टम्[5]। अतः परं स्वाभिमतस्यैव हानोपायत्वं व्यवस्थापयितुं इतरेषां हानोपायत्वं निराकरोति सूत्रजातेन—

न दृष्टात् तत्सिद्धिः, निवृत्तेऽप्यनुवृत्तिदर्शनात् ॥ २ ॥

दृष्टात् धनादेः[6] नात्यन्तिकदुःखनिवृत्तिसिद्धिः,[7] तदनन्तरमपि दुःखदर्शनात्[8]। वस्तुतस्तु—न तत्सिद्धिः—न पर्यवसितानागतावस्थदुःखनिवृत्तिसिद्धिः इत्यर्थः। तथा च धनादिसाध्यानागतावस्थापरिपालनरूपैव दुःखनिवृत्तिः, नानागतावस्थासमानकालीनाप्यतीतावस्थेति भावः। श्रुतिरपि—'अमृतत्वस्य तु नाऽऽशाऽस्ति वित्तेन,[9] इति ॥ २ ॥

एवमपि सामान्येष्टसाधकत्वेन तत्र प्रवृत्तिमाह—

---

1 अतीतस्य प्रागेव नष्टत्वात्, वर्तमानस्य च अनुभवैकनाश्यस्य साधनाद्यविषयत्वाच्चेत्यर्थः।

2 दाहादिशक्तिशून्यस्य अग्न्यादेः क्वाप्यदर्शनात्।

3 उपादानकारणस्वरूपयोग्यतेत्यर्थः।

4 तन्निवृत्तिरेव पुरुषार्थः।

5 हेयं हानमिति।

6 औषधाद्युपायाच्चेति शेषः। निवृत्तेम्प्यनुवृत्ति-पा.

7 सिद्धिः निष्पत्तिः।

8 न ह्यत्यन्तनिवृत्तं पुनरनुवर्तते इति भावः।

9 बृहदारण्यके— 4-5-3.

प्रात्यहिकक्षुत्प्रतीकारवत्[1] तत्प्रतीकारचेष्टनात्[2]
पुरुषार्थत्वम् ॥ ३ ॥

क्षुत् प्रतिक्रियते अनेनेति क्षुत्प्रतीकारः = भोजनम्, दैनन्दिनभोजनवदेव धनादिना दुःखनिवृत्तिसाम्यात् धनादेः पुरुषार्थत्वम्, पुरुषप्रवृत्तिविषयत्वमित्यर्थः ॥ ३ ॥

एवं दृष्टसाध्यो मन्दपुरुषार्थ एव, स च विज्ञैर्हेयः इत्याह—

सर्वासम्भवात्, सम्भवेऽपि सत्तासंभवात् हेयः
प्रमाणकुशलैः ॥ ४ ॥

दृष्टात् दुःखप्रतीकारसम्भवेऽपि सर्वदुःखप्रतीकारासंभवात् सः विवेकिभिः हेयः। सर्वासम्भवे हेतुः–सत्तासंम्भवादिति। धनिनामपि आध्यात्मिकादिदुःखानां[3] आवश्यकत्वादिति भावः ॥ ४ ॥

ननु अस्तु दुःखसंभेदात न दृष्टसाध्योऽत्यन्तपुरुषार्थः, अदृष्टसाध्यस्वर्गादिस्तु स्यात्[4] इत्यत्राह—

उत्कर्षादपि मोक्षस्य सर्वोत्कर्षश्रुतेः ॥ ५ ॥

अपिः त्रिगुणात्मकत्वसमुच्चयार्थः। तथा च मोक्षस्य उत्कर्षात्, स्वर्गस्य त्रिगुणात्मकत्वाच्च स्वर्गे दुःखसम्भेदोऽनुभूयते।[5] मोक्षोत्कर्षत्वे प्रमाणमाह—

---

1 प्रतीकारो नाम निवृत्तिमात्रं, न त्वत्यन्तनिवृत्तिरित्यर्थः। स च प्रात्यहिकः प्रत्य ह जायमानः।

2 चेष्टनं अन्वेषणम्। औषधादेरिति शेषः। अत्र कुञ्जरशौचं दृष्टान्तीकृतं भाष्ये। प्रात्याहिक..तत्पुरुषार्थत्वम्. पा.

3 अनिवार्यतया अवश्यंभावस्य सुदृष्टत्वादित्यर्थः। तथाच योगसूत्रं "परिणामताप संस्कारदुःखैः सर्वमेव दुःखं विवेकिनः" इति।

4 अत्र प्रमाणं तु–"यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत् सुखं स्वःपदास्पदम्।" इति ॥ तत्सम्भवेऽपि सतान्यन्तासंभवात. पा.

5 अतः सोऽपि प्रमाणकुशलैः हेय एवेति भावः।

सर्वोत्कर्षश्रुतेरिति। "अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशतः[1]" इति श्रुत्या विदेहकैवल्यस्य उत्कर्षप्रतिपादनादित्यर्थः ॥ ५ ॥

किञ्च—

अविशेषश्चोभयोः ॥ ६ ॥

उभयोरेव दृष्टादृष्टयोः[2] अत्यन्तदुःखनिवृत्त्यसाधकत्वेनाविशेषः। "न ह वै सशरीरस्य प्रियाप्रियोरपहतिरस्ति"[3] इति श्रुतेरिति भावः। एवं च स्वर्गे दुःखासम्भिन्नत्वं बलवद्द्वेषविषयदुःखासाम्भिन्नत्वं वक्तव्यम् ॥ ६ ॥

अथ स्वाभिमतं विवेकज्ञानं बन्धहेत्वविवेकनिवर्तकत्वेनैव बन्धकमिति इतरविप्रतिषेधेन अविवेकस्य बन्धहेतुत्वं प्रतिपाद्यते प्रघट्टकेन—

न स्वभावतो बद्धस्य मोक्षसाधनोपदेशविधिः ॥ ७ ॥

दुःखहानेर्मोक्षत्वात् बन्धोऽत्र दुःखयोग एव। एवं च स्वभावतो बद्धस्य–स्वाभाविकबन्धवतः आत्मनो मोक्षाय साधनोपदेशस्य[4] विधिः–अनुष्ठानं नियोज्यानां न घटते इत्यर्थः। तदुक्तं कौर्मे—

"यद्यात्मा मलिनोऽस्वस्थः विकारी स्यात् स्वभावतः।
न हि तस्य भवेन्मुक्तिः जन्मान्तरशतैरपि[5]।।" इति ॥ ७ ॥

कुतोऽननुष्ठानम्? अननुष्ठाने च किम्? इत्यत आह—

स्वभावस्यानपायित्वात, अननुष्ठानलक्षणमप्रामाण्यम् ॥ ८ ॥

स्वभावस्य यावद्वस्तुभावित्वात् मोक्षासंभवात् इति पूर्वत्र हेतुः। अनुष्ठानेऽकृते च अननुष्ठानलक्षणं [6]अप्रामाण्यं स्यादिति विशेषार्थः ॥ ८ ॥

---

1 छन्दोग्ये- 8.12.1
2 लौकिकवैदिककर्मणोः इत्यर्थः।
3 छान्दोग्ये—8 .12.1
4 शास्त्रेण कृतस्येति शेषः।
5 कूर्मपुराणे (2-2-12) अस्वस्थः इत्यस्य स्थाने अस्वच्छः इति पाठान्तरम। अनपायत्वात्. पा.
6 अननुष्ठानं ज्ञापकं यस्य तादृग् इत्यर्थः।

ननु श्रुतिबलादेवानुष्ठानं स्यात्तत्राह—

नाशक्योपदेशविधिः उपदिष्टेऽप्यनुपदेशः ॥ ९॥

नाशक्याय फलाय उपदेशस्यानुष्ठानं सम्भवति। यतः उपदिष्टेऽप्युपायस्यानुपदेशः उपदेशाभास [1]एव। 'बाधितमर्थं वेदोऽपि न बोधयेत्' इति न्यायादित्यर्थः॥ ९ ॥

शङ्कते—

शुक्लपटवत् बीजवच्चेत ॥ १० ॥

ननु स्वाभाविकयोः पटशौक्ल्य – बीजाङ्कुरशक्तयोः रागदाहाभ्यां निवृत्तिः दृश्यते, तथाऽत्रापीति चेदित्यर्थः ॥ १० ॥

समाधत्ते—

शक्त्युद्भवानुद्भवाभ्यां नाशक्योपदेशः ॥ ११ ॥

पटादौ नाशक्योपदेशः, यतः पटादौ शक्तेः स्वाभाविक्याः आविर्भावतिरोभावावेव जायेते, न निवृत्तिः। तथाच विषमो दृष्टान्त इति भावः। न च प्रकृतेऽप्येवमस्त्विवति वाच्यं, रजकव्यापार-योगिसङ्कल्पाभ्यां शौक्ल्याङ्कुरशक्त्योरिव योगिसङ्कल्पात मुक्तस्यापि बन्धाविर्भावापत्तेः॥ ११ ॥

बन्धस्य स्वाभाविकत्वं निराकृत्य नैमित्तिकत्वं निराक्रियते—

न कालयोगतो व्यापिनो नित्यस्य सर्वसम्बन्धात् ॥ १२ ॥

व्यापिनो नित्यस्य कालस्य सर्वावच्छेदेन सर्वदा मुक्तौ सम्बन्धात् अतिप्रसक्तेः[2] न तद्योगतो बन्धः। अत्र पाककजरूपवत् असाधारण्येन कालादिनिमित्तकत्वं बन्धे प्रतिषिध्यते, न कालादेः साधारणत्वम्[3] ॥ १२ ॥

---

1 उपदेशाभावः. पा.

2 बन्धकस्य कालस्य मुक्तामुक्तसर्वपुरुषसंबन्धाविशेषात् अमुक्तस्येव मुक्तस्यापि बन्धापत्तेरिति भावः।

3 तस्य श्रुतिस्मृतियुक्तिभिः सिद्धत्वात्।

न देशयोगतोऽप्यस्मात् ॥ १३ ॥

अस्मात् पूर्वोक्तदोषात् न देशयोगतोऽपि। कालतुल्यत्वादिति भावः ॥ १३ ॥

नावस्थातो देहधर्मत्वात् तस्याः ॥ १४ ॥

अवस्था सङ्घातविशेषरूपविकाराख्या,[1] ततोऽपि न। तस्याः देहधर्मत्वात्- अचेतनधर्मत्वात् ॥ १४ ॥

पुरुषस्यावस्थायां बाधकमाह—

असङ्गो ह्ययं पुरुष इति[2] ॥ १५ ॥

इतिर्हेतौ। पुरुषस्य विकारहेतुसंयोगाभावादित्यर्थः।[3] असङ्गत्वे च श्रुतिः —'असङ्गो ह्ययं पुरुषः'[4] इति ॥ १५ ॥

न कर्मणाऽन्यधर्मत्वात् अतिप्रसक्तेश्च[7] ॥ १६ ॥

विहितनिषिद्धकर्मणः चित्तधर्मत्वात् न तेन पुरुषस्य बन्धः। अन्यधर्माणां अन्यबन्धकत्वे मुक्तस्यापि बन्धापत्तेः। ननु औपाधिककर्मणा बन्धाङ्गीकारे को दोषः? इत्यत आह- अतिप्रसक्तेश्चेति। प्रलयेऽपि बन्धप्रसक्तेः। सहकार्यन्तरविलम्बेन विलम्बकल्पने तस्यैव बन्धकारणत्वमस्तु किमनेनेति ॥१६॥

ननु दुःखस्य चित्तधर्मत्वात् तद्योगाख्यो बन्धः चित्तस्यैवास्तु, कुतः पुरुषस्यापीत्यत आह—

विचित्रभोगानुपपत्तिः अन्यधर्मत्वे ॥ १७ ॥

---

1 बाल्यकौमारयौवनादिरूपा वा।

2 इति श्रुतिरस्ति। सा बाधिता स्यात्. पा.

3 तथा च अवस्थायाः देहमात्रधर्मत्वं न पुरुषधर्मत्वमिति भावः।

4 बृहदारण्यके (4.3.16)

5 श्चन कर्मणः.—पा. 'च' इति नास्ति—पा.

पुरुषस्य दुःखयोगाभावे कश्चिदेव दुःखभोक्ता, कश्चिन्नेति विचित्र भोगानुपपत्तिः, अतः पुरुषस्यैव दुःखभोगः स्वीकार्यः। स च दुःखप्रतिबिम्ब एव। प्रतिबिम्बस्तु उपाधेरेव भवतीति नातिप्रसङ्गः ॥ १७

श्रुतिस्मृत्योः चित्तस्यैव बन्धः इति दुःखरूपं बन्धमभिप्रेत्य साक्षात् प्रकृतिहेतुत्वमपाकरोति—

प्रकृतिनिबन्धनाच्चेन्न तस्या अपि पारतन्त्र्यम् ॥ १८ ॥

प्रकृतिनिबन्धनात् बन्धोऽस्त्विति चेन्न। कुतः? तस्याः अपि प्रकृतेरपि वक्ष्यमाणसंयोगपारतन्त्र्यमस्ति। तेन विनाऽपि बन्धकत्वे प्रलयेऽतिप्रसङ्ग इति भावः। 'निबन्धना च' इति पाठे बद्धतेत्यर्थः ॥ १८ ॥

अथ यत्संयोगसापेक्षा प्रकृतिर्बन्धिका तस्यैव स्वाभिमतयोगविशेषस्य अनेनैव प्रसङ्गेन अन्तराल एव बन्धहेतुत्वं व्यवस्थापयति—

न नित्यशुद्धबुद्धमुक्तस्वभावस्य तद्योगस्तद्योगादृते ॥ १९ ॥

नित्यत्वं—कालानवच्छिन्नत्वं, तत्त्रितयान्वयि। शुद्धत्वं पुण्यपापरहितत्वम्। बुद्धत्वं अलुप्तचिद्रूपत्वम्। मुक्तत्वं पारमार्थिकदुःखायोगः। प्रतिबिम्बरूपस्तु योगः न पारमार्थिकः। इमानि हेतुगर्भविशेषणानि पुरुषे स्वाभाविकनैमित्तिकबन्धनिरासाय। तस्मात् ईदृशस्य पुंसः प्रकृतियोगादृते बन्धनायोगः। सबन्धस्य औपाधिकत्वात् संयोगहानिरेव साक्षाद्धानोपायः इति वक्रोक्तिफलम्[1]। तथा च स्मृतिः—

"यथा ज्वलद्गृहाश्लिष्टं गृहं विच्छिद्य रक्ष्यते।
तदा सदोषप्रकृतिविच्छिन्नोऽयं न शोचति ॥" इति ॥

आत्मनो नित्यशुद्धत्वाद्यौ च श्रुतिः "अयमात्मा सन्मात्रो नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरञ्जनो विभुः" [2]इत्यादि ॥ १९ ॥

---

1 इति वचनात् नग्नद्वयं वक्रोक्तिफलम् -पा
2 नृसिंहतापनी (2-9-9)

अथ बौद्धप्रभेदाः एवमाहुः–क्षणिकविज्ञानसन्तानमेव अद्वितीयं तत्त्वम्। तदन्यत् सर्वं सांवृतिकम्। संवृतिश्च अविद्या मिथ्याज्ञानाख्या। तत एव बन्धः। तथा च तैरुक्तम्—

अभिन्नोऽपि हि बुद्धयात्मा विपर्यासितदर्शनैः।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते[1] ॥ इति ॥

तत्राह—

नाविद्यातोऽप्यवस्तुना बन्धायोगात्[2] ॥ २० ॥

अद्वैतवादिनां आत्माऽतिरिक्तस्य अवस्तुत्वस्वीकारेण, ततः बन्धासम्भवात् इत्यर्थः॥ २० ॥

वस्तुत्वाङ्गीकारे दूषणमाह—

वस्तुत्वे सिद्धान्तहानिः ॥ २१ ॥

सुगमः ॥ २१ ॥

किञ्च सन्तानान्तःपातिव्यक्तीनां अनन्तत्वात् सजातीयद्वैतमिष्यत एवेत्याह[3]—

विजातीयद्वैतापत्तिश्च ॥ २२ ॥

अत्र ज्ञानरूपाविद्यायाः बन्धोत्तरकालीनत्वात् वासनारूपा बन्धहेतुर्वाच्या। सा च ज्ञानविजातीयेति भावः। शेषः सुगमः॥ २२ ॥

शङ्कते—

विरुद्धोभयरूपा चेत् ॥ २३ ॥

ननु विरुद्धे ये सदसत्त्वे, तद्विलक्षणा वा, तदुभयरूपैव वा अविद्याऽस्तु इति चेदित्यर्थः ॥ २३ ॥

---

1 धर्मकीर्तेरयं श्लोकः।

2 सांख्यादिभिरपि अविद्या स्वीकृता, तथापि न सा तदभ्युपगतावस्तुभूतानिर्वचनीय-संवित्तिरूपा। किं तु अविवेकापरपर्याया चित्तवासनारूपा इति भाव्यम्।

3 यथेदं तथा विजातीयं द्वैतमपि प्रसज्येतेति भावः।

समाधत्ते—

न तादृक्पदार्थाप्रतीतेः[1] ॥ २५ ॥

सुबोधम् ॥ २५ ॥

ननु वैशेषिकादिवत् षडादिनियतपदार्थवादिनां अप्रतीतपदार्थस्वीकारे दोषः, नानियतपदार्थवादिनामस्माकमित्याशयेन शङ्कते—

न वयं षट्पदार्थवादिनः वैशेषिकादिवत् ॥ २५ ॥

अतः अविद्येत्यभ्युपेयते इति ॥ २५ ॥

परिहरति—

अनियतत्वेऽपि नायौक्तिकस्य सङ्ग्रहः, अन्यथा
बालोन्मत्तादिसमत्वम् ॥ २७ ॥

पदार्थानियमेऽपि भवद्वचनमात्रतो न युक्तिविरुद्धपदार्थस्य सङ्ग्रहः सम्यग् बोधः शिष्याणां[2] भवति । अन्यथा बालाद्युक्तयाऽपि तादृशपदार्थबोधः स्यात् इत्यर्थः । युक्तिश्च नास्तीति भावः । एतेन मायावादिनोऽपि प्रत्युक्ताः ॥ २७ ॥

येऽन्ये नास्तिकाः[3] आहुः—क्षणिकाः बाह्यविषयाः सन्ति, तद्वासनया आत्मनोऽपि बन्धः इति, तद्दूषयति—

नानादिविषयोपरागनिमित्तकोऽप्यस्य ॥ २७ ॥

अस्यात्मनः अनादिः प्रवाहरूपेण यःविषयोपरागः विषयवासना, तन्निमित्तकश्च बन्धः न संभवति । अत्र 'निमित्ततः' इति पाठः समीचीनः ॥ २८ ॥

अत्र हेतुमाह—

न बाह्याभ्यन्तरयोः उपरज्योपरञ्जकभावोऽपि
देशव्यवधानात् स्रुघ्नस्थपाटलिपुत्रस्थयोरिव ॥ २८ ॥

---

1 जगति वस्त्ववस्तुविलक्षणस्य तदुभयरूपस्य पदार्थस्य अप्रसिद्धेरित्यर्थः ।

2 शिष्टाचारः. पा.

3 सौत्रान्तिकवैभाषिकादयः । पूर्वोक्तं तु योगाचारमतम् ।

परिच्छिन्नात्मवादिनः तव मते देहान्तरस्थात्मनोऽपि बाह्यविषयेण सम्बन्धाभावात् नोपरागः सम्भवति। स्वप्नस्थपाटलिपुत्रस्थयोः मञ्जिष्ठावस्त्रयोरिवेत्यर्थः। अपिः वक्ष्यमाणदूषणसमुच्चये॥ २८॥

ननु भवतामिन्द्रियाणामिव आत्मनो विषयदेशे गमनमस्तु इति चेत् तत्राह—

द्वयोरेकदेशलब्धोपरागान्न व्यवस्था॥ २९॥

एकविषयदेशे द्वयोर्मुक्तात्मनोः विषयसम्बन्धसाम्यात् बन्धमोक्षव्यवस्था न स्यादिति॥ २९॥

सम्बन्धसाम्येऽपि मुक्तानां नोपरागः अदृष्टाभावात्, तत्सत्त्वाच्चान्येषां सम्भवतीति शङ्कते—

अदृष्टवशाच्चेत्॥ ३०॥

उपरागलाभः इति शेषः॥ ३०॥

परिहरति—

न द्वयोरेककालायोगादुपकार्योपकारकभावः॥ ३१॥

क्षणिकवादे द्वयोः कर्तृभोक्त्रोः एककालासत्त्वेन न उपकार्योपकारकभावः। कर्तृनिष्ठादृष्टात् भोक्तृविषयोपरागः न संभवतीन्यर्थः॥ ३१॥

शङ्कते—

पुत्रकर्मवदिति चेत्॥ ३२॥

यथा व्यधिकरणेन पुत्रेष्ट्यादिकर्मणा पुत्रोपकारः तद्वदत्रापीति चेदित्यर्थः॥ ३२॥

दृष्टान्तासिद्ध्या परिहरति—

नास्ति हि तत्र स्थिर एक आत्मा, यो गर्भाधानादि
कर्मणा संस्क्रियते॥ ३३॥

हि यतः त्वन्मते क्षणिकस्यात्मनः जन्मान्तरीयोत्कर्षसिद्ध्यर्थं गर्भाधा-

नादि संस्कार्यत्वासंभवः इत्यर्थः। अस्मन्मते तु व्यापारजन्यमुक्तौ तन्निष्ठादृष्टेन तदुत्कर्षसिद्धिः इति न व्यधिकरणत्वम्॥ ३३॥

ननु क्षणिकत्वात् अकारणक एव बन्धोऽस्त्वित्याशयेन शङ्कते—

स्थिरकार्यासिद्धेः क्षणिकत्वम्[1] ॥ ३४ ॥

बन्धस्येति शेषः। व्यक्तो भावः ॥ ३४ ॥

समाधत्ते—

न प्रत्यभिज्ञाबाधात् ॥ ३५ ॥

स एवायमिति प्रत्यभिज्ञया स्थिरत्वसिद्धेः न कस्यापि क्षणिकत्व मित्यर्थः ॥ ३५ ॥

किञ्च—

[2]श्रुतिन्यायविरोधाच्च ॥ ३६ ॥

कथमसतः सत् जायेत' इत्यादिश्रुतौ यो न्यायः-तर्कः तेन विरोधाच्च। नास्तिकं प्रति श्रुतेरनुद्भावनीयत्वेन प्राधान्येन तर्कोद्भावनम् ॥ ३६ ॥

अपि च—

दृष्टान्तासिद्धेश्च ॥ ३७॥

'यत् सत् तत् क्षणिकं, यथा दीपशिखा, सच्च विवादाध्यासितं' इत्यादौ दृष्टान्तस्य दीपशिखायाः क्षणित्वासिद्धेः न क्षणिकत्वानुमानमित्यर्थः ॥ ३७ ॥

किञ्च क्षणिकत्ववादिमते मृद्घटयोरुपादानत्वेन कार्यकारणभावः प्रवृत्तिनिवृत्त्यन्यथानुपपत्तिसिद्धो न घटते। तथाहि—स किं युगपज्जायमानयोः क्रमिकयोर्वा? नाद्य इत्याह—

युगपज्जायमानयोः न कार्यकारणभावः[3] ॥ ३८ ॥

विनिगमकाभावादिति भावः ॥ ३८ ॥

---

1 वैभाषिकस्थेयमाशङ्का। स्थायिनः एकस्यापि भावकार्यस्यानुपलब्धेः; सर्वस्यापि क्षणिकत्वमेवास्तु इति सूत्रार्थः।

2 ननु उक्ता प्रत्यभिज्ञा सादृश्यमूलैव स्यादित्यत आह—श्रुतीति।

3 सव्येतरगोविषाणयोरिवेति भावः। कारणस्य कार्यनियतपूर्ववृत्तित्वनियमात्।

नान्त्य इत्याह—

पूर्वापाये उत्तरायोगात् ॥ ३९ ॥

पूर्वस्य नाशे कार्योत्पत्त्ययोगात् उपादानकारणानुगततयैव कार्यानुभवादित्यर्थः[1] ॥ ३९ ॥

दूषणान्तरमाह—

तद्भावे तदयोगात् उभयव्यभिचारादपि न ॥ ४० ॥

यतः तद्भावे कारणकाले कार्याभावः, अतः यदा कार्यं तदा कारणं, यदा कारणं तदा कार्यं नेत्युभयनियमप्रत्यवायादपि नोपादानत्वमित्यर्थः ॥ ४० ॥

पूर्वभावमात्रेणोपादानत्वे[2] बाधकमाह—

पूर्वभावमात्रे न नियमः ॥ ४१ ॥

उपादानस्य पूर्वभावमात्रेऽभ्युपगते मृदेवोपादानं न दण्डः, इति नियमो न स्यात्। पूर्वभावमात्रस्य साधारणत्वात् ॥ ४१ ॥

[3]अथ विज्ञानातिरिक्तस्य बन्धादिवस्तुनः तुच्छत्वात अकारणत्वमेवास्तु इति विज्ञानवादिमतं निराकरोति—

न विज्ञानमात्रं बाह्यप्रतीतेः ॥ ४२ ॥

न विज्ञानमात्रं तत्त्वं, बाह्यानामपि प्रतीतिसिद्धत्वात् ॥ ४२ ॥

ननु लाघवात् स्वप्नादिदृष्टान्तैः निर्विषयैव प्रतीतिरास्तामित्यतो दूषणान्तरमाह—

तदभावे तदभावात् शून्यं तर्हि ॥ ४३ ॥

1 मृदपाये घटोत्पत्त्यसंभवात्।

2 निमित्तकारणवत कार्यकालेऽपि तत्सत्तानियमानङ्गीकारे।

3 योगाचारमतनिरासः।

चेत्सत्यामपि प्रतीतौ विषयाभावः, तदा तुल्यन्यायेन विज्ञानाभावस्यापि प्रसक्तेः शून्यमेव स्यात् ॥ ४३ ॥

लब्धावसरः शून्यवादी नास्तिकशिरोमणिः शङ्कते—

शून्यं तत्त्वं, भावो विनश्यति, वस्तुधर्मत्वात विनाशस्य[1] ॥ ४४ ॥

शून्यमेव तत्त्वं, यतः सर्वोऽपि भावः विनश्यति, विनाशित्वात् स्वप्नवन्मिथ्येत्यर्थः। विनाशित्वे हेतुः विनाशस्य सर्ववस्तुधर्मत्वात् इति ॥४४॥

दूषयति—

अपवादमात्रं अबुद्धानाम् ॥ ४५ ॥

भावत्वस्य नाशाप्रयोजकत्वात भावो विनश्यतीत्यबुद्धानां मूढानां मिथ्यावादमात्रम्[2] ॥ ४५ ॥

उभयपक्षसमानक्षेमत्वादयमपि ॥ ४६ ॥

क्षणिकबाह्यविज्ञानोभयपक्षयोः[3] समानक्षेमत्वात् तुल्यप्रत्यभिज्ञादि-निरसनहेतुकत्वात् अयमपि पक्षो[4] निरस्त इति शेषः[5] ॥ ४६ ॥

यच्च दुःखाभावत्वेन तद्धेतुत्वेन वा शून्यता पुरुषार्थः इति, तन्मतं-तदशुद्धमित्याह—

अपुरुषार्थत्वमुभयथा ॥ ४७ ॥

उभयथा स्वतः परतश्च तस्य न पुरुषार्थत्वम्। पुरुषार्थस्यैव असत्त्वा दित्यर्थः ॥ ४७ ॥

---

1 इदं माध्यमिकानां मतम्।

2 निरवयवानां भावानां विनाशासंभवादिति भावः।

3 बाह्यार्थः सर्वोऽपि क्षणिकः इति सौत्रान्तिकवैभाषिकौ, क्षणिकविज्ञानमात्रमिति योगाचारः।

4 माध्यमिकानां शून्यपक्षः।

5 प्रत्यभिज्ञानुपपत्तिरूपहेतुना इति शेषः।

तदेवं बन्धविषये नास्तिकमतानि निरस्य, अवशिष्टास्तिकमतानि निरस्यन्ते—

न गतिविशेषात् ॥ ४८ ॥

गतिः शरीरप्रवेशरूपा। ततो न पुरुषस्य बन्धः इति प्रकरणाल्लभ्यते ॥४८॥

अत्र हेतुमाह—

निष्क्रियस्य तदसम्भवात् ॥ ४९ ॥

विभोः निष्क्रियस्यात्मनः गत्यसम्भवादित्यर्थः ॥ ४९ ॥

ननु परलोकगत्यागतिश्रुतेः मूर्त एव पुरुषोऽस्तु, तत्राह—

मूर्तत्वात् घटादिवत् समानधर्मापत्तौ अपसिद्धान्तः[1] ॥ ५० ॥

यदि घटादिवत् मूर्तः परिच्छिन्नः पुमान् स्वीक्रियते, तदा घटादिसमानधर्मविनाशित्वाद्यापत्तौ अपसिद्धान्तः इत्यर्थः ॥ ५० ॥

गतिश्रुतीरुपपादयति—

गतिश्रुतिरपि उपाधियोगादाकाशवत्[2] ॥ ५१ ॥

उपाधिः लिङ्गदेहः। स्पष्टमन्यत्। तत्र प्रमाणम्—

घटसंवृतमाकाशं नीयमाने यथा घटे।
घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः[3] ॥ इति,

प्रकृतिः कुरुते कर्म शुभाशुभफलात्मकम्।
प्रकृतिश्च तदश्नाति त्रिषु लोकेषु कामगा ॥[4] इति च स्मृतिः ॥ ५१ ॥

1 स्वाभ्युपगतपुरुषनित्यत्वहानिरिति भावः।

2 पुण्येन पुण्यं लोकं नयति, पापेन पापं इत्यादिगतिबोधकश्रुतिस्तु-निष्क्रियस्याप्याकाशस्य यथा घटादिचालनेन चलनव्यवहारः, तथा बुद्धिसत्त्वलक्षणोपाधिसम्बन्धनिमित्तव्यवहारबोधिका इति सूत्रार्थः।

3 ब्रह्मबिन्दूपनिषत् 13

4 भारते शान्ति 303-45

न कर्मणाऽप्यतद्धर्मत्वात्[1] ॥ ५२ ॥

पूर्वं विहितनिषिद्धव्यापाररूपं कर्मोक्तम्। अत्र तु अदृष्टमिति भेदः ॥ ५२ ॥

तथा स्वीकारे बाधकमाह—

अतिप्रसक्तिः अन्यधर्मत्वे ॥ ५३ ॥

बन्धहेतोः अन्यधर्मत्वे स्वीकृते मुक्तस्यापि बन्धापत्तिः इत्यर्थः ॥ ५३ ॥

स्वभावादिकर्मान्तैः पुरुषस्यानौपाधिकबन्धवत्त्वे सर्वसाधारणं बाधकमाह—

निर्गुणादिश्रुतिविरोधश्चेति ॥ ५४ ॥

"साक्षी चेता केवलो निर्गुणश्च[2]" इत्यादिश्रुतिविरोधः इत्यर्थः। इतिशब्दः बन्धहेतुपरीक्षासमाप्तौ ॥ ५४ ॥

ननु त्वदुक्तबन्धहेतोः प्रकृतिसंयोगस्य पुरुषे स्वाभाविकत्वात् उक्तदोषाः समा एवेत्याशङ्कां परिहरति—

तद्योगोऽप्यविवेकान्न समानत्वम् ॥ ५५ ॥

पुंसः प्रकृतियोगोऽपि वक्ष्यमाणात् अविवेकादेव भवतीति उक्तदोषाणां न समानत्वमित्यर्थः। मुक्तानां अविवेकाभावात् न तद्योगः इति नातिप्रसङ्गः। अत्र अविवेकस्य बुद्धिधर्मत्वेऽपि, विषयतासम्बन्धेन पुरुषधर्मत्वात् नान्यधर्मत्वे चेत्यादिदूषणावकाशः।[3] तथा चायमर्थः पर्यवसन्नः—प्रकृतिः बुद्धिरूपा सती यस्मै पुरुषाय तनुमेव विविच्य न दर्शितवती, स्ववृत्तिदर्शनार्थं तदीयबुद्धिरूपेण तत्रैव पुरुषे संयुज्यत इति। वासनरूपाविवेकस्य प्रलयेऽपि सत्त्वेन तदा बन्धापत्तिवारणाय संयोगो द्वारमिष्यते। अयं चाविवेकः अगृहीतासंसर्ग-

1 बन्ध इति शेषः।

2 श्वेताश्वतरे 6-11. आदिपदेन 'असङ्गो ह्ययं पुरुषः' (बृ. 6-3-15) इत्यादि ग्राह्य ।

3 अन्यधर्मेणान्यत्र संयोगे अतिप्रसङ्गदोषसाम्यं इति दूषणस्य नावकाशः इत्यर्थः।

कमुभयज्ञानमविद्यास्थलाभिषिक्तः। 'विपर्ययात् बन्धः'[1] इत्यगामिसूत्रात्, अन्यथाख्यात्यनभ्युपगमाच्च। अनेन हेयहेतुव्यूहः प्रतिपादितः ॥ ५५ ॥

इतः परं हानोपायव्यूहं आशास्त्रपरिसमाप्ति प्रतिपादयति। अन्तरान्तरा चेतरव्यूहानपि विस्तारयिष्यति—

[2]नियतकारणात्तदुच्छित्तिः ध्वान्तवत् ॥ ५६ ॥

यथा ध्वान्तं नियतकारणादालोकादेव नश्यति, नोपायान्तरात्, तथा अविवेकोऽपि शुक्तिरजतादिस्थले नियतनिवर्तकत्वेन क्लृप्तात् विवेकज्ञानादेव नश्यतीत्यर्थः। तथा च योगसूत्रम्—"विवेकख्यातिरविप्लवा हानोपायः"[3] इति। कर्मादीनि तु विवेकज्ञानस्यैव साधनानि। "योगाङ्गानुष्ठानात् अशुद्धिक्षये ज्ञानदीप्तिः आविवेकख्यातेः"[4] इति योगसूत्रात्। प्राचीनवेदान्तिनस्तु—

"विद्यां चाविद्यां च यस्तद्वेदोभयं सह।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥"[5]

इति श्रुतेः, "सहकारित्वेन च"[6] इति सूत्राच्च, मोक्षज्ञानसहकारित्वमेव कर्मणो वदन्ति ॥ ५६ ॥

ननु पुंप्रकृतिविवेक एव चेत् संयोगनाशद्वारा मोक्षहेतुः, तदा देहाद्यभिमानाद्यविवेकसत्वेऽपि मोक्षः स्यात्। स च श्रुतिस्मृतिन्यायविरुद्धः इत्यतश्चाह—

प्रधानाविवेकात् अन्याविवेकस्य तद्धाने हानम् ॥ ५७ ॥

पुरुषे प्रधानाविवेकाद्धेतोः अन्याविवेकस्य बुद्ध्याद्यविवेकस्य जातत्वात् तद्धाने तस्यापि हानं भवति। तथा देहाभिमाननिवृत्तौ तज्जन्यसत्त्वाद्यभिमानो

1 सां. सू. 3-24
2 ननु अविवेकस्योच्छेदः कथं स्यादित्यत आह नियतेति।
3 यो. 2-26.
4 यो. 2-28.
5 ईशावा. 11.
6 ब्रह्मसूत्रं-3-4-33

निवर्तते इत्यर्थः। विवेकादेव मोक्षज्ञानमित्यत्रापि सूक्ष्मबुद्धिरूपेण प्रकृतेर्ग्रहणम्। अत्र भाष्यकृतः—बुद्ध्यादीनां कार्यत्वेन तत्र अनाद्यभिमानः वक्तुं न शक्यत इति, तन्नियामकतया तद्धेतुः प्रकृत्यभिमानः वाच्यः। दृष्टो हि लोके क्षेत्राद्यभिमानात् तज्जन्यधान्याद्यभिमानः इति प्रकृत्यभिमाने युक्तिं वदन्ति। विस्तरस्तु तत्रैवानुसन्धेयः॥ ५७॥

इति चतुर्व्यूहे प्रतिपादिते पुनरियमाशङ्का—ननु चेत् पुरुषस्य बन्धमोक्षौ विवेकाविवेकौ च स्वीकृतौ, तदा स्वोक्तनित्यशुद्धबुद्धेत्यादिविरोधः इति, तामिमां आशङ्कां परिहरति—

वाङ्मात्रं न तु तत्त्वं चित्तस्थितेः॥ ५८॥

बन्धादीनां सर्वेषां चित्त एवावस्थानमुच्यते, तत्सर्वं पुरुषे वाङ्मात्रम्। प्रतिबिम्बमात्रत्वात् स्फटिकलौहित्यवत् तुच्छम्, न तु तत्त्वं अनारोपितम् जपालौहित्यवत्, इत्यर्थः। अतो नोक्तविरोध इति भावः[1]॥ ५८॥

ननु बन्धस्य वाङ्मात्रत्वे श्रवणेन युक्तया वा सः निवर्त्येत, किं विवेकसाक्षात्कारेण? इत्यत आह—

युक्तितोऽपि न बाध्यते दिङ्मूढवदपरोक्षादृते॥ ५९॥

दिङ्मूढस्य वाङ्मात्रादपि दिग्वैपरीत्यं साक्षात्कारं विना न बाध्यते तथा प्रकृतेऽपि। युक्तिः मननम्। अपिः श्रवणसमुच्चयार्थः। बाधः—बन्धनिवृत्तिः। अथवा—इत्थं व्याख्येयम्—ननु विवेकज्ञानं अविवेकोच्छेदकमुक्तम्। तद् ज्ञानं श्रवणादिसाधारणम्? उतास्ति कश्चिद्विशेषः? इत्याकांक्षायामाह—युक्तित इति॥ युक्तितः श्रवणतश्च नोत्साद्यते विवेकापरोक्षं विनेत्यर्थः। साक्षात्कारभ्रमे साक्षात्कारविपरीतदर्शनस्यैव विरोधित्वादिति॥ ५९॥

प्रकृतिपुरुषसिद्धौ तद्विवेकात् मोक्षः स्यात्, अतः तत्सिद्धौ प्रमाणमुपन्यस्यते—

---

1 तथाच चित्तस्थितानामेव बन्धमोक्षविवेकाविवेकसुखदुःखादीनां तत्सन्निधानात् पुरुषे प्रतिभासः, न तु स्वत इति न तस्य नित्यशुद्धबुद्धमुक्तस्वभावत्वहानिरित्यर्थः।

अचाक्षुषाणामनुमानेन बोधः धूमादिभिरिव वह्नेः ॥ ६० ॥

अचाक्षुषाणां अप्रत्यक्षाणाम्। अनुमानेनेति आगमोपलक्षणम्। तथा च कारिका—

सामान्यतस्तु दृष्टात् अतीन्द्रियाणां प्रतीतिरनुमानात्।
तस्मादपि चासिद्धं परोक्षं आप्तागमात् सिद्धम् ॥ [1]इति ॥

अनेन च सूत्रेण इदं मननशास्त्रमित्यवगम्यते ॥ ६० ॥

विवेकप्रतियोग्यनुयोगिपदार्थानां सङ्ग्रहसूत्रं, वक्ष्यमाणानुमानोपयोगि कार्यकारणभावमपि दर्शयति—

सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः, प्रकृतेर्महान्, महतोऽहङ्कारः,
अहङ्कारात् पञ्चतन्मात्राणि, उभयमिन्द्रियं तन्मात्रेभ्यः
स्थूलभूतानि पुरुषः इति पञ्चविंशतिर्गणः ॥ ६१ ॥

लघुत्वादिगुणयोगात् सत्त्वादित्रयं द्रव्यमेव। तदेव प्रकृतिः। न तु तदाधारवस्त्वन्तरम्। "सत्त्वादीनां अतद्धर्मत्वं तद्रूपत्वात्[2]" इति वक्ष्यमाणसूत्रात्। तेषु च गुणशब्दः पुरुषोपकरणत्वात्। महदादीनामपि गुणतया तद्व्यावर्तनाय साम्येति। साम्यशब्दार्थश्च व्याख्यातः विष्णुपुराणे—

"गुणसाम्यमनुद्रिक्तं अन्यूनं च महामते !
उच्यते प्रकृतिर्हेतुः प्रधानं कारणं परम् ॥" इति ॥

अन्यूनानतिरिक्तत्वं च न्यूनाधिकभावेन असंहननम्। अकार्यावस्थत्वमिति यावत्। तथाच-कार्यभिन्नगुणत्रयं प्रकृतिः इति पर्यवसितोऽर्थः॥ यथाश्रुते वैषम्यावस्थायां प्रकृतिनाशप्रसङ्गात्। एतच्च मूलप्रकृतिलक्षणम्। तत्त्वान्तरोपादानत्वं प्रकृतित्वमिति तु सामान्यलक्षणम्। प्रकृत्यादिभ्यः महदादीनि जायन्ते। उभयमिन्द्रियं बाह्याभ्यन्तरभेदेन एकादशविधम्। अत्र स्थूल–भूतानीति वदता तन्मात्राणां सूक्ष्मभूतत्वमभ्युपगतम्। प्रकृत्यादीनां स्वरूपं

---

1 सां का. 6 प्रधानपुरुषादीनां अतीन्द्रियाणां प्रतिपत्तिः सामान्यतोदृष्टात् शेषवतश्च अनुमानात् भवति। तस्मादप्यप्रतीतं अतीन्द्रियं आगमप्रमाणात् सिद्धं भवतीत्यर्थः।

2 सां. 6. 39.

विशेषश्च वक्ष्यते। पुरुषस्तु कार्यकारणविलक्षणः। एवं पञ्चविंशतिर्गणः पदार्थसमूहः। एतदतिरिक्तः पदार्थो नास्ति। धर्मधर्म्यभेदेन गुणादीनामत्रैवान्तभावः। एतदतिरिक्तपदार्थसत्त्वे ततोऽपि पुरुषस्य विवेक्तव्यतया, तदसङ्ग्रहे न्यूनता आपद्येत। एतेन अनियतपदार्थवादिनः साङ्ख्याः इति मूढप्रलापः उपेक्षणीयः। अत्र प्रमाणश्रुतयः भाष्ये द्रष्टव्याः ॥ ६१ ॥

अनुमानक्रममाह सूत्रैः—

स्थूलात् पञ्चतन्मात्रस्य ॥ ६२ ॥

बोध इत्यनुवर्तते। स्थूलं तावत् पृथिव्यादिप्रत्यक्षसिद्धम्। तेन तन्मात्राणां अनुमानम्। तत्र प्रयोगः–अपकर्षकाष्ठापन्नानि स्थूलभूतानि स्वविशेषगुणवद्द्रव्योपादानकानि। स्थूलत्वात्। घटवत् इति। प्रकृतेः स्पर्शादिमत्त्वे—

शब्दस्पर्शविहीनं तद् रूपादिभिरसंयुतम्।
त्रिगुणं तज्जगद्योनिः अनादिप्रभवाप्ययम्[1] ॥

इति विष्णुपुराणादिबाधकसत्त्वात् न साक्षादुपादानत्वं सिद्ध्यति। मात्राणां च शान्तत्वादिरहितशब्दादिमात्रवत्त्वात् तन्मात्रादिसंज्ञाः ॥ ६२ ॥

बाह्याभ्यन्तराभ्यां तैश्चाहङ्कारस्य ॥ ६३ ॥

बाह्याभ्यन्तराभ्यामिन्द्रियाभ्याम्। तैः तन्मात्रैः। तन्मात्रेन्द्रियाणि अभिमानवद्द्रव्योपादानकानि, अभिमानकार्यद्रव्यत्वात्, यन्नैवं तन्नैवम्; यथा पुरुषः—इत्यनुमानप्रकारः। अत्र साधारणद्रव्याणां हिरण्यगर्भाहङ्कारोपादानत्वमेवेत्यवधेयम्[2] ॥ ६३ ॥

तेनान्तःकरणस्य ॥ ६४ ॥

तेन—अहङ्कारेण। अहङ्कारः निश्चयवृत्तिमद्द्रव्योपादानकः इति पूर्ववत् व्यतिरेकि ॥ ६४ ॥

---

1 विष्णुपुराणे-1.2.43.

2 अत्र "इत्येष प्राकृतः सर्गः संभूतोऽबुद्धिपूर्वकः। प्राकृतास्तु त्रयः सर्गाः कृतास्तेऽबुद्धिपूर्वकाः। बुद्धिपूर्वं प्रवर्तन्ते षट्सर्गाः ब्रह्मणस्तु ते" इत्यादयोऽप्यनुसन्धेयाः।

ततः प्रकृतेः ॥ ६५ ॥

ततो महत्तत्त्वात्। अन्तःकरणस्य कार्यत्वे श्रुत्यादिभिः सिद्धोऽयं प्रयोगः। महान् सुखदुःखमोहवद्द्रव्यजन्यः, तद्वत्त्वेन विकार्यत्वात्, कान्तादिवत् इति। कान्तादीनां सुखादिमद्द्रव्युपादानकत्वेन, कान्तासुखं अनुभवामीत्यनुभवेन चेति भाष्ये प्रतिपादितम्। यद्यपि वैशेषिकाद्याः तार्किकाः अन्यथाऽपि कार्यकारणभावव्यवस्थां अनुमिमते। तथापि बहुलश्रुतिस्मृत्युपोद्बलेन अस्माभिः अनुमतैव व्यवस्था उपादेया। मूलशैथिल्यमोषेण परानुमानानां दुर्बलत्वात्।

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः[1] ॥

इति मनुवाक्याच्च। अनेन स्वरूपानुमानप्रकारेणैव कार्यकारणभावाद्यनुपपत्त्यादीनां परस्परं विवेकोऽपि सिद्धः। विविक्तप्रकृत्यादितत्त्वोपासनया सत्त्वशुद्धिश्च तद्विवेकफलम् ॥ ६५ ॥

प्रकृत्यादिविवेकतः पुरुषसिद्धिमाह—

संहतपरार्थत्वात् पुरुषस्य[2] ॥ ६६ ॥

संहननं आरम्भकः संयोगविशेषः। स च अवयवावयव्यभेदात् प्रकृतितत्कार्यसाधारणः। तथा च—प्रकृत्यादि परार्थं स्वेतरस्य भोगापवर्गसाधकम्, संहत्यकारकत्वात, शय्यासनादिवत—इति। संहतानां परार्थानुमानेन परः पुरुषः सिद्ध्यति ॥ ६६ ॥

पुरुषकौटस्थ्यसिद्ध्यर्थं प्रकृतेः नित्यत्वमुपपाद्यते—

मूले मूलाभावात् अमूलं मूलम् ॥ ६७ ॥

त्रयोविंशतितत्त्वानां मूले उपादाने प्रधाने मूलाभावात् प्रधानं अमूलं अनादीत्यर्थः ॥ ६७ ॥

---

1 मनुस्मृतिः।
2 अनुमानेन बोध इत्यनुवर्तते एव।

ननु—

तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम[1] !

इति प्रकृतेरप्युत्पत्तिः श्रूयते, "तस्मादज्ञानमूलोऽयं संसारः पुरुषस्य हि[2] " इति वाक्यान्तरात् तस्याः अविद्यैव मूलं इत्याशङ्कयाह—

पारम्पर्येऽपि एकत्र परिनिष्ठेति संज्ञामात्रम् ॥ ६८ ॥

यत्र पर्यवसानं सैव प्रकृतिरिति मूलकारणस्य संज्ञामात्रम्। परम्परायामपि यत्र क्वचिदविद्यादौ परिनिष्ठा परम्परासमाप्तिः वाच्या, अनवस्था भयात्। तथाच यत्र परिनिष्ठा सैव प्रकृतिः ॥ ६८ ॥

नन्वेवं महदुपादानस्य सोपादानादिकत्वे पञ्चविंशतित्वसिद्धान्तक्षतिः इत्यतः मुख्यं समाधानमाह—

समानः प्रकृतेर्द्वयोः ॥ ६९ ॥

वस्तुतस्तु प्रकृतेः मूलकारणत्वेनाभिमतस्याविद्यायाः प्रधानस्य वा द्वयोर्मते उत्पत्तिश्रवणदोषः समानः। प्रकृत्युत्पत्तिवत् अविद्योत्पत्तिरपि श्रूयते–

"अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः ॥"[3] इति। एवं च " संयोगलक्षणोत्पत्तिः कथ्यते ज्ञानकर्मणोः "[4]इति प्रधानोत्पत्तेः गौणत्वस्मरणात् तस्यैवानादित्वं, नाविद्यायाः इति भावः ॥ ६९ ॥

नन्वेवं विवेकानुमानप्रकारे सति सर्वेषां विवेकमननं कथं न जायते? तत्राह—

अधिकारित्रैविध्यात् न नियमः ॥ ७० ॥

मन्दमध्यमोत्तमभेदेन अधिकारित्रैविध्यात् न सर्वेषां मनननियमः[5] कुतर्कादिभिः मन्दमध्यमयोः बाधसत्प्रतिपक्षसंभवात् इत्यर्थः ॥ ७० ॥

---

1 भारते शान्ति 334-31.

2 कूर्मपुराणे 2.2.16.

3 विष्णुपुराणे 1.5.5.

4 कूर्मपुराणे 4 4.3.

5 दृढविवेकप्रत्ययोदयनियम इत्यर्थः।

प्रकृतिस्वरूपमुक्तम्। सूक्ष्मभूतादिस्वरूपं च व्यक्तमेवास्तीति महदहङ्कारयोः स्वरूपमाह सूत्राभ्याम्—

महदाख्यमाद्यं कार्यं तन्मनः ॥ ७१ ॥

मननं निश्चयः तद्वृत्तिका बुद्धिः मनः। मननवृत्तिकं यदाद्यं कार्यं तत महदाख्यम् ॥ ७१ ॥

चरमोऽहङ्कारः ॥ ७२ ॥

महदपेक्षया चरमः अहङ्कारः 'अहं करोमी'त्यभिमानवृत्तिः पुरुषस्य। अविद्याद्वारा जनकत्वेऽपि एकत्राविद्यायां परिनिष्ठा परिणामकारणत्वपर्यवसानम्, पुरुषस्यापरिणामित्वात् ॥ ७२ ॥

अस्य अभिमानवृत्तिकत्वात् एतत्कार्यत्वं अन्येषां उपपन्नमित्याह—

तत्कार्यत्वमुत्तरेषाम्[1] ॥ ७३ ॥

सुगमम् ॥ ७३ ॥

नन्वेवं प्रकृतेः[5] सर्गकारणत्वं कथम्? इत्यत आह—

आद्यहेतुता तद्द्वारा पारम्पर्येऽप्यणुवत् ॥ ७४ ॥

द्व्यणुकादिद्वारा घटादौ अणूनामिव महदादिद्वारा प्रकृतेः[2] सर्वत्र कारणत्वमित्यर्थः ॥ ७४ ॥

ननु प्रकृतिपुंसोः द्वयोः अनादित्वात्[3] प्रकृतिकारणत्वे किं नियामकम्? तत्राह—

पूर्वभावित्वे द्वयोरेकतरस्य हाने अन्यतरयोगः ॥ ७५ ॥

.पूर्वभावित्वेऽपि द्वयोः तन्मध्ये एकतरस्य पुंसः अविकारित्वेन स्वोपादानत्वायोगे, अन्यतरस्मिन प्रधाने उपदानत्वयोगः इत्यर्थः ॥ ७५ ॥

---

1 उत्तरेषां— एकादशेन्द्रियपञ्चतन्मात्राणाम्।

2 प्रकृतेरिति सूत्रस्थाद्यपदार्थः।

3 निखिलकार्यपूर्वभावित्वसाम्यादिति यावत्।

प्रकृतेः युगपदनेककारणत्वोपपत्तये विभुत्वमपि प्रतिपादयति—

न परिच्छिन्नं सर्वोपादानम् ॥ ७६ ॥

सर्वोपादानमिसि हेतुगर्भविशेषणम। अपरिच्छिन्नत्वं व्यापकत्वम। तच्च दैशिकाभावप्रतियोगितावच्छेदकानवच्छिन्नत्वम। यथाश्रुतव्यापकत्वे प्रकृतेः गौणमुख्यक्रियाः अनुपपन्नाः भवेयुः[1]॥ ७६ ॥

न केवलं सर्वोपादानत्वात्, अपि तु—

तदुत्पत्तिश्रुतेश्च ॥ ७७ ॥

परिच्छिन्नस्योत्पत्तिश्रुतेश्च[2], अनुत्पन्नत्वात् अपरिच्छिन्नैव प्रकृतिः इत्यर्थः ॥ ७७ ॥

इदानीं प्रकृतिकारणत्वोपपत्तये अभावादिकारणतां[3] निरस्यति—

नावस्तुनो वस्तुसिद्धिः ॥ ७८ ॥

नृशृङ्गादिवत् अवस्तुनः अभावात न वस्तुसिद्धिः भावोत्पत्तिर्नभवतीत्यर्थः ॥ ७८ ॥

ननु जगदवस्त्वेवास्तु, तत्राह—

अबाधात् अदुष्टकारणजन्यत्वाच्च नावस्तुत्वम् ॥ ७९ ॥

भ्रान्तप्रतिपन्नपदार्थवत्[4] न प्रपञ्चस्य प्रमाणैः बाधः, न वा शङ्खपीतिमादिवत् दुष्टेन्द्रियजन्यत्वम्, अतो नावस्तुत्वमित्यर्थः ॥ ७९ ॥

नावस्तुनो वस्तुसिद्धिरित्यत्र हेतुमाह—

---

1 तथा च यथा प्राणस्य स्थावरजङ्गमाद्यखिलशरीरव्यापकत्वं प्राणत्वसामान्येनोच्यते प्राणव्यक्तीनां सर्वदेहसम्बन्धात् तथा प्रकृतेरपि व्यापकत्वमिति भावः।

2 'तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यामेव व्याक्रियत' (बृ.1.4) इत्यादिश्रुतेः इत्यर्थः।

3 अपरिच्छिन्नत्वसाम्यात् अभावस्य कारणताप्रश्नः।

4 शुक्तिरजतादिवदित्यर्थः।

भावे तद्योगेन तत्सिद्धिः, अभावे तदभावात् कुतस्तरां तत्सिद्धिः ॥८० ॥

लोके भावे तन्त्वादिकारणानां सद्रूपत्वे तेषां योगेन संयोगेनैव कार्यसिद्धिः दृष्टा। अतः तदभावे—कारणाभावे[1] तत्संयोगाभावात् भावरूप-कार्यसिद्धिर्न घटेत इत्यर्थः ॥ ८० ॥

न कर्मण उपादानत्वायोगात् ॥ ८१ ॥

वस्तुसिद्धिरित्यनुषज्यते। कर्मणो दृष्टस्य गुणत्वेन उपादानत्वा-योगादित्यर्थः[2] ॥ ८१ ॥

एवं पुंप्रकृत्योर्विवेको दर्शितः। इदानीं 'अविशेषश्चोभयो'रिति सूत्रेण वैदिककर्मणां साक्षान्मोक्षाहेतुत्वं यदुक्तं तत्प्रपञ्चयति पञ्चभिः सूत्रैः।--

नानुश्रविकादपि[3] तत्सिद्धिः साध्यत्वेनाऽऽवृत्ति-
योगादपुरुषार्थत्वम् ॥ ८२ ॥

अपिः दृष्टसमुच्चयार्थः। न दृष्टादिवादृष्टादपि मोक्षसिद्धिः। यतः कर्म-साध्यत्वेन स्वर्गादिव मोक्षादपि पुनरावृत्तिप्रसङ्गात् मुख्यपुरुषार्थत्वाभाव-प्रसङ्गः इत्यर्थः। कर्मसाध्यस्य अनित्यत्वश्रुतिश्च "तद्यथेह कर्मचितो लोकः-क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते[4]" इति ॥ ८२ ॥

ननु ब्रह्मलोकादनावृत्तिश्रुतिः कथमित्याशङ्कायां तत्र सञ्जातविवेकज्ञाना-भिप्रायेणेत्याह—

तत्र प्राप्तविवेकस्य अनावृत्तिश्रुतिः[5] ॥ ८३ ॥

तत्र आनुश्रविककर्मणि ब्रह्मलोकगतानां या अनावृत्तिश्रुतिः सा तत्रैव प्राप्तविवेकस्य मन्तव्या ॥ ८३ ॥

कर्मणस्तु यत्फलं तदाह—

1 कारणस्य असद्रूपत्वे इति भावः।
2 तस्य च निमित्तमात्रत्वदिति भावः।
3 गुरुपाठात् केवलमनुश्रूयते इति अनुश्रवो वेदः, तद्विहितं यागादिकं कर्म आनुश्रविकम्।
4 छादोग्ये. 8.1.6
5 तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तेषां न पुनरावृत्तिः इति, बृ. 8.2.15

दुःखाद्दुःखं जलाभिषेकवन्न जाड्यविमोकः ॥ ८४ ॥

आनुश्रविकात् हिंसादिदोषात् दुःखात् दुःखधारैव भवति, न जाड्यविमोकः अविवेकनिवृत्तिः । दुःखनिवृत्तिस्तु अतिदूर एव तिष्ठति । यथा जाड्यार्तस्य जलाभिषेकात् दुःखधारा, न तुजाड्यविमोकः तथा इत्यर्थः ॥ ८४ ॥

ननु निष्कामकर्मणो मोक्षो भवतीत्यत आह—

काम्येऽकाम्येऽपि साध्यत्वाविशेषात् ॥ ८५ ॥

काम्येऽकाम्ये वा दुःखधारैव भवति । निष्कामकर्मसाध्यस्य ज्ञानस्यापि त्रिगुणात्मकत्वाविशेषात् । "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः"[1] इति श्रुतेः न साक्षात्कर्मणो मोक्षः फलमिति भावः[2] ॥ ८५ ॥

ननु त्वन्मते ज्ञानसाध्यस्य कथं न दुःखत्वं ? साध्यत्वाविशेषादिति तत्राह–

[3]निजमुक्तस्य बन्धध्वंसमात्रम्, परं
न समानत्वम् ॥ ८६ ॥

स्वभावमुक्तस्य बन्धध्वंसमात्रं परं मुख्यं विवेकज्ञानस्य फलम् । ध्वंसस्य चाभावत्वान्न दुःखात्मकत्वमिति भावः । अतः न तुल्यदोषत्वम् । ८६।

अथ विवेकोपायभूतानि प्रमाणानि परीक्ष्यन्ते—

द्वयोरेकतरस्य वाऽप्यसन्निकृष्टार्थपरिच्छित्तिः प्रमा,
तत्साधकतमं यत्तत् त्रिविधं प्रमाणम् ॥ ८७ ॥

असन्निकृष्टः– प्रमातर्यनारूढोऽनधिगत इत्यर्थः । एवंभूतस्यार्थस्य वस्तुनः परिच्छित्तिः अवधारणं प्रमा । सा च द्वयोः बुद्धिपुरुषयोरेव धर्मो भवतु,

---

1 तै-आ. 10. 10. 3. त्यागेन—अभिमानत्यागेन । तस्य च तत्त्वज्ञानैकजन्यस्य परमदुर्लभत्वात् केचिदेवामृतत्वं प्रापुः इत्यर्थः । (भा)

2 तथाच 'चित्तस्य शुद्धये कर्म' इत्युक्तरीत्या कर्मणः केवलमन्तःकरणशुद्धिहेतुत्वमेव न तु मुक्तिहेतुत्वमिति भावः ।

3 ननु भवतां मोक्षोऽपि दुःखमेव स्यात्, साध्यत्वाविशेषात् इति चेत्तत्राह– निजेति ।

एकतरस्य वा, उभयथापि तत्साधकतमम् फलायोगव्यवच्छिन्नं कारणं यत्तत्प्रमाणम्। तच्च त्रिविधमिति। तच्च त्रिविधं वक्ष्यमाणरूपेणेत्यर्थः।[1] स्मृतिभ्रमसंशयव्यावर्तनाय अनधिगतवस्त्ववधारणमिति। अत्र यदि पुरुषनिष्ठा प्रमा तदा बुद्धिवृत्तिः प्रमाणम्। यदि च बुद्धिनिष्ठा तदा 'इन्द्रियसन्निकर्षादिरिति बोध्यम्। अत्रच ज्ञानोत्पत्तिप्रक्रिया भाष्ये अनुसन्धेया[2] ॥ ८७ ॥

ननु "यथा प्रकाशयति"[3] इत्यादिवाक्येषु उपमानादि च प्रकृतिपुरुषविवेके प्रमाणं उपन्यस्त म्, तत्कथमुच्यते त्रिविधमिति ? तत्राह—

तत्सिद्धौ सर्वसिद्धेर्नाधिक्यसिद्धिः ॥ ८८ ॥

त्रिविधप्रमाणसिद्धौ च सर्वार्थसिद्धेर्नाधिकं प्रमाणं, गौरवादित्यर्थः। तथाच उपमानादीनामत्रैवान्तर्भाव इति[4] ॥ ८८ ॥

पातञ्जलानुसारेण पुरुषनिष्ठा प्रमेति मुख्यं मतमाश्रित्य प्रमाणानां विशेषलक्षणमाह सूत्रैः—

यत्सम्बद्धं सत् तदाकारोल्लेखि विज्ञानं तत् प्रत्यक्षम् ॥ ८९ ॥

इन्द्रियादिद्वारा सम्भवत्सम्बन्धवस्त्वाकारधारि यद्विज्ञानं बुद्धिवृत्तिः तत्प्रत्यक्षम्। अर्थसन्निकर्षजन्या वृत्तिः प्रत्यक्षप्रमाणमित्यर्थः। प्रमा तु सर्वत्र पौरुषेयो बोध्यः ॥ ८९ ॥

---

1 प्रत्यक्षानुमानशब्दभेदादिति शेषः।

2 इदं तु सारम् - प्रमारूपस्य फलस्य बुद्धिनिष्ठत्वे; बुद्धिरेव प्रमात्री, तदुपहितः पुरुषः साक्षी, घटोऽयमित्याद्याकारबुद्धिवृत्तिरेव प्रमा, चक्षुरादयः प्रमाणम्। पुरुषनिष्ठत्वे तु बुद्धिप्रतिबिम्बितःपुरुषः प्रमाता, तस्यैव च बिम्बरूपस्य साक्षित्वम्, घटमहं जानामि इत्याकारकतत्तद्विषयोपरक्तबुद्धिवृत्तिविषयो बोधः प्रमा, चक्षुरादिकं गौणं प्रमाणं, घटोऽयमित्यादिबुद्धिवृत्तिरेव मुख्यं प्रमाण । उभयनिष्ठत्वे तु यथायथमुभयमपीति। वस्तुतस्तु पौरुषेयबोध एव फलं प्रमा। पुरुषार्थमेव करणानां प्रवृत्तेः वक्ष्यमाणत्वादिति बोध्यम्।

3 यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः। क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ गीता.13.33

4 अन्तर्भावप्रकारस्तु सांख्यतत्त्वकौमुद्यां विवृतः।

ननु असम्बद्धातीतानागतविषयके योगिप्रत्यक्षेऽव्याप्तिरित्यत आह—

योगिनामबाह्यप्रत्यक्षत्वान्न दोषः ॥ ९० ॥

अत्रैन्द्रियकप्रत्यक्षमेव लक्ष्यमित्यनैन्द्रियकयोगिप्रत्यक्षे नाव्याप्तिरित्यर्थः । ॥ ९० ॥

वास्तवं समाधानमाह—

लीनवस्तुलब्धातिशयसम्बन्धाद्वाऽदोषः ॥ ९१ ॥

लीने विप्रकृष्टे[1] वस्तुनि योगलब्धस्यातिशयस्य धर्मविशेषस्य सम्बन्धस्य चित्ते सत्वान्न योगिप्रत्यक्षेऽव्याप्तिदोषः ॥ ९१ ॥

एवमपि सम्बन्धाजन्ये नित्ये ईश्वरप्रत्यक्षे प्रसक्तामव्याप्तिं प्रकारान्तरेण परिहरति—

ईश्वरासिद्धेः ॥ ९२ ॥

न दोष इत्यनुवर्तते । अभावादिति वक्तव्येऽसिद्धेरिति वदता प्रौढिः प्रकटिता । वस्तुतः ईश्वराङ्गीकारे तादृशवृत्तिसजातीयत्वं[2] विवक्षितमिति भावः ॥ ९२ ॥

तत्सिद्धौ तर्कविरोधं बाधकमाह—

मुक्तामुक्तयोरन्यतराभावान्न तत्सिद्धिः ॥ ९३ ॥

क्लेशैर्मुक्तस्यामुक्तस्य वेश्वरत्वासम्भवात् नेश्वरसिद्धिरिति भावः ॥ ९३ ॥

असम्भवं विवृणोति—

उभयथाप्यसत्करत्वम् ॥ ९४ ॥

मुक्तत्वे रागाद्यभावादकर्तृत्वं, अमुक्तत्वेऽस्मदादिवत् मूढत्वात् सृष्ट्याद्यक्षमत्वमितीश्वरत्वासम्भव इत्यर्थः ॥ ९४ ॥

---

1 अतीतेऽनागते व्यवहिते वा ।

2 साजात्यं च ज्ञानत्वसाक्षाद्व्याप्यजात्येति भावः ।

प्रौढयेश्वरे प्रतिक्षिप्ततत्प्रतिपादकश्रुतिमन्यथा व्याचष्टे—

मुक्तात्मनः प्रशंसा उपासा सिद्धस्य वा ॥ ९५ ॥

यथायोग्यं काचित् श्रुतिः केवलात्मसामान्यस्य ज्ञेयताविधानाय सन्निधिमात्रेश्वर्येण प्ररोचनार्था। काचिच्च सङ्कल्पपूर्वकस्रष्टृत्वादिप्रतिपादिका श्रुतिः गौणनित्यत्ववतः ईश्वरस्यादिपुंसः उपासनातत्परेत्यर्थः[1] ॥ ९५ ॥

श्रूयमाणं प्रकृत्याद्यखिलाधिष्ठातृत्वमुपपादयति—

तत्सन्निधानात अधिष्ठातृत्वं मणिवत् ॥ ९६ ॥

यथा अयस्कान्तमणेः सान्निध्यमात्रेणायश्चालकत्वं न सङ्कल्पादिना, तथाऽऽदिपुंसः संयोगमात्रेण प्रकृतेर्महत्तत्त्वरूपेण परिणमनेऽधिष्ठातृत्वमित्यर्थः। तथा चोक्तम्—

निरिच्छे संस्थिते रत्ने यथा लोहः प्रवर्तते।
सत्तामात्रेण देवेन तथैवायं जगज्जनिः॥
अत आत्मनि कर्तृत्वमकर्तृत्वं च संस्थितम्।
निरिच्छत्वादकर्ताऽसौ कर्ता सन्निधिमात्रतः॥[2] इति।: ९६ ॥

न केवलमादिपुंसः सन्निधिमात्रेण हेतुत्वम्। किन्तु अखिलव्यष्टिसृष्टावन्येषामपीत्याह—

विशेषकार्येष्वपि जीवानाम् ॥ ९७ ॥

विशेषकार्येषु व्यष्टिसृष्टावपि अधिष्ठातृत्वं जीवानाम्।[3] सन्निधानादित्यनुषज्यते[4] ॥ ९७ ॥

1 तत्र च मुक्तात्मनः असङ्गत्वेन ज्ञानासम्भवात् सिद्धस्य च शरीरित्वेन तज्ज्ञानस्य इन्द्रियसंनिकर्षप्रयोज्यत्वावश्यंभावाच्च न प्रत्यक्षे अव्याप्तिरिति भावः।

2 योगवासिष्ठे ४, ५६, ३९-३१

3 अन्तःकरणप्रतिबिम्बितानां चेतनानामेव जीवत्वं षष्ठे वक्ष्यते।

4 सङ्कल्पादिकं व्यापारान्तरं।

ननु नित्यसर्वज्ञेश्वराभावेऽन्धपरम्पराशङ्कया वेदाप्रामाण्यं स्यादित्यत आह—

सिद्धरूपबोद्धृत्वात् वाक्यार्थोपदेशः ॥ ९८ ॥

हिरण्यगर्भादीनां यथार्थज्ञानवत्त्वात् तद्वक्तृको वेदवाक्यार्थोपदेशः प्रमाणं भवतीति शेषः ॥ ९८ ॥

सङ्कल्पेनाधिष्ठातृत्वं यदि नात्मनस्तर्हि कस्येत्याकाङ्क्षायामाह—

अन्तःकरणस्य तदुज्ज्वलितत्वाल्लोहवत् अधिष्ठातृत्वम् ॥ ९९ ॥

यथा अग्निसंयोगविशेषेण लोहमुज्ज्वलितं, तद्वत् प्रतिबिम्बहेतुसंयोगविशेषेण[1] चेतनोज्ज्वलितत्वात् चेतनायमानतया तस्य घटादिव्यावृत्तं अधिष्ठातृत्वं युज्यते[2] इत्यर्थः ॥ ९९ ॥

अथानुमानं तज्जातं लक्षयति—

प्रतिबन्धदृशः प्रतिबद्धज्ञानमनुमानम् ॥ १०० ॥

प्रतिबन्धो व्याप्तिः, तद्दर्शनात व्याप्तियुक्तो व्यापकः प्रतिबद्धः। तस्य व्यापकस्य ज्ञानमनुमानं वृत्तिरूपं प्रमाणम्। अनुमितिस्तु पौरुषेयो बोधः ॥१००॥

आप्तोपदेशः शब्दः ॥ १०१ ॥

वेदापौरुषेयत्वस्य वक्ष्यमाणत्वात्[3] आप्तिरत्र योग्यता[4]। आप्तः योग्यः शब्दो तदुपदेशः। तज्जन्यं ज्ञानं शब्दाख्यं प्रमाणम्। तथा च योग्यशब्दजन्या वृत्तिः[3] शब्दप्रमाणमित्यर्थः ॥ १०१ ॥

---

1 अयमेव च संयोगविशेषः बुद्ध्यात्मनोः अन्योन्यप्रतिबिम्बने हेतुः। बुद्धौ चैवं चैतन्यप्रतिबिम्बः चैतन्यदर्शनार्थमेव बध्यते। दर्पणे मुखप्रतिबिम्बवत्। अन्यथा कर्मकर्तृविरोधेन स्वस्य साक्षात् स्वदर्शनानुपपत्तेः इति भावः।

2 न पौरुषेयत्वं तत्कर्तुः (८-४६) इत्यादिपञ्चसूत्र्या इत्यर्थः।

3 अर्थाव्यभिचारित्वं योग्यता।

4 वाक्यार्थज्ञानमिति यावत्।

प्रमाणप्रतिपादनफलमाह—

उभयसिद्धिः प्रमाणात्तदुपदेशः ॥१०२॥

यतः उभयोः आत्मानात्मनोः विवेकेन सिद्धिः प्रमाणात् , अतः तन्निरूपणमत्रेत्यर्थः ॥ १०२ ॥

येनानुमानविशेषेण तत्सिद्धिः तदाह—

सामान्यतो दृष्टादुभयसिद्धिः ॥ १०३ ॥

त्रिविधमनुमानं पूर्ववदादि बोध्यम्[1]। यत्र प्रत्यक्षादिसाधारणधर्मेण विजातीयव्याप्तिग्रहे पक्षधर्मताबलात् विजातीयोऽर्थः सिद्ध्यति-तत्सामान्यतो दृष्टम्। यथा करणक्रियात्वेन छिदाकुठारयोः व्याप्तिग्रहे रूपादिज्ञानक्रियया चक्षुरादिकरणसिद्धिः, तद्वत् अत्रापि सामान्यतोदृष्टात् प्रकृतिपुरुषयोः विवेकेन सिद्धिरित्यर्थः। प्रकृतिपुरुषयोः सामान्यतोदृष्टे अनुमाने "ततः प्रकृतेः। संहतपरार्थत्वात् पुरुषस्य"[2] इत्यत्रोक्ते ॥ १०३ ॥

प्रमाणफलभूतसिद्धेः पुरुषनिष्ठत्वे पुरुषस्य परिणामापत्तिरित्याशङ्कायां तस्याः स्वरूपमाह—

चिदवसानो भोगः ॥१०४॥

अत्र प्रमाणाख्यवृत्त्यारूढं पदार्थजातं वृत्त्या सह पुरुषे प्रतिबिम्बितं यद् भासते तद्भानमेव पुरुषस्य भोगः, प्रमाणस्य च फलम्। स च अर्थोपरक्तवृत्तिप्रतिबिम्बावच्छिन्नचैतन्यस्वरूपे पर्यवसितः। तत्स्वरूप एव यतः अतो नोक्तशङ्केति भावः ॥ १०४ ॥

अत्रेदमवधेयम्। भोगः सम्बन्धविशेषाख्यस्वीकारजन्यफलरूपदेहादिचेतनान्तेषु साधारणः, स च परिणामिनि देहादौ पुष्ट्यादिपरिणामरूपः। चेतने च वृत्तिप्रतिबिम्बावच्छिन्नं स्वरूपमेव। एवं च परिणामरूप एव भोगः पुरुषस्य निषिध्यते "बुद्धेर्भोग इवात्मनि" इत्यादाविति।

---

1 पूर्ववत् शेषवत् सामान्यतोदृष्टं च। अन्वयमात्रव्याप्तिकं आद्यम्। तच्च प्रत्यक्षीकृतजातीयविषयकम् यथा धूमेन वह्नेः। व्यतिरेकमात्रव्याप्तिकं शेषवत्। तच्च-अप्रसिद्धसाध्यकम्। यथा पृथिवीत्वेन इतरभेदानुमानम्।

2 १, ६५-६६.

ननु कथं बुद्धिकृतधर्माधर्मफलस्यात्मनो भोगः इत्याशङ्कायामाह—

अकर्तुरपि फलोपभोगोऽन्नाद्यवत् ॥ १०५ ॥

यथा अन्यकृतस्यान्नादेरुपभोगो राज्ञो भवति, तथा बुद्धिकृतधर्माधर्मफलसुखदुःखोपभोगः पुरुषस्य। स्वस्वामिभावस्य भोगनियामकत्वान्नातिप्रसङ्ग इति भावः। सुखदुःखादेः कर्मफलत्वमभ्युपेत्येदमुक्तम् ॥ १०५ ॥

अथ सुखं भुञ्जीयेत्यादिप्रार्थनाविषयत्वात् भोग एव मुख्यं फलम्। तस्य पुरुषनिष्ठत्वेऽपि कर्तुः फलमिति व्यवहारमुपपादयति—

अविवेकाद्वा तत्सिद्धेः कर्तुः फलावगमः ॥ १०६ ॥

तत्सिद्धेः—भोगाख्यसिद्धेः कर्तुः बुद्धावविवेकाल्लोकवेदयोः कर्तुः फलावगमः[2]। तदव्यवहार इत्यर्थः ॥ १०६ ॥

प्रमाणफलत्वेनोक्तायाः विवेकसिद्धेः फलमाह—

नोभयं च तत्त्वाख्याने ॥ १०७ ॥

तत्त्वाख्याने विवेकसाक्षात्कारे सुखदुःखोभयमपि न भवतीत्यर्थः। "विद्वान् हर्षशोकौ जहाति[3]" इति श्रुतेः ॥ १०७ ॥

इदानीं प्रकृत्याद्यनुमानेष्वनुपलम्भबाधमपाकरोति—

विषयोऽविषयोऽप्यतिदूरादेर्हानोपादानाभ्यामिन्द्रियस्य ॥ १०८ ॥

अतिदूरत्वादिदोषाद्धानविग्रहाभ्यां चान्यप्रमाणस्य विषयोऽपीन्द्रियस्य अविषयो भवति। तथा च नानुपलब्धिमात्रेण बाधः, अपि तु योग्यानुपलब्ध्या इति भावः ॥ १०८ ॥

1 शिशुपालवधे 2-59.

2 योऽहं करोमि स एवाहं भुञ्जे इति लौकिकानुभवः इत्यर्थः।

3 'अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' इति कठोपनिषत्। (1-2-12)

दूरादिदोषाः कारिकायामुक्ताः

'अतिदूरात्सामीप्यादिन्द्रियघातात मनोऽनवस्थानात्।
सौक्ष्म्याद् व्यवधानादभिभवात समानाभिहाराच्च॥'[1] इति॥

तत्र दूरत्वादिषु यस्मात्प्रकृत्याद्यनुपलम्भः तमाह—

सौक्ष्म्यात्तदनुपलब्धिः॥ १०९॥

सौक्ष्म्यं नाणुत्वं विश्वव्यापनात्। किन्तु प्रत्यक्षप्रमाप्रतिबन्धिका जातिः। योगजधर्मस्योत्तेजकत्वान्नातिप्रसङ्गः। जातिसङ्करश्च न दोषः॥ १०९॥

नन्वभावादेव तदनुपलब्धिः कुतो नेत्यत आह—

कार्यदर्शनात्तदुपलब्धेः॥ ११०॥

कार्यान्यथानुपपत्त्या कारणे सिद्धे, तदनुपलब्धौ सौक्ष्म्यं निमित्तं कल्प्यते इति भावः[2]॥ ११०॥

अत्र शङ्कते—

वादिविप्रतिपत्तेः तदसिद्धिरिति चेत्॥ १११॥

ननु सत्कार्यवादे सदा सत्कार्याधारतया नित्या प्रकृतिः सिद्ध्येत्। तत्रैव वादिविप्रतिपत्तेः प्रकृत्यसिद्धिरिति चेदित्यर्थः॥ १११॥

अभ्युपेत्य समाधत्ते—

तथाऽप्येकतरदृष्ट्या एकतरसिद्धेः नापलापः॥ ११२॥

असत्कार्यवादेऽपि कार्यदृष्ट्या कारणानुमतेर्नापलाप इत्यर्थः॥ ११२॥

असत्कार्यासिद्ध्याऽपरितुष्यन्नाह—

1 सांख्यकारिका 7. अतिदूरभावात् अतिसमीपभावात्, सदोषाणां इन्द्रियाणां स्वस्वकार्याक्षमत्वात्, विषयान्तरे मनसोऽवस्थानेन सन्निकृष्टेष्वपि विषयेष्वप्रवर्तनात्, परमसूक्ष्मत्वात् कुड्यजवनिकादिव्यवधानात् अभिभूतत्वात्, सजातीयवस्तुमिश्रणाच्च सतोऽपि वस्तुनः उपलब्धिः न भवतीत्यर्थः।

2 तथा च प्रकृत्यभावानिर्णयात् उक्तानुमानमुपपद्यते इति भावः।

त्रिविधविरोधापत्तेश्च ॥११३॥

अनागतं वर्तमानमतीतमिति सर्ववादिप्रसिद्धकार्यत्रैविध्यस्यानुपपत्तेश्च कार्यं सदेव, यथा रूपगतशुक्लत्वादिधर्मैः रूपषाड्विध्यं, तद्वत् , कार्यगतानागतत्वादिधर्मैः कार्यत्रैविध्यमपि। न च कार्यासत्वेऽनागतत्वादीनां तद्धर्मत्वं सम्भवतीति भावः ॥ ११३ ॥

इतश्च सत्कार्यसिद्धिरित्याह—

नासदुत्पादो नृश्रृङ्गवत् ॥११४॥

नरश्रृङ्गतुल्यस्यथस्यासत उत्पादोऽपि न सम्भवतीत्यर्थः ॥ ११४ ॥

हेत्वन्तरमाह—

उपादाननियमात् ॥११५॥

मृदेव घटोपादानमित्याद्युपादाननियमोऽस्ति। सः न संभवेत्। उत्पत्तेः प्राक्कारणेषु कार्यासत्वे, सर्वकारणानां समत्वात् कंचिदेवासन्तं जनयेदिति नोपपद्यत इति भावः ॥ ११५ ॥

तन्नियमे प्रमाणमाह—

सर्वत्र सर्वदा सर्वासम्भवात् ॥ ११६ ॥

उपादानानियमे सर्वत्र सर्वदा सर्वं सम्भवेदिति भावः ॥ ११६ ॥

किञ्च—

शक्तस्य शक्यकरणात् ॥ ११७ ॥

शक्तिमत् अनागतावस्थं कार्यं, न त्वन्यत्, दुर्वचत्वात। शक्तिमतः शक्यकारित्वान्नासदुत्पादः ॥ ११७ ॥

इतश्च—

कारणभावाच्च ॥ ११८ ॥

"तद्धेदं तर्ह्यव्याकृतमासीत्" [1]इति श्रुत्या उत्पत्तेः प्रागपि कार्यस्य कारणाभेदात्। न च सदसतोरभेदोपपत्तिरिति भावः ॥ ११८ ॥

---

1 बृहदारण्यके-1.4.7.

शङ्कते—

न भावे भावयोगश्चेत् ॥ ११९ ॥

ननु सति कार्ये[1] उत्पत्तियोगो न सम्भवति, असत एवोत्पत्तिव्यवहारादिति चेदित्यर्थः ॥ ११९ ॥

समाधत्ते—

नाभिव्यक्तिनिबन्धनौ व्यवहाराव्यवहारौ ॥ १२० ॥

यदुक्तं तन्न। यतोऽभिव्यक्तिर्वर्तमानावस्था। तत्सत्त्वासत्त्वनिबन्धनश्च उत्पत्त्यनुत्पत्तिव्यवहारः इत्यर्थः ॥ १२० ॥

ननु भवतु यथाकथंचित् व्यवहारोऽनादिभावस्य, नाशस्तु कथं? तत्राह—

नाशः कारणलयः ॥ १२१ ॥

'लीङ् श्लेषणे'[2] इत्यनुशासनाल्लयः सूक्ष्मतया कारणेष्वविभागः स एवातीतावस्थाख्यो नाश इत्यर्थः। अनागतावस्थाख्यस्तु लयः प्रागभाव इति शेषः ॥ १२१ ॥

ननु सत्कार्यसिद्धान्तरक्षार्थमभिव्यक्तेरप्यभिव्यक्तिरेष्टव्या, तथा चानवस्थेत्याशङ्कायामाह—

पारम्पर्यतोऽन्वेषणा बीजाङ्कुरवत्[3] ॥ १२२ ॥

परम्परारूपेणाभिव्यक्तेः स्वीकारः कार्यः। बीजाङ्कुरवत् प्रामाणिकत्वेनानवस्था न दोषः। अयं चात्र विशेषः-बीजाङ्कुरे क्रमिकपरम्परयाऽनवस्था, अभिव्यक्तौ चैककालीनपरम्परया इति ॥ १२२ ॥

वस्तुतस्तु अनवस्थाऽपि नास्तीत्याह—

1 मूले प्रथमो भावशब्दः भावरूपकार्यपर इत्यर्थः
2 धातुपाठे 933
3 इदं तु लोकदृष्ट्या उपन्यस्तम्, बीजाङ्कुरप्रवाहस्य आदिसर्गावधिकत्वात आदिसर्गे बीजं विनैव ईश्वरसङ्कल्पादेव सर्वोत्पत्तेः।

उत्पत्तिवद्दोषः ॥१२३॥

यथा घटोत्पत्तेरुत्पत्तिः स्वरूपमेव, तद्वत् अभिव्यक्तेरपि सा सैवेति[1] नानवस्थादोष इत्यर्थः ॥ १२३ ॥

"कार्यदर्शनात्[2]इत्यादिसूत्रे कार्येण कारणानुमानमुक्तम्। तत्र किं किं कार्यमित्यवस्थापयितुं सर्वकार्याणां साधर्म्यमाह—

हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् ॥१२४॥

कारणानुमापकत्वात् लयगमनाद्वा लिङ्गम् – कार्यजातं, हेतुमत्त्वादिधर्मिकमित्त्यर्थः। तत्र हेतुमत्त्वं कारणवत्त्वं, अनित्यत्वं – विनाशिता, अव्यापित्वं[3] – दैशिकाभावप्रतियोगितावच्छेदकविभाजकोपाधिमत्त्वम्, अध्यवसायादिरूपनियतक्रियावत्वं सक्रियत्वम्, सर्गभेदेनाभिन्नत्वमनेकत्वं, आश्रितत्वमवयवेष्विति[4] ॥ १२४ ॥

हेतुमत्त्वादिकं कार्यकारणयोर्भेदे एव सिद्ध्यति इत्यतः तद्भेदे प्रमाणमाह—

आञ्जस्याद्भेदतो वा गुणसामान्यादेः तत्सिद्धिः
प्रधानव्यपदेशाद्वा ॥१२५॥

कारणभेदेन कार्यस्य सिद्धिः[5] क्वचित् आञ्जस्यात् – प्रत्यक्षतोऽनायासेन भवति, यथा—स्थौल्यादिना तन्त्वादिभ्यः पटादीनाम्। क्वचिद्गुणसामान्यकर्मणामभेदेन तदात्मकत्वेन लिङ्गेन, यथाअध्यवसाय–पृथिवीत्व–चलनात्मकत्वेन लिङ्गेन प्रकृति–गन्धतन्मात्र–स्थिरावयवेभ्यो भिन्नतया बुद्धि–पृथिवी–चञ्चलावयविनां सिद्धिः। तथा प्रधानव्यपदेशात्—प्रधीयतेऽस्मिन् कार्यजातमिति प्रधानशब्दार्थस्य कार्यकारणयोर्भेदं विना असंभवादित्यर्थः॥ १२५ ॥

इदानीं कार्यसधर्मकतया कारणानुमानाय कार्यकारणयोः साधर्म्यं प्रदर्शयति—

---

1 अभिव्यक्तेरप्यभिव्यक्तिः स्वरूपमेवेत्यर्थः।
2 सांख्यसूत्रं 1-110
3 सर्वं परिणामिनं व्याप्तुं शीलं यस्य न तत्, तस्य भावः।
4 आश्रितत्वं साधारत्वम्।
5 कारणातिरिक्तत्वेन कार्यस्य दर्शनमिति यावत्।

त्रिगुणाचेतनत्वादि द्वयोः ॥ १२६ ॥

त्रिगुणत्वं सुखदुःखमोहात्मकत्वं,[1] अचेतनत्वं जडत्वं, आदिपदग्राह्याः कारिकायामुक्ताः—

"त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि।
व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान्"[2]॥

अविवेकिपुरुषभोग्यं[3] सामान्यं – सर्वपुरुषसाधारणं, व्यक्तं – कार्यं, प्रधानं – प्रकृतिरिति। अत्र लघुत्वादीनां साधर्म्यकथनात्[4] सत्त्वादीनामपि कारणद्रव्याणां प्रत्येकमनेकव्यक्तिकत्वं च भाति॥ १२६॥

'शब्दस्पर्शविहीनं तु रूपादिभिरसंयुतम।
त्रिगुणं तज्जगद्योनिरनादि प्रभवाप्ययम॥

इति वैष्णवे॥ विचित्रकार्योपपत्तये प्रकृत्याख्यानामपि सत्त्वादिद्रव्यत्रयाणां अन्योन्यं वैधर्म्यं प्रतिपादयति—

प्रीत्यप्रीतिविषादाद्यैः गुणानां अन्योन्यं वैधर्म्यम् ॥ १२७ ॥

सत्त्वादीनां सुखदुःखमोहाद्यैः वैधर्म्यं परस्परमित्यर्थः।॥ १२७॥

सत्त्वादीनां प्रत्येकं अनन्तव्यक्तिकत्वसूचनाय तेषां साधर्म्यवैधर्म्ये प्रतिपादयति—

लघ्वादिधर्मैः साधर्म्यं वैधर्म्यं च गुणानाम् ॥ १२८ ॥

लघ्वादीति भावप्रधानो निर्देशः। लघुत्वं सत्त्वानां साधर्म्यं, रजस्तमोभ्यां वैधर्म्यं च। एवं चञ्चलत्वं रजसां, आवारकत्वं तु तमसामित्यर्थः। उक्तत्वेऽपि वैधर्म्यस्य पुनः कथनं—'कुतश्चिद्वैधर्म्यरूपस्यैव शास्त्रे

---

1 सत्त्वादिगुणानां प्रकृतिस्वरूपत्वे प्रकृतिधर्मत्वाभावात् एवं व्याख्यानम्।

2 सां. का. १० महदादिव्यक्तजातं तन्मूलभूतं प्रधानमित्युभयमपि त्रिगुणं, अभिन्नकार्यकारणकम्, ग्राहकग्राह्यं, अनेकपुरुषसाधारणं, स्वप्रकाशात् चेतनात् भिन्नं, परिणामरूपधर्मवच्च। तद्विलक्षणधर्मवांश्च पुरुषः इत्यर्थः।

3 अविवेकिविषयः इत्येकपदत्वमाश्रित्य इयं व्याख्या।

4 अत्रैव १२८ सूत्रे इत्यर्थः।

साधर्म्यत्वेन कथनम्, न हि प्रमेयत्वं क्वचित् साधर्म्यत्वेन निरूप्यते' इति सूचयितुम् ॥ १२८ ॥

अथ महदादीनां कार्यत्वे प्रमाणमाह—

उभयान्यत्वात् कार्यत्वं महदादेर्घटादिवत् ॥ १२९ ॥

महदादि पञ्चभूतान्तं भोग्यत्वात् न तावत् पुरुषः, मोक्षान्यथानुपपत्त्या विनाशित्वात् न प्रकृतिः, अतः उभयभिन्नत्वात् कार्यमेव घटादिवदित्यर्थः। ॥ १२९ ॥

हेत्वन्तरमाह—

परिमाणात् ॥ १३० ॥

परिच्छिन्नत्वात् पूर्वोक्ताद् अव्यापकत्वादित्यर्थः ॥ १३० ॥

इतश्च—

समन्वयात् ॥ १३१ ॥

अन्नादिसमन्वयेनोपचयादित्यर्थः।[1] क्षीणं हि बुद्ध्यादितत्त्वं अन्नादि-समनुगमनेन पुनरुपचीयते ॥ १३१ ॥

किञ्च—

शक्तितश्चेति ॥ १३२ ॥

करणतश्चेत्यर्थः। यत्करणं तत्कार्यं चक्षुरादिवदिवदित्यर्थः[2]। इतीति हेतुवर्गसमाप्तौ ॥ १३२ ॥

यदि च महदादिमध्ये किञ्चिदकार्यं स्वीक्रियते, तदा तत्कार्यत्वस्य हाने अभावे—परिणामित्वे प्रकृतिः, अपरिणामित्वे पुरुष एव, इति सिद्धं नः समीहितं; प्रकृतिपुरुषविवेके एवास्माकं तात्पर्यादित्याह—

---

1 उपवासादिनेति शेषः।

2 पुरुषे साक्षात् विषयार्पकत्वेन करणत्वं प्रकृतेः। अत एव प्रकृतेः न करणत्वम्।

तद्धाने प्रकृतिः पुरुषो वा ॥ १३३ ॥

भावस्तूक्त एव ॥ १३३ ॥

नन्वकार्यमप्युभयभिन्नं स्यात्। तत्राह—

तयोरन्यत्वे तुच्छत्वम्[1] ॥ १३४ ॥

पुंप्रकृत्यन्यत् नृशृङ्गकल्पमित्यर्थः ॥ १३४ ॥

तदेवं महदादिषु कार्यत्वं प्रसाध्य तैः प्रकृत्यनुमानेऽनुक्तं विशेषमाह—

कार्यात्कारणानुमानं तत्साहित्यात् ॥ १३५ ॥

पूर्वं यत्कार्यात्कारणानुमानमुक्तं तत् ताटस्थ्यनिवृत्तये कार्यसाहित्येनैव कर्तव्यम्। तद्यथा महदादिकं स्वोपहितत्रिगुणोपादानकं कार्यत्वात् शिलास्थप्रतिमावत् तैलादिवच्च। 'सदेव सौम्येदमग्र आसीत'[2] इत्यादिश्रुतिश्च अनुकूलतर्कः ॥ १३५ ॥

विवेकार्थं कार्यात्प्रकृतेः विवेकमाह[3]—

अव्यक्तं त्रिगुणाल्लिङ्गात् ॥ १३६ ॥

लिङ्गात् अभिव्यक्तात् महदादेः त्रिगुणात्कार्यात् प्रधानं अव्यक्तं अनभिव्यक्तं गुणस्वरूपं सूक्ष्मं इत्यर्थः ॥ १३६ ॥

ननु तदव्यक्तं चेत तर्हि तत नास्त्येवेति ब्रूमः, तत्राह—

तत्कार्यतस्तत्सिद्धेर्नापलापः ॥ १३७ ॥

सालभञ्जिकादिदृष्टान्तेन महतस्सत्कार्यत्वमनुमाय, तत्कार्यतः तादृशकार्यतः यथोक्तकारणसिद्धेर्नापलापः उचितः इत्यर्थः। "तथाप्येकतरदृष्ट्याऽन्यतरसिद्धेर्नापलापः"[4] इत्यत्र सत्कार्यानभ्युपगमेऽपि कारणमात्रसिद्धि-

---

1 स्यादिति शेषः।

3 छान्दोग्ये-6.2.1.

3 विवेकः वैधर्म्यम्

4 सां. सू 112

रुक्ता, इह तु तदभ्युपगमेन। तथाप्यन्यदेव कारणं भविष्यति, किं प्रकृत्येत्याशङ्कापरिहारेण न पौनरुक्त्यम् ॥ १३७ ॥

इतः परं पुरुषानुमाने विशेषाः विचार्याः। तत्रादौ कश्चन विशेषमाह—

सामान्येन विवादाभावाद्धर्मवन्न साधनम् ॥ १३८ ॥

यथा धर्मत्वेन रूपेण धर्मे विवादाभावात्तेन रूपेण न साधनापेक्षा, किन्तु प्रकारताभेदेन, तथा चेतने न साधनापेक्षा, किन्तु शरीरादिभिन्नत्वेनेत्यर्थः ॥ १३८ ॥

[1]प्रागुक्त'संहतपरार्थत्वा'दित्यत्र विवेकानुमानमेवाभिप्रेतम्। न तु स्वरूपानुमानम्। तद्विवेकानुमानप्रतिज्ञामेवाह–

शरीरादिव्यतिरिक्तः पुमान् ॥ १३९ ॥

पुमान् भोक्ता पक्षः। शरीरादिप्रकृत्यन्तचतुर्विंशत्यतिरिक्तः इति साध्यम् ॥ १३९ ॥

अत्र हेतूनाह सूत्रैः।

संहतपरार्थत्वात् ॥ १४० ॥

उक्तोऽप्ययं हेतुः हेतुवर्गसमुच्चयार्थः पुनरुक्तः। अत्र संहतत्वं हेतुरुक्तः इति भावः ॥ १४० ॥

किञ्च—

त्रिगुणादिविपर्ययात ॥ १४१ ॥

सुखदुःखमोहाभावादित्यर्थः। सुखादयस्तु प्रकृत्यादिधर्मा एव। अत्र कक्ष्यानुकक्ष्याः भाष्येऽनुसन्धेयाः ॥ १४१ ॥

अधिष्ठानाच्चेति ॥ १४२ ॥

अधिष्ठातृत्वाच्च। संयोगविशेषपरिणामहेतुत्वमधिष्ठातृत्वम्। संयोगश्च भिन्नयोरेवेति भावः। इतीति हेतुवर्गसमाप्तौ ॥ १४२ ॥

---

1 1.66

अत्रानुकूलतर्कमाह सूत्राभ्याम्—

भोक्तृभावात् ॥ १४३ ॥

पुरुषस्य भोक्तृत्वात्, शरीरादीनां तु भोग्यत्वात् तेषामेव भोक्तृत्वस्वीकारे कर्मकर्तृविरोधापत्तिरिति भावः ॥ १४३ ॥

किञ्च—

कैवल्यार्थं प्रवृत्तेश्च ॥ १४४ ॥

शरीरादीनां भोक्तृत्वे तेषां विनाशित्वाच्च[1] कैवल्यार्थं प्रवृत्तिर्न स्यादित्यर्थः ॥ १४४ ॥

इदानीं अपरः पुरुषगतविशेषोऽनुमीयते ।

जडप्रकाशायोगात्प्रकाशः ॥ १४५ ॥

जडस्याप्रकाशस्य लोष्टादेः प्रकाशोऽत्यन्तदर्शनात् सूर्यादिवत् प्रकाशरूप एव पुरुषः इत्यर्थः[2] ॥ १४५ ॥

ननु प्रकाशस्वरूपत्वेऽपि तेजोवद्धर्मधर्मिभावोऽस्ति न वा ? तत्राह—

निर्गुणत्वान्न चिद्धर्मा[3] । १४६ ॥

तथाच स्मर्यते-

ज्ञानं नैवात्मनो धर्मो न गुणो वा कथञ्चन ।
ज्ञानस्वरूप एवात्मा नित्यः पूर्णः सदाशिवः[4] ॥ इति ॥ १४६ ॥

ननु 'घटज्ञानवानहं' इति प्रत्यक्षात ज्ञानधर्मकत्वमेवास्तु, तत्राह—

---

1 चकारात् प्रकृतेः धर्मिग्राहकप्रमाणेन दुःखस्वाभाव्यसिद्ध्या कैवल्यासम्भवात् अधिष्ठातुः चेतनस्यैव परिश्रान्तचित्तस्य केवलीभावाय प्रवृत्त्यौचित्याच्चेति योजनीयम् ।

2 अत्र-यथा दीपः प्रकाशात्मा ह्रस्वो वा यदि वा महान् । ज्ञानात्मानं तथा विद्यात् पुरुषं सर्वजन्तुषु ॥ इत्यादिकमनुसन्धेयम् ।

3 गुणसामान्यानाश्रयत्वात न ज्ञानधर्मा पुमानित्यर्थः ।

4 सौरपुराणे 11-26

श्रुत्या सिद्धस्य नापलापस्तत्प्रत्यक्षबोधात् ॥ १४७ ॥

भवेदेवं यदि केवलतर्केणास्माभिः चिद्धर्मत्वं साध्येत। किन्तु श्रुत्या सिद्धस्य[1] निर्गुणत्वादेः नापलापः सम्भवति। तत्प्रत्यक्षस्य गुणादिप्रत्यक्षस्य श्रुत्यैव बाधात् अहं गौरः' इत्यादिवदित्यर्थः ॥ १४७ ॥

ननु यद्यात्मा प्रकाशरूपस्तदा सुषुप्त्याद्यवस्थाभेदोऽस्य नोपपद्यते[2] तत्राह–

सुषुप्त्याद्यसाक्षित्वम्[3] ॥ १४८ ॥

बुद्धिस्थस्य सुषुप्त्याद्यवस्थात्रयस्य साक्षित्वमेव पुंसीत्यर्थः। तदुक्तम्—

जाग्रत् स्वप्नः सुषुप्तं च गुणतो बुद्धिवृत्तयः।
तासां विलक्षणो जीवः साक्षित्वेन व्यवस्थितः ॥ इति ॥

तासां–बुद्धीनाम् ॥ १४८ ॥

ननु लाघवादात्मैक्यमेवास्तु तत्राह—

जन्मादिव्यवस्थातः पुरुषबहुत्वम् ॥ १४९ ॥

अपूर्वदेहेन्द्रियादिसङ्घातसंयोगो जन्म, मरणं तद्वियोगः। जन्ममरण सुखदुःखबन्धमोक्षाणां व्यवस्थातः श्रुत्युक्तविभागान्यथानुपपत्तेः पुरुषबहुत्वं सिद्ध्यति। "पुण्यः पुण्येन पापः पापेने"ति जन्मव्यवस्था। "य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति"[4] इति बन्धमोक्षादिव्यवस्था द्रष्टव्या[5] ॥ १४९ ॥

उपाधिभेदेन व्यवस्थापक्षं निराकरोति—

---

1 अत्र 'असङ्गो ह्ययं पुरुषः 'साक्षी चेता केवलो निर्गुणश्च'। 'अकर्ता चैतन्यं चिन्मात्र' सच्चिदेकरसो ह्ययमात्मा'। इत्याद्याः श्रुतयः अनुसन्धेयाः।

2 सदाप्रकाशानपायादितिभावः।

3 स्यादिति शेषः।

4 बृहदारण्यके—4-4-14.

5 यस्मात् प्रतिशरीरं हि सुखदुःखोपलब्धिता। तस्मात् पुरुषनानात्वं विज्ञेयं तु विजानता। इत्याद्याः स्मृतयोऽप्यनुसन्धेयाः।

उपाधिभेदेऽप्येकस्य नानायोगः आकाशस्येव घटादिभिः ॥ १५० ॥

उपाधीनां भेदेऽप्येकस्य पुंसो नानोपाधियोगोऽस्त्येव आकाशस्य घटमठादिभिरिव। तथा च कायव्यूहादाविव एकस्य नानोपाध्यवच्छेदेन सुखदुःखादियोगः स्यादित्यर्थः ॥ १४० ॥

अतिरिक्तः एवोपाधिविशिष्टोऽस्तु। तत्राह—

उपाधिर्भिद्यते न तु तद्वान् ॥ १५१ ॥

उपाधिरेव भिद्यते न तु तद्विशिष्टोऽपि। किञ्च विशिष्टस्यातिरिक्तत्वे विशेषणनाशे तन्नाश एव स्यात। अतो नातिरिक्तत्वम् ॥ १५१ ॥

उपसहरति—

एवमेकत्वेन परिवर्तमानस्य न विरुद्धधर्माध्यासः ॥ १५२ ॥

एकत्वेन सर्वतो वर्तमानस्य यो विरुद्धसुखदुःखादिभिः धर्मस्याध्यासः आपत्तिः स एवं पुरुषबहुत्वे नेत्यर्थः ॥ १५२ ॥

नन्वात्मनो निर्धर्मत्वात् सुखादीनां बुद्ध्यादिधर्मत्वाच्च न साङ्कर्यापत्तिरत आह—

अन्यधर्मत्वेऽपि नारोपात्तत्सिद्धिरेकत्वात् ॥ १५३ ॥

बुद्धिधर्मत्वेऽपि सुखादीनां आरोपात पुरुषे व्यवस्था न सम्भवति। आरोपाधिष्ठानस्यैवत्वात। न हि स्फटिकैक्येपि आरोपितानां नीलपीतादीनां अयं नीलोऽयं पीत इति व्यवस्था सम्भवतीत्यर्थः। अत एव वेदान्तेऽपि "भेदव्यपदेशाच्चान्यः[1]" "अधिकन्तु भेदनिर्देशात[2]" इत्यादिसूत्रैः भेद एवोक्तः ॥ १५३ ॥

नन्वेवं "एक एव हि भूतात्मा भूते भूते व्यवस्थितः।

एकधा बहुधा चैव दृश्यते जलचन्द्रवत्[3] इत्यात्मैक्यप्रतिपादकानां का गतिस्तत्राह—

---

1 ब्र. सू. 1-1-21.
2 ब्र. सू. 2-1-22.
3 ब्रह्मबिन्दूप. 12.

नाद्वैतश्रुतिविरोधो जातिपरत्वात् ॥ १५४ ॥

जातिसामान्यमेकरूपत्वम्। आत्मैक्यप्रतिपादकश्रुतीनां[1] तत्परत्वान्न ताभिस्सह विरोधः इत्यर्थः। जातिशब्दस्यावैधर्म्यपरत्वमग्रिमसूत्राल्लभ्यते। अत्राखण्डतो व्यावृत्तस्य अवैधर्म्यस्य बोधे प्रयोजनं भाष्ये स्पष्टम्[2] ॥ १५४ ॥

नन्वेवमपि प्रत्यक्षेण विरुद्धं तत् कथमुक्तं जातिपरत्वादिति तत्राह—

विदितबन्धकारणस्य दृष्ट्याऽतद्रूपम् ॥ १५५ ॥

विदितं स्पष्टं बन्धकारणं अविवेको यत्र तस्य दृष्ट्यैव पुरुषे अतद्रूपं वैधर्म्यरूपो भेद इत्यर्थः[3] ॥ १५५ ॥

ननु तथाप्यनुपलम्भादेकरूपतया भावः सेत्स्यतीत्यत आह—

नान्धादृष्ट्या चक्षुष्मतामनुपलम्भः ॥ १५६ ॥

अनुपलम्भ एवासिद्धः। अज्ञैरदर्शनेऽपि ज्ञानिभिरेकरूपत्वदर्शनादित्यर्थः ॥ १५६ ॥

अखण्डत्वे बाधकान्तरमाह—

वामदेवादिर्मुक्तो नाद्वैतम् ॥ १५७ ॥

वामदेवादिर्मुक्तोऽस्ति, तथापि स्वस्मिन् बन्धस्यानुभूयमानत्वात नाद्वैतमित्यर्थः[4] ॥ १५७ ॥

ननु वामदेवादेरपि परममोक्षो न जात इत्यभ्युपेयम तत्राह—

---

1 नित्यः सर्वत्रगो ह्यात्मा कूटस्थो दोषवर्जितः। एकः सः भिद्यते शक्त्या मायया न स्वभावतः॥ इत्याद्यन्नपूर्णोपनिषदाद्याः श्रुतयश्चानुसन्धेयाः।

2 प्रतिपादिते अवैधर्म्ये च "यथोदकं शुद्धे शुद्धं आसिक्तं तादृगेव भवति एवं मुनेः विजानतः आत्मा भवति गौतम"। "निरञ्जनः परमं साम्यमुपैति" इत्याद्याः श्रुतयः उदाहृताः भाष्ये।

3 न तु भ्रान्तदृष्ट्येति शेषः।

4 आत्माद्वैते एकमुक्तौ सर्वमुक्तिप्रसङ्गादिति भावः।

अनादावद्ययावदभावाद्भविष्यदप्येवम् ॥ १५८ ॥

अनादौ काले अद्य यावच्चेन्मोक्षो न जातः कस्यापि, तर्हि भविष्यत्कालेऽपि मोक्षशून्य एव स्यात्। सम्यक् साधनानुष्ठानस्याविशेषात् इति भावः ॥ १५८ ॥

तत्रानुमानमाह—

इदानीमिव सर्वत्र नात्यन्तोच्छेदः ॥ १५९ ॥

सर्वकालो बन्धात्यन्तोच्छेदाभाववान् कालत्वात् वर्तमानकालवत् इत्यनुमानसम्भवादित्यर्थः ॥ १५९ ॥

पुंसां यदेकरूपत्वमवधारितं तत्किं मोक्षकाले उत सर्वदेत्याकांक्षायामाह—

व्यावृत्तोभयरूपः ॥ १६० ॥

श्रुतिस्मृतिन्यायेभ्यो नित्यनिवृत्तरूपभेदः यस्मात्तथेत्यर्थः।

ननु साक्षित्वस्यानित्यत्वात् कथं सदैकरूपत्वम्? तत्राह—

साक्षात्सम्बन्धात्साक्षित्वम् ॥ १६१ ॥

पुरुषस्य यत्साक्षित्वमुक्तं तत्साक्षात्सम्बन्धात् न तु परिणामतः इत्यर्थः। "साक्षात् द्रष्टरि संज्ञायां" [1]इति साक्षिशब्दस्य व्युत्पादनात्। सम्बन्धश्चात्र बिम्ब एव न तु संयोगमात्रं, अतिप्रसङ्गात्। स च स्वबुद्धावेवास्तीति स्वबुद्धेरेव साक्षी। अन्येषां तु द्रष्टृत्वमात्रमिति। "अक्षसम्बन्धात्साक्षित्वम्" इति पाठे तु—अक्षमत्र बुद्धिः करणत्वसामान्यात् इति बोध्यम्[2] ॥ १६१ ॥

अन्यौ विशेषावाह सूत्राभ्याम्—

---

1 अष्टाध्यायी. 5 2.91 अत्र-"त्रिभिः साक्षात् दृष्टं भवति यश्च ददाति, यस्मै च दीयते, यश्च पार्श्वे स्थितः पश्यति। तत्र सर्वत्र प्रत्ययः इति प्राप्नोति। संज्ञाग्रहणांश्च धनिकाधमर्णयोः न भवती"ति भाष्यम्।

2 बुद्धेश्च प्रतिबिम्बरूपात् सम्बन्धात् इति सूत्रार्थः तस्मिन् पाठे।

नित्यमुक्तत्वम् ॥ १६२ ॥

सदैव पुरुषस्य दुःखादिबन्धशून्यत्वम्। दुःखादेः बुद्धिपरिणामित्वादित्यर्थः ॥ १६२ ॥

औदासीन्यं चेति ॥ १६३ ॥

औदासीन्यमकर्तृत्वम्। तेन चान्येपि निष्कामत्वादय उपलक्षणीयाः[1]। इतिः पुरुषधर्मसमाप्त्यर्थः ॥ १६३ ॥

नन्वेवं पुरुषस्य कर्तृत्वं बुद्धेर्ज्ञातृत्वं च श्रुतिस्मृत्योरुच्यमानं[2] कथमुपपद्यते तत्राह—

उपरागात्कर्तृत्वं चित्सान्निध्यात् चित्सान्निध्यात् ॥ १६४ ॥

अत्र यथायोग्यमन्वयः। पुरुषस्य यत्कर्तृत्वं तत बुद्ध्युपरागात; बुद्धेश्च या चित्ता सा चित्सान्निध्यात्। यथाग्न्ययसोः परस्परं संयोगविशेषात परस्परधर्मव्यवहारः औपाधिकः तथेहापीत्यर्थः। चित्सान्निध्यादिति पुनः पाठोऽध्यायसमाप्तिसूचनाय। अत्रेयं भाष्यकारिका—

हेयहाने तयोर्हेतू इति व्यूहाः यथाक्रमम।
चत्वारः शास्त्रमुख्यार्था अध्यायेऽस्मिन् प्रपञ्चिताः ॥इति॥ ॥१६४॥

इति श्रीभावगणेशात्मज-श्रीधरविरचितायां
साङ्ख्यसूत्रप्रवचनवृत्तौ विषयाध्यायः
प्रथमः समाप्तः



1 "कामः सङ्कल्पः विचिकित्सा श्रद्धा अश्रद्धा धृतिः अधृतिः ह्रीः धीः भीः इत्येतत् सर्वं मन एव" (बृहदारण्यके 1-5-3) इति श्रुतेः।

2 चिद्भावः इत्यर्थः।

# अथ प्रधानकार्याध्यायः

## द्वितीयः



इतः परं [1]पुरुषकूटस्थोपपत्तये प्रकृतितः सृष्टिं, प्रकृतितत्कार्याणां स्वरूपं च विस्तरतो वक्ष्यति, तेभ्योऽपि पुरुषस्य स्फुटविवेकाय। तत्रादौ अचेतनायाः प्रकृतेः स्रष्टृत्वे प्रयोजनमाह[2]—

विमुक्तमोक्षार्थं स्वार्थं वा प्रधानस्य ॥ १ ॥

कर्तृत्वमिति पूर्वाध्यायान्तिमसूत्रादनुषज्यते। स्वभावतो दुःखमुक्तस्य पुनः प्रतिबिम्बसम्बन्धेन दुःखमोक्षार्थं,[3] स्वस्य पारमार्थिकदुःखमोक्षार्थं वा प्रधानस्य जगत्कर्तृत्वमित्यर्थः।

"कर्तृत्वं नैव भोक्तृत्वं आत्मनोऽस्ति कथञ्चन।
अहङ्काराविवेकेन कर्तृत्वमिति निश्चयः।
आत्मनो नित्यमुक्तस्य निर्विभागस्य सर्वदा।
नैवास्ति किञ्चित्कर्तव्यमिति वेदविदो विदुः॥"

[4]अत्र सूत्रे—"निस्सङ्गेऽप्युपरागोऽविवेकात्"। "जपास्फटिकयोरिव नोपरागः किन्तु अभिमानः[5]" इति। यद्वा–पुरुषप्रधानयोः संयोगः = सान्निध्यं

1 पुरुषस्य अपरिणामित्वोपपादनायेत्यर्थः।

2 अन्यथा मुक्तस्यापि बन्धप्रसक्तेः।

3 आभिमानिकबन्धविमोक्षार्थमिति यावत्।

4 उक्तार्थे उपष्टम्भकतया षष्ठाध्यायगतसूत्रे परामृशति अत्रेति। क्लेशकर्मादिनानाविधवासनावासितबुद्धिसत्त्वसंसर्गरहितेऽपि पुरुषे सत्त्वपुरुषानन्यतामात्रलक्षणादविवेकादुपराग इव भवति इत्यर्थः। (6.27)

5 जपास्फटिकयोः परस्परसंसर्गात् स्फाटिके यथा जपावर्णोपरागः न तथा सत्त्वपुरुषयोः किन्तु केवलमभिमानमित्यर्थः। (6-28)

विमुक्तमोक्षार्थं—कैवल्यार्थं, स्वार्थं–सकारणलयार्थं वा प्रधानस्य। यद्यपि बन्धोऽपि सृष्टिप्रयोजनं तथापि मुख्यत्वान्मोक्ष एवोक्तः ॥ १ ॥

ननु मोक्षार्थं चेत्सृष्टिः तर्हि सकृत्सृष्ट्यैव सर्वमोक्षः स्यात् तत्राह—

विरक्तस्य तत्सिद्धेः ॥ २ ॥

बहुजन्ममरणव्याध्यादिसन्तप्तस्य प्रकृतिपुरुषयोः विवेकख्यात्या उत्पन्नपरवैराग्यस्यैव मोक्षसिद्धेः, न सकृत्सृष्टेः तत्सिद्धिरित्यर्थः[1] ॥ २॥

सकृत्सृष्ट्या वैराग्यासिद्धौ हेतुमाह—

न श्रवणमात्रात्तत्सिद्धिः अनादिवासनायाः बलवत्त्वात् ॥ ३ ॥

बहुजन्मकृतपुण्यसाध्यश्रवणमात्रतोऽपि न वैराग्यस्य सिद्धिः, पटुतर-विवेकसाक्षात्कारनिवर्तनीयानाद्यज्ञानवासनायाः बलवत्त्वात्, मोक्षस्य सकृत्-सृष्ट्या का वार्तेत्यर्थः। श्रवणमात्रेण न वैराग्यसिद्धिः। अनादिविषयवास-नानां पटुत्वात्। तद्विमुक्त्यर्थं पुनः पुनः सृष्टिरेवावश्यकीति यावत् ॥ ३ ॥

सृष्टिप्रवाहे हेत्वन्तरमाह—

बहुभृत्यवद्वा प्रत्येकम् ॥ ४ ॥

यथा बहुभरणीयस्य सद्गृहस्थस्य एकभृत्यभरणेऽपि अन्येषां भरणार्थं पुनः पुनः प्रवृत्तिः, एवं सत्त्वादीनां प्रत्येकमनन्तपुरुषा मोचनीयाः इत्यसकृत्प्रवृत्तिरित्यसङ्ख्याः पुरुषाः मोचनीयाः। अतः कियतां मोक्षेऽपि अन्येषां मोक्षार्थं सृष्टिप्रवाहः इति भावः[2] ॥ ४ ॥

ननु प्रकृतेरेव स्रष्टृत्वे श्रुतिः कथं आत्मनः स्रष्टृत्वं प्रतिपादयति "आत्मन आकाशस्सम्भूतः"[3] इति, तत्राह—

1 "बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते।" "जन्मान्तरसहस्रेषु तपोध्यान-समाधिभिः। नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते"। इत्यादिकं अत्रा-नुसन्धेयम्।

2 योगसूत्रमप्यत्र—"कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात्" (2-22) इति।

3 (तै. उप. 2-1.)

प्रकृतिवास्तवे च पुरुषस्याध्याससिद्धिः ॥ ५ ॥

प्रकृतेः स्रष्टृत्वे वास्तवे सिद्धे, श्रुतौ उपासनार्थं स्रष्टृत्वाध्यासः, सेनाजयाध्यासो राज्ञ इवेत्यर्थः। यथा कौर्मे—

" शक्तिशक्तिमतोर्भेदं पश्यन्ति परमार्थतः ।
अभेदं चानुपश्यन्ति योगिनस्तत्त्वचिन्तकाः "[1] इति ॥ ५ ॥

नन्वेवं प्रकृतावपि स्रष्टृत्वं वास्तवमिति कुतोऽवधृतम् ? सृष्टेः स्वप्नादितुल्यताया अपि श्रवणादिति तत्राह—

कार्यतस्तत्सिद्धेः ॥ ६ ॥

अर्थक्रियाकारितया कार्याणां वास्तवत्वेन, ततः प्रकृतेरपि वास्तवस्रष्टृत्वं सिद्ध्यतीत्यर्थः ॥ ६ ॥

ननु स्वार्थप्रवृत्तिपक्षे सर्वात्मभ्यः सा युगपन्मुच्येत, तत्राह—

चेतनोद्देशान्नियमः कण्टकमोक्षवत् ॥ ७ ॥

"चिती संज्ञाने" इति व्युत्पत्त्या चेतनोऽत्राभिज्ञः[2]। यथैकमेव कण्टकमभिज्ञान्मुच्यते, कण्टकाभिज्ञात्कण्टकमोक्षनियमः,[3] तथा विवेकिनः सकाशात् प्रधानप्रवृत्तेः मोक्षनियमः, नान्यतः इति, तं प्रति दुःखदं न भवति, अन्यं प्रति तु भवति। तथा प्रकृतिरप्यभिज्ञान्मुच्यते नान्यत इति नियमो व्यवस्थेत्यर्थः ॥ ७ ॥

ननु कर्दमसंयोगेन काष्ठादेरिव प्रकृतिसंयोगेन पुरुषस्यापि परिणाम उचितः, तत्कथं अध्यस्तं स्रष्टृत्वमिति, तत्राह—

1 (कूर्मे-1-12-28.) तथा चाग्रे अस्य अतात्त्विकत्वं स्पष्टीकृतम्—"यद्यात्मा मलिनोऽस्वच्छः विकारी स्यात् स्वभावतः। न हि तस्य भवेन्मुक्तिः जन्मान्तरशतैरपि" इति, (कूर्मे 2-2-12)

2 संज्ञानं नाम चैतन्यं संवित्तिर्वा इति क्षीरस्वामी।

3 अयं भावः अभिज्ञः-स्वपादतलं यथा वा कण्टको न प्रविशति तथैव पादं विन्यस्यति, पादरक्षादिना वा रक्षति, प्रविष्टं वा कण्टकं कण्टकान्तरादेव बहिर्निस्सारयति तद्वदिति।

अन्ययोगेऽपि तत्सिद्धिर्नाञ्जस्येनायोदाहवत् ॥ ८ ॥

यथा अयसो दग्धृत्वमग्निद्वारकं, आञ्जस्येन साक्षात् न, एवं प्रकृतिसंयोगेऽपि पुरुषस्य न साक्षात्परिणामसिद्धिरित्यर्थः। काष्ठादौ तु उभयपरिणामस्य प्रत्यक्षत्वात्तथा स्वीकार इति भावः। यथाऽयसो दग्धृत्वेऽपि न अञ्जसा, किन्तु स्वसंयुक्ताग्निद्वारकमेव, एवं प्रकृतियोगेऽपि पुरुषस्याञ्जस्येन न स्रष्टृत्वसिद्धिः ॥ ८ ॥

सृष्टेः मुख्यं निमित्तकारणमाह—

रागविरागयोः योगः सृष्टिश्च ॥ ९ ॥

रागे सृष्टिः, वैराग्ये च योगः—स्वरूपेणावस्थानम्। मुक्तिरित्यर्थः[1] ॥ ९ ॥

अथ सृष्टिप्रक्रियोच्यते—

महदादिक्रमेण पञ्चभूतानाम् ॥ १० ॥

सृष्टिरित्यनुवर्तते। 'तत्तेजोऽसृजते'त्यादौ गगनादिपूरणवत्[2] 'आत्मन आकाशः' इत्यादावपि महदादिसृष्टिः पूरणीयेति भावः ॥ १० ॥

महदादीनां सविकारस्रष्टृत्वे विशेषमाह—

आत्मार्थत्वात्सृष्टेर्नैषामात्मार्थ आरम्भः ॥ ११ ॥

एषां महदादीनां स्रष्टृत्वस्यात्मार्थत्वात् — पुरुषमोक्षार्थत्वात् नैषां स्वप्रयोजनक आरम्भः—स्रष्टृत्वम्। स्वस्य विनाशित्वेन मोक्षायोगात् ॥ ११ ॥

खण्डदिक्कालयोः सृष्टिमाह—

1 रागवैराग्ये अपि प्रकृतिधर्माविव।

2 तेजआदिसृष्टिश्रुतौ यथा "अकाशाद्वायुः, वायोरग्निः" इति श्रुत्यनुसारेण पूर्वं गगनवायुसृष्टी आपूरणीये तद्वत् इत्यर्थः।

दिक्कालावाकाशादिभ्यः ॥ १२ ॥

नित्यौ यौ दिक्कालौ तावाकाशप्रकृतिभूतौ प्रकृतेर्गुणविशेषावेव। अतः दिक्कालयोर्विभुत्वोपपत्तिः[1]। यौ तु खण्डदिक्कालौ, तौ तु तत्तदुपाधिसंयोगात् आकाशादुत्पद्येते इत्यर्थः॥ १२ ॥

महदादिस्वरूपं विशिष्य दर्शयति सूत्रैः—

अध्यवसायो बुद्धिः ॥ १३ ॥

अध्यवसायश्च निश्चयः। अभेदनिर्देशो धर्मधर्म्यभेदात्। तथा चासाधारण्येन निश्चयवृत्तिका बुद्धिः महत्तत्त्वमित्यर्थः[2]॥ १३ ॥

तत्कार्यं धर्मादि ॥ १४ ॥

धर्मज्ञानवैराग्यैश्वर्याण्यपि बुद्ध्युपादानकानि। बुद्धेरेव निरतिशय सत्त्वकार्यत्वादित्यर्थः॥ १४ ॥

ननु नरादिबुद्धावधर्मप्राबल्यं कुतः तत्राह—

महदुपरागाद्विपरीतम् ॥ १५ ॥

तदेव महत् रजस्तमोभ्यामुपरागाद्विपरीतं क्षुद्रधर्माज्ञानावैराग्यानैश्वर्यरूपाधर्मादिधर्मकं भवति ॥ १५ ॥

महत्तत्वं लक्षयित्वा तत्कार्यं अहङ्कारं लक्षयति—

अभिमानोऽहङ्कारः ॥ १६ ॥

अभिमान एवाहङ्कारः इत्यर्थः[3] ॥ १६ ॥

---

1 "आकाशवत् सर्वगतश्च नित्यः" इति श्रुत्युक्तं आकाशस्य विभुत्वमित्यर्थः।

2 अस्याः बुद्धेः महत्त्वं च स्वेतरसकलकार्यव्यापकत्वात् महैश्वर्याच्चेति मन्तव्यम्। स्मृतिश्च–"सविकारात् प्रधानात्तु महत्तत्त्वमजायत। महानिति यतः ख्यातिः लोकानां जायते सदा॥" (मत्स्ये–3–17) इति।

3 धर्मधर्म्यभेदनिमित्तकः अभिमान एवाहङ्कारपदार्थः इत्यर्थः।

क्रमागतमहङ्कारकार्यमाह—

एकादशपञ्चतन्मात्रं तत्कार्यम् ॥ १७ ॥

एकादशेन्द्रियाणि शब्दादितन्मात्रं चाहङ्कारस्य कार्यमित्यर्थः ॥ १७ ॥

तत्रापि विशेषमाह—

सात्त्विकं एकादशकं प्रवर्तते वैकृतादहङ्कारात् ॥ १८ ॥

एकादशानां पूरणमेकादशकं मनः सात्त्विकाहङ्काराज्जायते इत्यर्थः। दशेन्द्रियाणि राजसात् पञ्चतन्मात्राणि तामसादित्यपि ज्ञेयम् ॥ १८ ॥

एकादशेन्द्रियाणि दर्शयति—

कर्मेन्द्रियबुद्धीन्द्रियैरान्तरमेकादशकम् ॥ १९ ॥

वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाणि। चक्षुःश्रोत्रत्वग्रसनघ्राणाख्यानि ज्ञानेन्द्रियाणीत्येतद्दशकेन सहान्तरं मनः इति आहत्य एकादशेन्द्रियाणीत्यर्थः ॥ १९ ॥

भौतिकत्वमतं निराकरोति—

आहङ्कारिकत्वश्रुतेर्न भौतिकानि ॥ २० ॥

इन्द्रियाणीति शेषः। अत्र प्रमाणभूता काललुप्ताऽपि श्रुतिः कपिलदेववाक्यादनुमीयते[1] इति भावः ॥ २० ॥

ननु देवतोपादानकत्वमेवास्तु "अग्निं वागप्येति" इत्यादिना तत्र लयश्रवणादित्याशङ्कयाह—

देवतालयश्रुतिर्नारम्भकस्य ॥ २१ ॥

देवतासु या लयश्रुतिः सा नारम्भकविषयिणी। अनारम्भकभूतलादावपि जलबिन्दुलयदर्शनात्। न तल्लयमात्रेण तदपादानकत्वसिद्धिरित्यर्थः ॥ २१ ॥

---

1 "एकादशैव तान्याहुः इन्द्रियाणि विशेषतः। अहंकारात् प्रसूतानि तानि वक्ष्याम्यहं द्विजाः।" (भा. अश्व. 42. 12)

मनोनित्यत्वं परिहरति—

तदुत्पत्तिश्रुतेः विनाशदर्शनाच्च ॥ २२ ॥

"एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च[1]" इति श्रुत्या सर्वेन्द्रियाणामुत्पत्तिः श्रूयते। मनसो नित्यत्ववचनानि च प्रकृत्याख्यबीजपराणीति ज्ञेयम् ॥ २२ ॥

गोळकेन्द्रियादिमतं दूषयति—

अतीन्द्रियं इन्द्रियं भ्रान्तानामधिष्ठाने[2] ॥ २३ ॥

सर्वमिन्द्रियमतीन्द्रियमेव, न तु प्रत्यक्षम्। भ्रान्तानां गोळके इन्द्रियबुद्धिरित्यर्थः। अधिष्ठाने इत्येव पाठः ॥ २३ ॥

एकमेवेन्द्रियं शक्तिभेदाद्विलक्षणकार्यकारीति मतं निराकरोति—

शक्तिभेदेऽपि भेदसिद्धौ नैकत्वम् ॥ २४ ॥

एकस्यैवेन्द्रियस्य शक्तिभेदस्वीकारेऽपीन्द्रियभेदः सिद्ध्यति। शक्तीनामपीन्द्रियत्वात् इति भावः ॥ २४ ॥

ननु एकस्मादहङ्कारात् नानाविधकार्योत्पत्तौ न्यायविरोधस्तत्राह—

न कल्पनाविरोधः प्रमाणदृष्टस्य ॥ २५ ॥

सुगमम् ॥ २५ ॥

एकस्यैव मुख्येन्द्रियस्य मनसः दश शक्तिभेदाः इत्याह—

उभयात्मकं च मनः ॥ २६ ॥

उभयं ज्ञानकर्मेन्द्रियम् ॥ २६ ॥

तदात्मकत्वं विवृणोति—

1 मुण्डके. 2-1-3

2 अधिष्ठानमिति भाष्यपाठः

गुणपरिणामभेदान्नानात्वमवस्थावत् ॥ २७ ॥

यथा एक एव नरः कामिन्यादिसंसर्गेण नानावस्थां भजते, एवं एकमेव मनः चक्षुरादिसङ्गाद्गुणतः चाक्षुष्यादिवृत्तिरूपपरिणामभेदान्नानात्वं भजत इत्यर्थः ॥ २७ ॥

उभयेन्द्रियविषयमाह—

रूपादिरसमलान्त उभयोः ॥ २८ ॥

अन्नरसानां मलः पुरीषादिः। तथा च रूपरसगन्धस्पर्शशब्दाः वक्तव्यादातव्यगन्तव्यानन्दयितव्योत्सृष्टव्याश्च ज्ञानकर्मेन्द्रिययोः विषयाः। आनन्दयितव्यं चोपस्थस्यावस्थान्तरम् ॥ २८ ॥[1]

यस्येन्द्रियस्य येनोपकारेणैतानि इन्द्रियाणीत्युच्यन्ते तदुभयमाह—

द्रष्टृत्वादिरात्मनः करणत्वमिन्द्रियाणाम् ॥ २९ ॥

द्रष्टृत्वादिपञ्चकमनुभवे पर्यवसानात् स्पष्टं पुरुषस्य। वक्तृत्वादिपञ्चकं त्वविकारिणोऽप्ययस्कान्तवत् सान्निध्यमात्रेण। दर्शनादिवृत्तौ करणत्वं तु इन्द्रियाणामित्यर्थः। अत्र वृत्तिं प्रत्येवेन्द्रियाणां करणत्वम्। पुरुषनिष्ठबोधाख्यं फलं प्रति तु वृत्तीनां करणत्वमिति बोध्यम् ॥ २९ ॥

इदानीमन्तःरणस्य असाधारणवृत्तीराह—

त्रयाणां स्वालक्षण्यम् ॥ ३० ॥

स्वं स्वं लक्षणमेव स्वलक्षणं—असाधारणी वृत्तिः, सा येषां तेषां भावः स्वालक्षण्यम्। तथा च अध्यवसायो बुद्धेः, अभिमानोऽहङ्कारस्य, सङ्कल्पविकल्पाध्यासाः[2] मनसश्च असाधारणवृत्तयः इति भावः ॥ ३० ॥

---

1 आनन्दस्य बोधविशेषरूपत्वात् कर्मेन्द्रियविषयत्वानुपपत्तिं मनसि निधायैवमुक्तम्। प्रजननं बीजसेकः प्रसवो वा उपस्थस्य विषय इति तु युक्तम्। अत्र 'प्रजातिरमृतमानन्दः इत्युपस्थे' इति श्रुतिः अनुसन्धेया। अत्र 'उपस्थस्योपस्थान्तरं' इति पाठान्तरम्।

2 सङ्कल्पः कर्म मानसं—चिकिर्षा,। शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः इत्तभ्रमविशेषः, संशयो वा विकल्पः।

त्रयाणां साधारणीं वृत्तिमाह—

सामान्यकरणवृत्तिः प्राणाद्याः वायवः पञ्च ॥ ३१ ॥

वायुवत्सञ्चारात् प्राणाद्या ये वायवः प्रसिद्धाः तेऽन्तःकरणत्रयस्य साधारणी वृत्तिरित्यर्थः[1] ॥ ३१ ॥

इन्द्रियवृत्तीनां यौगपद्यनियमो नास्तीत्याह—

क्रमशोऽक्रमशश्चेन्द्रियवृत्तिः[2] ॥ ३२ ॥

स्पष्टम् ॥ ३२ ॥

पिण्डीकृत्य बुद्धिवृत्तीः दर्शयति—

वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः ॥ ३३ ॥

क्लिष्टास्तामस्यः, अक्लिष्टास्सात्त्विक्यः, क्लिष्टाक्लिष्टाः राजस्यो वा भवन्तु वृत्तयः ; ताः पञ्चप्रकारा एव। वृत्त्यभावे पुरुषस्वास्थ्यस्य वक्ष्यमाणत्वात् आसां अस्वास्थ्यहेतुत्वमिति भावः ॥ ३३ ॥

वृत्तीनां पञ्चप्रकारत्वं पातञ्जले उक्तम्—

"प्रमाणविपर्ययविकल्पनिद्रास्मृतयः" इति।[3] आसां विशेषलक्षणानि पितुक्तयोगवृत्तौ योगदीपिकायां अनुसन्धेयानि[4] ॥ ३३ ॥

तन्निवृत्तौ पुंस्वरूपावस्थामाह—

1 वृत्तिरित्यस्य परिणामभेदः इत्यर्थः। योगभाष्येऽपि "समतेन्द्रियवृत्तिः प्राणादिलक्षणा" इत्युक्तम्। 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च। खं वायुः ज्योतिरापः पृथिवी विश्वस्य धारिणी' इत्यादिश्रुतिषु च वायुप्राणयोः पृथक्त्वं दर्शितम्।

2 विषयानुगुण्येन क्वचित् क्रमात् क्वचिद्युगपच्च दर्शनसङ्कल्पाभिमानाध्यवसायरूपाः इन्द्रियाणा वृत्तयः भवन्ति इत्यर्थः।

3 (योगसूत्रे-1-6)।

4 अत्रमानि योगसूत्राणि—"प्रत्यक्षानुमानागमाः प्रमाणानि। विपर्ययो मिथ्याज्ञानं अतद्रूपप्रतिष्ठम्। शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः। अभावप्रत्ययालम्बना वृत्तिः निद्रा। अनुभूतविषयासम्प्रमोषः स्मृतिः॥" इति। तत्र सांख्ये विवेकाग्रह एव विपर्ययः

तन्निवृत्तावुपशान्तोपरागः स्वस्थः ॥ ३४ ॥

वृत्तिनिवृत्तौ निवृत्तप्रतिबिम्बरूपभोगः पुरुषः स्वरूपेणावस्थितो भवतीत्यर्थः। तथा च योगसूत्रम्—'तदा द्रष्टुः स्वरूपेऽवस्थानं[1]' इति। तदा वृत्तिनिरोधनकाले ॥ ३४ ॥

उक्तं दृष्टान्तेन विवृणोति—

कुसुमवच्च मणिः ॥ ३५ ॥

चकारो हेतौ। यथा च कुसुमेन सन्निकृष्टेन निवृत्तेन च स्फटिकोऽस्वच्छः स्वच्छश्च भवति, तद्वदित्यर्थः। तदुक्तं कौर्मे—

"यथा संलक्ष्यते रक्तः केवलः स्फटिको जनैः।
रञ्जकाद्युपधानेन तद्वत् परमपूरुषः[2] ॥" इति ॥ ३५॥

करणप्रवृत्तौ कारणमाह[3]—

पुरुषार्थं करणोद्भवोऽप्यदृष्टोल्लासात् ॥ ३६ ॥

पुरुषार्थं करणप्रवृत्तिरदृष्टाभिव्यक्तेरेव भवति, न प्रयत्नान्तरापेक्षा इत्यर्थः ॥ ३६ ॥

परार्थं स्वतः प्रवृत्तौ दृष्टान्तमाह—

धेनुवद्वत्साय ॥ ३७ ॥

यथा धेनुर्वत्सार्थमन्यप्रयत्नं विनैव पयः क्षरति, एवं करणानि पुरुषार्थं स्वतः प्रवर्तन्ते इत्यर्थः। दृश्यते च सुषुप्तात् स्वयमेव बुद्धेरुत्थानमिति ॥ ३७॥

बाह्याभ्यन्तरैर्मिलित्वा कियन्ति करणानीत्याकाङ्क्षायाह—

---

1 (1-3)
2 कूर्मे—2.2.28
3 पुरुषस्य कूटस्थत्वात् ईश्वरस्य च प्रतिषिद्धत्वात् इति।

करणं त्रयोदशविधं अवान्तरभेदात् ॥ ३८ ॥

अन्तःकरणत्रयं दश बाह्यानीति त्रयोदश। बुद्धिरेव मुख्यं करणमित्याशयेनोक्तमवान्तरभेदादिति ॥ ३८ ॥

बुद्धेर्मुख्यं करणत्वमुपपादयन्नन्यानि गौणानीत्याह—

इन्द्रियेषु साधकतमत्वगुणयोगात् कुठारवत् ॥ ३९ ॥

पुरुषे साक्षाद्विषयसमर्पकतया बुद्धिरेव प्रधानं करणम्। इन्द्रियेषु तु साधकतमत्वगुणोऽस्ति। अतस्तान्यपि गौणानि करणानि। यथा छिदाऽयोगव्यवच्छिन्नतया प्रहारस्यैव मुख्यं करणत्वं, कुठारस्य तु तद्द्वारा गौणं तद्वदित्यर्थः ॥ ३९ ॥

गौणमुख्यभावे व्यवस्थां विशिष्याह—

द्वयोः प्रधानं मनो लोकवत् भृत्यवर्गेषु ॥ ४० ॥

बाह्याभ्यन्तरयोर्मध्ये मनः-बुद्धिरेव[1] प्रधानं मुख्यम्। यथा राज्ञो भृत्यवर्गेषु कश्चिदेव लोकः प्रधानो भवति। अन्ये ग्रामाध्यक्षादयस्तदुपसर्जनीभूताः तद्वदित्यर्थः ॥ ४० ॥

बुद्धेः प्रधानत्वे हेतूनाह त्रिभिः सूत्रैः—

अव्यभिचारात् ॥ ४१ ॥

सर्वकरणव्यापकत्वात्[2] फलाव्यभिचाराद्वेत्यर्थः[3] ॥ ४१ ॥

तथाऽशेषसंस्काराधारत्वात् ॥ ४२ ॥

तत्त्वज्ञानेनाहङ्कारमनसोः लयेऽपि, अन्धादीनामपि वा स्मरणदर्शनात, नाहङ्कारादीनां प्रधानत्वम्। अशेषसंस्काराधारतया तु बुद्धेरेव सर्वेभ्यः प्रधानत्वमित्यर्थः ॥ ४२ ॥

---

1 "मनो महान् मतिः ब्रह्मा धीर्बुद्धिः ख्यातिरीश्वरः" इति बुद्धिपर्यायोऽत्र मनश्शब्दः

2 बुद्धिनिष्ठाध्यवसायधर्मस्य सर्वकरणानुस्यूतत्वादित्यर्थः।

3 सर्वकरणव्यापाराणां बुद्धौ प्रकाशे एवावश्यपर्यवसानाद्वेत्यर्थः।

स्मृत्याऽनुमानाच्च ॥ ४३ ॥

स्मृत्या = सर्ववृत्तिभ्यः श्रेष्ठया चिन्ताख्यध्यानरूपवृत्त्या, श्रेष्ठत्वानुमानाच्च, ध्यानाख्या सर्ववृत्तिभ्यः श्रेष्ठा हि चिन्तावृत्तिः। चिन्ता तु बुद्धेरेव हि वृत्तिः ॥ ४३ ॥

नन्वेवं बुद्धिः करणमस्तु, किमन्यैरित्यत आह[1]—

सम्भवेन्न स्वतः ॥ ४४ ॥

चक्षुरादिद्वारतां विनाऽखिलवृत्तिषु बुद्धेः करणत्वं न सम्भवेत्, अन्धादेरपि रूपग्रहापत्तेरित्यर्थः ॥ ४४ ॥

नन्वेवं बुद्धेरेव प्राधान्ये कथमुभयात्मकत्वेन मनसः प्राधान्यमुक्तम् तत्राह—

आपेक्षिको गुणप्रधानभावः क्रियाविशेषात् ॥ ४५ ॥

क्रियाविशेषनिरूपितः गुणप्रधानभावः आपेक्षिकः। तथा च बाह्येन्द्रियक्रियायां मनसः प्राधान्यम्, मनोव्यापारे चाहङ्कारस्य, अहङ्कारव्यापारे च बुद्धेरित्यर्थः ॥ ४५ ॥

अस्य पुरुषस्येयमेव बुद्धिः करणमिति व्यवस्थायां निमित्तमुपपादयति—

तत्कर्मार्जितत्वात्[2] तदर्थमभिचेष्टा लोकवत् ॥ ४६ ॥

तत्पुरुषीयकर्मार्जितत्वाद्बुद्धेस्तदर्थमभिचेष्टा सर्वव्यापारो भवति, यथा लोके क्रयादिकर्मणाऽर्जितः कुठारादिः, तदर्थमेव च तस्य छिदादिव्यापारः, तद्वदित्यर्थः ॥ ४६ ॥

ननु सर्वकरणानामपि कर्मार्जितत्वसाम्यात् कथं बुद्धेरेव प्राधान्यं? तत्राह—

1 अत्र 'ननु चिन्तावृत्तिः पुरुषस्यैवास्तु अत आह' इति भाष्यम्।

2 अत्र—"अनिरुद्धादयः व्याख्यातारः 'बुद्धिप्रतिबिम्बितपुरुषस्यैव कर्म' इति प्रतिपादयन्ति। तदयुक्तम्। प्रतिबिम्बस्यावस्तुत्वेन कर्मासम्भवात्" इति भाष्यकृतः।

समानकर्मयोगे बुद्धेः प्राधान्यं लोकवल्लोकवत् ॥ ४७ ॥

कर्मजन्यत्वसाम्येऽपि बुद्धेरेव प्राधान्यम्। यथा लोके विवाहादि क्रियायोगसाम्येऽपि नायिका तु काचिदेव प्रधाना, प्रधानगुणैः तद्वदित्यर्थः[1]। लोकवदिति वीप्सा पूर्ववत्, अत्र भाष्यकारिका—

"लिङ्गदेहस्य घटकं यत्सप्तदशसङ्ख्यकम्।
प्रधानकार्यं तत्सूक्ष्मं अत्राध्यायेऽनुवर्णितम् ॥" इति ॥ ४७ ॥

इति भावगणेशात्मज-श्रीधरविरचितायां

साङ्ख्यप्रवचनवृत्तौ

प्रधानकार्याध्यायो द्वितीयः समाप्तः ॥



1 अत्र 'लोकवत्' इत्यस्य—यथा राजार्थकत्वाविशेषेऽपि ग्रामाध्यक्षादिषु मध्ये मन्त्रिण एव प्राधान्यं तथा—इति व्याख्यातं भाष्ये।

# अथ वैराग्याध्यायः

## तृतीयः

इतः परं-प्रधानस्य स्थूलकार्यं, महाभूतानि, शरीरद्वयं, ततश्च ज्ञान-साधनानुष्ठानहेत्वपरवैराग्यार्थं विविधकर्मगतीः अखिलज्ञानसाधनानि च वक्तुं तृतीयाध्यायारम्भः ॥

अविशेषात्[1] विशेषारम्भः ॥ १ ॥

शान्तघोरमूढत्वादिविशेषवतां स्थूलभूतानामारम्भ इत्यर्थः ॥ १ ॥

तदेवं त्रयोविंशतितत्त्वोत्पत्तिमुक्त्वा शरीरद्वयोत्पत्तिमाह—

तस्माच्छरीरस्य ॥ २ ॥

तस्मात् त्रयोविंशतितत्त्वात् स्थूलसूक्ष्मद्वयशरीरस्यारम्भः इत्यर्थः ॥ २ ।

त्रयोविंशतितत्त्वे संसारान्यथानुपपत्तिं प्रमाणयति—

तद्बीजात् संसृतिः ॥ ३ ॥

त्रयोविंशतितत्त्वमयात् शरीरबीजात् पुरुषस्य संसृतिः-गतागते भवतः। विभोः स्वतो गत्यभावादित्यर्थः[2] ॥ ३ ॥

संसृतेरवधिमप्याह—

आविवेकाच्च प्रवर्तनमविशेषाणाम् ॥ ४ ॥

ईश्वरानीश्वरत्वादिविशेषरहितानां पुंसां विवेकोत्पत्तिपर्यन्तमेव प्रवर्तनं संसृतिरित्यर्थः ॥ ४ ॥

---

1 शान्तत्वादिविशेषरहितात् पञ्चतन्मात्राख्यभूतसूक्ष्मादित्यर्थः ।

2 यदाह मनुः—"मानसं मनसैवायं उपभुङ्क्ते शुभाशुभम् ।
वाचा तु वाचिकं कर्म कायेनैव तु कायिकम् ॥" इति ।

अत्र हेतुमाह—

उपभोगादितरस्य ॥ ५ ॥

इतरस्याविवेकिनः एव कर्मफलभोगावश्यम्भावादित्यर्थः ॥ ५ ॥

देहादेहान्तरसंसरणकाले सूक्ष्मदेहसत्वेऽपि सुखदुःखादिद्वन्द्वभोगो नास्तीत्याह—

सम्प्रति परिमुक्तो [1]द्वाभ्याम् ॥ ६ ॥

सम्प्रति संसरणकाले। स्पष्टमन्यत् ॥ ६ ॥

अथ शरीरद्वयं विशिष्य वक्तुमुपक्रमते—

मातापितृजं स्थूलं प्रायशः इतरन्न तथा ॥ ७ ॥

अयेनिजस्यापि स्थूलशरीरस्य सत्वात् प्रायश इति। बाहुल्येन स्थूलशरीरम्। मातापितृजं स्थूलम्। सूक्ष्मं न तथा। तस्य सर्गादुत्पन्नत्वादित्यर्थः। तदुक्तं कारिकायाम्—

"पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्यन्तम्।
संसरति निरुपभोगं भावै[2]रधिवासितं लिङ्गम्" ॥ इति ॥ ७ ॥

स्थूलसूक्ष्मशरीरयोर्मध्ये किमुपाधिकः पुरुषस्य द्वन्द्वयोगः तदवधारयति—

पूर्वोत्पत्तेस्तत्कार्यत्वं भोगादेकस्य नेतरस्य ॥ ८ ॥

पूर्वं सर्गादावुत्पत्तिर्यस्य लिङ्गशरीरस्य तस्यैव तत्कार्यत्वं सुखदुःखकार्यत्वं यतः तस्यैव सुखदुःखभोगाद्यात्मके स्थूले दुःखाद्यदर्शनादित्यर्थः ॥ ८ ॥

सूक्ष्मशरीरस्य स्वरूपमाह—

---

1 द्वन्द्वैरिति यावत्।
2 भावैः धर्माधर्मवासनादिभिः।

सप्तदशैकं लिङ्गम् ॥ ९ ॥

सूक्ष्मं द्विविधमाधाराधेयभेदात्। तत्र एकादशेन्द्रियाणि पञ्चतन्मात्राणि बुद्धिश्चेति सप्तदशकं लिङ्गशरीरम्। एकत्वं च राशिवद्बोध्यम्[1] ॥ ९ ॥

ननु चेदेकलिङ्गं कथं तर्हि पुरुषभेदेन विचित्रभोगाः स्युः तत्राह—

व्यक्तिभेदः कर्मविशेषात् ॥ १० ॥

यद्यप्यादौ समष्टिरूपेणैकमेव लिङ्गमुत्पद्यते, तथापि जीवानां कर्मभेदात् अंशरूपेणाभिव्यक्तितः स्वरूपभेदो भवति ॥ १० ॥

भोगायतनतया लिङ्गस्यैव शरीरत्वे स्थूले तद्व्यवहारमुपपादयति—

तदधिष्ठानाश्रये देहे तद्वादात्तद्वादः ॥ ११ ॥

तस्य लिङ्गस्याधिष्ठानं वक्ष्यमाणं सूक्ष्मभूतपञ्चकम्। तदाश्रये स्थूले शरीरत्ववादः। सूक्ष्मे तद्वादात्। अयमर्थः—मुख्यं सूक्ष्ममेव शरीरम्। साक्षाद्भोगायतनत्वात्। तत्सम्बन्धात् तदधिष्ठानं सूक्ष्मम्। तत्सम्बन्धाच्च स्थूलं शरीरमिति ॥ ११ ॥

ननु स्थूलातिरिक्ते लिङ्गाधिष्ठाने किं प्रमाणं तत्राह—

न स्वातन्त्र्यात् तदृते छायावच्चित्रवच्च ॥ १२ ॥

यथा छाया चित्रं वा निराश्रयं न तिष्ठति, तद्वत् तदृते सूक्ष्माधारं विना तल्लिङ्गशरीरं स्वातन्त्र्यान्न तिष्ठति। तथाच स्थूलपातानन्तरमपि लिङ्गावस्थानार्थं तदिष्यत इति भावः[2] ॥ १२ ॥

ननु मूर्तद्रव्यतया वाय्वादेरिवाकाशमेव तदधारोऽस्तु तत्राह—

---

1 यथा महाभारते—"कर्मात्मा पुरुषो योऽसौ बन्धमोक्षैः प्रयुज्यते। सः सप्तदशकेनापि राशिना युज्यते च सः ॥" इति ॥

2 यथोक्तम्—"चित्रं यथाश्रयमृते स्थाण्वादिभ्यो विना छाया। तद्वद्विना विशेषैः न तिष्ठति निराश्रयं लिङ्गम्"॥ इति ॥

मूर्तत्वेऽपि न सङ्घातयोगात् तरणिवत् ॥ १३॥

यथा प्रकाशात्मकानि सूर्यादीनि पार्थिवाद्याश्रयणेनैव तिष्ठन्ति, तद्वल्लिङ्गस्यापि प्रकाशमयत्वेऽपि पृथिव्यादिसङ्घातयोगान्मूर्तत्वेऽपि नाकाशाधारकत्वमित्यर्थः ॥ १३ ॥

लिङ्गस्य परिमाणमवधारयति—

अणुपरिमाणं तत् कृतिश्रुतेः ॥ १४ ॥

तत् परिच्छिन्नपरिमाणं, क्रियाश्रुतेः[1] इत्यर्थः। गतिश्रुतेरिति पाठस्तु समीचीनः ॥ १४ ॥

किञ्च—

तदन्नमयत्वश्रुतेश्च ॥ १५ ॥

तस्य लिङ्गस्यैकदेशे मनसि अन्नमयत्वं श्रूयते, अतो न विभु इत्यर्थः। "अन्नमयं हि सौम्य मनः" इति श्रुतेः ॥ १५ ॥

ननु अचेतनलिङ्गानां संसृतिः किमर्थं तत्राह—

पुरुषार्थं संसृतिः लिङ्गानां[2] सूपकारवद्राज्ञः ॥ १६ ॥

यद्वदभोक्तुरापि सूपकारस्य राजार्थं प्रवृत्तिः तद्वदपीत्यर्थः ॥ १६ ॥

अथ स्थूलं विचारयति—

पाञ्चभौतिको देहः ॥ १७ ॥

मिलितपञ्चभूतानां परिणाम इत्यर्थः ॥ १७ ॥

आकाशानारम्भकत्ववादिनां मतमाह—

1 'विज्ञानं यज्ञं तनुते। कर्माणि तनुतेऽपि च' इति श्रुतिः

2 लिङ्गशरीराणाम्।

चातुर्भौतिकमित्येके ॥ १८ ॥

आकाशस्य अनारम्भकत्वमभिप्रेत्यैवमुक्तम् ॥ १८ ॥

मतान्तरमाह—

ऐकभौतिकमित्यपरे[1] ॥ १९ ॥

सर्वलोकेषु पृथ्व्याख्यैकभूतात्मकमेव शरीरम्, अन्यानि चोपष्टम्भकमात्राणीत्यपरे। अपरे वयमित्यर्थः। तथाच वक्ष्यति–' न पाञ्चभौतिकं शरीरम्। बहूनामुपादानायोगात्'। इति ॥ १९ ॥

देहस्य भौतिकत्वेन यत्सिद्ध्यति तदाह—

न सांसिद्धिकं चैतन्यं प्रत्येकादृष्टेः ॥ २० ॥

न देहस्य स्वाभाविकं चैतन्यं, प्रत्येकं भूतेषु चैतन्यादृष्टेरित्यर्थः ॥ २० ॥

अपि च—

प्रपञ्चमरणाद्यभावश्च ॥ २१ ॥

स्वाभाविके चैतन्ये सर्वप्रपञ्चस्य मरणसुषुप्त्याद्यभावश्च स्यादित्यर्थः। "विपर्यासे विस्तरे च प्रपञ्चः" इत्यमरः ॥ २१ ॥

प्रत्येकादृष्टेरिति यदुक्तं तत्राशङ्क्य समाधत्ते—

मदशक्तिवच्चेत् प्रत्येकपरिदृष्टे सांहत्ये तदुद्भवः ॥ २२ ॥

ननु– प्रत्येकद्रव्यव्यावृत्तिनि मदशक्तियोगे यथा भवति तद्वच्चैतन्यमपि स्यादिति चेन्न। शास्त्रादिना प्रत्येकसिद्धे मादकत्वे सांहत्ये समुदाये तदुद्भवः सम्भवेत्। अयं भावः—तत्र शास्त्रादिना सूक्ष्ममादकत्वं सिद्धं योगे तदुद्भवः कल्प्यते। प्रकृते न केनापि प्रमाणेन पृथक् भूतेषु सूक्ष्मं चैतन्यं सिद्धम् ॥२२॥

अनेकेषु चैतन्यकल्पने गौरवं चेति लिङ्गात् यः पुरुषार्थो येन व्यापारेण सिद्ध्यति तदाह सूत्राभ्याम्—

---

1 एकैकभौतिकमित्याप्यर्थः।

ज्ञानान्मुक्तिः[1] ॥ २३ ॥

बन्धो[2] विपर्ययात् ॥ २४ ॥

ज्ञानविपर्ययाभ्यां मुक्तिबन्धावुक्तौ ॥ २३–२४ ॥

तत्रादौ ज्ञानान्मुक्तिं विचारयति—

नियतकारणत्वान्न समुच्चयविकल्पौ ॥ २५ ॥

अविवेकनिवृत्तौ ज्ञानस्य यतो लोकसिद्धं नियतकारणत्वमतो ज्ञानकर्मणोः न विकल्पः समुच्चयोऽपीत्यर्थः। तथा च श्रुतिः—"तमेव विदित्वाऽतिमृत्युमेति" इति, "न कर्मणा न प्रजया धनेन" इत्यादिश्च ॥ २५ ॥

सदृष्टान्तं समुच्चयविकल्पाभावमाह—

स्वप्नजागराभ्यामिव मायिकामायिकाभ्यां
नोभयोर्मुक्तिः पुरुषस्य ॥ २६ ॥

यथा मायिकामायिकाभ्यां पुरुषस्यैकोऽर्थो न सम्भवति तथैवमुभयोरपि ज्ञानकर्मणोर्मुक्तिः। उभयोरिति निमित्तसप्तमी। तथा चोभयनिमित्तकेत्यर्थः ॥ २६ ॥

ननु ज्ञानविशेषस्येव उपासनाविशेषस्याप्यमायिकत्वादुपासनाज्ञानयोर्विकल्पसमुच्चयौ स्याताम् तत्राह—

इतरस्यापि नात्यन्तिकम् ॥ २७ ॥

इतरस्योपासनस्य नात्यन्तिकं अमायिकत्वम् ॥ २७ ॥

किन्तु—

सङ्कल्पितेऽप्येवम् ॥ २८ ॥

सङ्कल्पिते उपास्यात्मन्यध्यस्तपदार्थजाते एवमपि मायिकत्वमपीत्यर्थः। ॥ २८ ॥

---

1 ज्ञानम् विवेकसाक्षात्कारः।

2 बन्धः सुखदुःखात्मकः।

तर्हि उपासनस्य किं फलमित्याकांक्षायामाह—

भावनोपचयात् शुद्धस्य सर्वं प्रकृतिवत् ॥ २९ ॥

प्रकृतेर्यथा सृष्टिसंहारैश्वर्यं तद्वत् उपासनोपचितपुण्यवत् क्षीणपापस्य प्रकृतिप्रेरकत्वेन सर्वमैश्वर्यं भवतीत्यर्थः ॥ २९ ॥

ज्ञानमेव मोक्षसाधनमिति व्यवस्थाप्य ज्ञानसाधनान्याह—

रागोपहतिः ध्यानम्[1] ॥ ३० ॥

ज्ञानप्रतिबन्धकविषयोपरागस्योपहतिः यस्मात् तत् ध्यानमित्यर्थः ॥३०॥

ज्ञानहेतुध्याननिष्पत्तेः लक्षणमाह—

वृत्तिनिरोधात्[2] तत्सिद्धिः ॥ ३१ ॥

ध्येयातिरिक्तवृत्तिनिरोधरूपसम्प्रज्ञातयोगात ज्ञानाख्यफलोपहित ध्याननिष्पत्तिः भवतीत्यर्थः ॥ ३१ ॥

ध्याननिष्पत्तिहेतुयोगस्यापि साधनान्याह—

धारणासनस्वकर्मणा तत्सिद्धिः ॥ ३२ ॥

धारणादित्रयं वक्ष्यमाणं तेन योगनिष्पत्तिर्भवति ॥ ३२ ॥

धारणादित्रयं लक्षयति सूत्रत्रयेण—

निरोधः छर्दिविधारणाभ्याम् ॥ ३३ ॥

छर्दिविधारणे रेचककुम्भकौ च पूरकस्याप्युपलक्षकौ। तथाच तैः प्राणनिरोधो धारणा प्राणायाम इत्यर्थः। पातञ्जलोक्ता तु धारणा समाधिवत् ध्यानशब्देनैव सङ्गृहीतेति न न्यूनता ॥ ३३ ॥

1 इदं तु साधनदशायाम्। स्वरूपदृष्ट्या तु—ध्यानं निर्विषयं मनः इति बोध्यम्.

2 योगः चित्तवृत्तिनिरोधः। विषयेभ्यो निवर्त्य अभिप्रेतार्थे मनसः अवस्थापनमिति याज्ञवल्क्यः ॥

आसनं लक्षयति—

स्थिरसुखमासनम् ॥ ३४ ॥

स्थिरं सत् सुखमनुद्वेगकरं स्वस्तिकादीत्यर्थः ॥ ३४ ॥

स्वकर्म लक्षयति—

स्वकर्म स्वाश्रमविहितकर्मानुष्ठानम् ॥ ३५ ॥

स्पष्टम् ॥ ३५ ॥

मुख्याधिकारिणां प्राणायामादिबहिरङ्गनिरपेक्षं योगसाधनमाह—

वैराग्यात् अभ्यासाच्च ॥ ३६ ॥

तथाच योगसूत्रम् 'अभ्यासवैराग्याभ्यां तन्निरोधः' इति[1] ॥ ३६ ॥

तदेवं बन्धान्मोक्ष उक्तः। अतः परं विपर्ययात् बन्धो व्याख्यास्यते। तत्रादौ विपर्ययस्वरूपमाह—

विपर्ययभेदाः पञ्च ॥ ३७ ॥

अविद्यास्मितारागद्वेषाभिनिवेशाः योगोक्ताः पञ्च बन्धहेतुविपर्ययभेदा इत्यर्थः ॥ ३७ ॥

विपर्ययहेत्वशक्तेरपि स्वरूपमाह—

अशक्तिरष्टाविंशतिधा तु ॥ ३८ ॥

एकादशेन्द्रियाणां स्वस्वक्रियायामसामर्थ्यम्, एकादशेन्द्रियवधाः नवतुष्टिवधाः अष्ट सिद्धिविपर्यगाः इति सप्तदश बुद्धिवधाः। एवं मिलित्वाऽष्टाविंशतिधाऽशक्तय इत्यर्थः। तुशब्द एषां विशेषप्रसिद्धिज्ञापनार्थः ॥ ३८ ॥

---

1 यथोक्तम् "आसनस्थानविधयः न योगस्य प्रसाधकाः। ध्यानाभ्यासाच्च वैराग्यात् सिद्धाश्च मुनयोऽभवन्" इति।

अशक्तिप्रतियोगिसन्तुष्टिसिद्धी आह सूत्राभ्याम्—

तुष्टिर्नवधा ॥ ३९ ॥

सिद्धिरष्टधा ॥ ४० ॥

एताः स्वयमेव वक्ष्यति ॥ ३९-४० ॥

विपर्ययाशक्तितुष्टिसिद्धीनां विशेषजिज्ञासायां क्रमेण सूत्रचतुष्टयं प्रवर्तते ।

अवान्तरभेदाः पूर्ववत् ॥ ४१ ॥

ये विपर्ययावान्तरभेदाः अविद्यादयः तेषां चावान्तरद्वाषष्टिभेदाः ते पूर्ववत् पूर्वाचार्यैः यथोक्ताः तद्वत् इत्यर्थः । अविद्यादयः तदवान्तरभेदाश्च यथा-प्रकृत्यादावात्माऽविवेकोऽविद्या, तदतिरिक्त आत्मा नास्तीति विशेषनिर्धारणमस्मिता; तेऽष्टप्रकृतिरूपविषयभेदादष्टविधाः । दिव्यादिव्यभेदेन दश-शब्दादिविषयको दशविधो रागः । येऽष्टादश चाविद्यारागविषयास्तद्विघातकेषु द्वेषोऽष्टादशविधः । तमोनाशानुसन्धाने चोभयाख्यानिवेशोऽप्यष्टादशविध इति द्वाषष्टिः । अविद्यादीनां तम आदिसंज्ञा च तत्तत्संज्ञकनरकहेतुत्वात् ॥ ४१ ॥

एवमितरस्याः ॥ ४२ ॥

अशक्तेरपि अष्टाविंशतिधात्वं पूर्ववदेव[1] । तच्च व्याख्यातम् ॥ ४२ ॥

आध्यात्मिकादिभेदात् नवधा तुष्टिः ॥ ४३ ॥

प्रकृतिरेव सर्वं करोति नाहमिति भावनाया यस्तोषः सा प्रकृत्याख्या । प्रव्रज्योपादानेन चासौ उपादानाख्या । बहुकालसमाध्यनुष्ठानेन या कालाख्या समाधिनिष्ठाजन्या भाग्याख्या । एताश्चतस्रः आत्मानं सङ्घातमधिकृत्य जातत्वादाध्यात्मिकाः । अम्भः सलिलं मेघो वृष्टिः इत्येतासां संज्ञा । पञ्च-विषयविरागजाः पञ्च । एवं नवधा तुष्टिरित्यर्थः ॥ ४३ ॥

ऊहादिभिः सिद्धिरष्टधा ॥ ४४ ॥

प्राग्भवीयसंस्कारवशात् विवेकानुकूलो विचारः ऊहः; यदृच्छाश्रुत-शास्त्रादिः शब्दः; गुरुशिष्यभावेन श्रवणमध्ययनम्; त्रिविधदुःखानां त्रयो

विघाताः, सत्सङ्गः; विवेकिसंतोषजनकं ज्ञानं (दानं) चेति गौणमुख्यभावेनाष्टसिद्धयः इत्यर्थः ॥ ४४ ॥

नन्वणिमाद्याः कथं सिद्धित्वेन नोक्ताः तत्राह—

नेतरादितरहानेन विना ॥ ४५ ॥

इतरासां शक्तिविपर्ययतुष्टीनां हानेन विना इतरात् सिद्धिरूपात पुरुषार्थः कृतकृत्यता न। "सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः" इति कारिका। इतरत् अणिमादिभेदादतो न तत्सिद्धेरष्टविधत्वम्। इतरहानेन विना अविवेकहानाभावादित्यर्थः। तथा चोहादिसिद्धीनां अविवेकहानकार्यकारणतया सिद्धित्वं युक्तम, न तु संसारविरोध्यणिमादिसिद्धयाभासानामिति ॥ ४५ ॥

इतः परं व्यष्टिसृष्टिः[1] विस्तरतः प्रतिपाद्यते—

दैवादिप्रभेदा ॥ ४६ ॥

ब्राह्मप्राजापत्यैन्द्रपैत्रगान्धर्वयाक्षराक्षसपैशाचाः इत्यष्टविधो दैवः। पशुमृगपक्षिसरीसृपस्थावरा इति पञ्चविधः तैर्यग्योन्यः। मानुष्यस्त्वेक इति प्रभेदभिन्ना व्यष्टिसृष्टिरिति शेषः ॥ ४६ ॥

एतत्सृष्टेरपि पुरुषार्थत्वमाह—

आब्रह्मस्तम्बपर्यन्तं तत्कृते सृष्टिः आविवेकात ॥ ४७ ॥

विवेकख्यातिपर्यन्तं ब्रह्मादिस्थावरान्ता सृष्टिः पुरुषार्था भवति ॥ ४७ ॥

ऊर्ध्वाधोभूलोकेषु सृष्टेः सत्त्वाद्याधिक्यमाह सूत्रत्रयेण—

ऊर्ध्वं[2] सत्त्वविशाला ॥ ४८ ॥
तमोविशाला मूलतः[3] ॥ ४९ ॥
मध्ये[4] रजोविशाला ॥ ५० ॥

---

1 पूर्वं "व्यक्तिभेदः कर्मविशेषात्" इत्युक्तम्।
2 भूर्लोकादुपरि ऊर्ध्वलोके सत्त्वप्रधाने।
3 भूर्लोकादधः तमःप्रधाने।
4 भूर्लोके मध्यलोके रजःप्रधाने।

ननु एकस्या एव प्रकृतेः कथं सत्त्वाथंदिविशालादिविधसृष्टयः, तत्राह—

कर्मवैचित्र्यात् प्रधानचेष्टा गर्भदासवत् ॥ ५१ ॥

यथा गर्भदासस्य दास्यवासनापाटवेन नानाविधाः सेवादिचेष्टा भवन्ति। तद्वद्विचित्रकर्मसहकारेण प्रधानतोऽपि विचित्रपरिणामरूपाः॥ ५१ ॥

ननु सत्त्वविशालसृष्ट्यैव पुरुषः कृतार्थो भवतु, किं मोक्षेणेत्यत आह-

आवृत्तिस्तत्राप्युत्तरोत्तरयोनियोगाद्धेयः ॥ ५२ ॥

तत्रापि सत्त्वविशालायामपि सृष्टौ अप्राप्तविवेकस्यावृत्तिः उत्तरोत्तरयोनियोगोऽस्ति। अतः उत्तरोत्तयोनिषु जन्मरूपयोगसत्वात् सत्त्वविशालप्राप्तिरूपपुरुषार्थो हेयः। सत्त्वविशाललोकप्राप्तावप्यावृत्तिरस्ति। अतः उत्तरोत्तरयोनिसम्बन्धात् अधोयोनिसम्बन्धात् स लोको हेयः इत्यर्थः॥ ५२ ॥

किञ्च—

समानं जरामरणादिजं दुःखम् ॥ ५३ ॥

सर्वलोके जरामरणादिदुःखसाम्यादपि स हेयः इत्यर्थः ॥ ५३ ॥

किं बहुना कारणलयादपि न कृतकृत्यतेत्याह—

न कारणलयात् कृतकृत्यता मग्नवदुत्थानात् ॥ ५४ ॥

वैराग्यात् प्रकृतिलय इति वचनात् महदादिवैराग्ये सति प्रकृत्युपासनया प्रकृतौ लयादपि न कृतकृत्यता। यथा जलमग्नः पुनरुत्तिष्ठति एवं रागवासनया तस्यापि पुनरुत्थानसम्भवादित्यर्थः॥ ५४ ॥

ननु स्वतन्त्रा प्रकृतिः स्वलीनं स्वोपासकं कथमुत्थापयति तत्राह—

अकार्यत्वेऽपि तद्योगः पारवश्यात् ॥ ५५ ॥

प्रकृतेरकार्यत्वेऽपि अप्रेर्यत्वेऽपि तल्लीनस्य तद्योगः बन्धहेतुः प्रकृतियोगः। कुतः ? पारवश्यात्। अविवेकाधीनत्वादित्यर्थः। इदमुक्तम्—'तद्योगेऽप्यविवेकान्न समानत्वं' इति सूत्रे कारणे लीनस्याकार्यत्वेपि तद्योगः उत्तरोत्तर योनियोगः॥ ५५ ॥

प्रकृतिलीनोत्थाने कारणमाह—

स हि सर्ववित् सर्वकर्ता ॥ ५६ ॥

सः प्रकृतिलीन ईश्वरः सर्ववित् सर्वकर्ता आदिपुरुषो भवति। प्रकृतिलयेन तस्यैव तत्पदौचित्यादिति भावः ॥ ५६ ॥

नन्वेवं ईश्वराङ्गीकारे तन्निषेधानुपपत्तिः तत्राह—

ईदृशेश्वरसिद्धिः[1] सिद्धा ॥ ५७ ॥

स्वमतेऽपीति शेषः। नित्येश्वरे[2] एव विवादादिति भावः ॥ ५७ ॥

सङ्क्षेपोक्तं सृष्टेः प्रयोजनं विस्तरतः प्रतिपादयति—

प्रधानसृष्टिः परार्थं[3] स्वतोऽप्यभोक्तृत्वात् ॥ ५८ ॥
उष्ट्रकुङ्कुमवहनवत् ॥ ५९ ॥

यथा उष्ट्रस्य कुङ्कुमवहनं न स्वार्थमपि तु परार्थमभोक्तृत्वात्, एवं पुरुषार्था अपि प्रधानसृष्टिः स्वतो 'विमुक्तमोक्षार्थं वा प्रधानस्यैवे'ति सूत्रे कृतभोगापवर्गात् पुरुषात् आत्मविमोक्षरूपपुरुषार्थस्य स्वार्थतोक्तेरिति भावः। ईश्वरसिद्धिरीदृशी यत्सर्ववित्त्वं सर्वकर्तृत्वं च कारणस्य सिद्ध्यति ॥ ५८–५९ ॥

ननु रथादिवदचेतनस्य प्रधानस्य परप्रयत्नसापेक्षैव प्रवृत्तिः स्यात् तत्राह—

अचेतनत्वेऽपि क्षीरवच्चेष्टितं प्रधानस्य ॥ ६० ॥

यथा अचेतनमपि क्षीरं प्रयत्ननिरपेक्षं दधिरूपेण परिणमति तद्वत् प्रकृतिरपि महदादिरूपेण ॥ ६० ॥

---

1 "यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः" इत्युक्तेश्वरसिद्धिः।
2 "ईशानो भूतभव्यस्ये"त्युक्ते इत्यर्थः।
3 अन्यस्य भोगापवर्गार्थम्।

अत्र सदृष्टान्तं हेतुमाह—

कर्मवत् दृष्टेर्वा कालादेः ॥ ६१ ॥

अदृष्टं कालावस्थातः स्वत एव फलतीति अदृष्टानुसारित्वात्, तद्वत् प्रकृतिरपि ॥ ६१ ॥

ननु अचेतनस्य प्रधानस्य प्रवृत्तिहेत्विष्टसाधनताज्ञानाभावात् प्रवृत्तिः कथमित्यत्राह—

स्वभावाच्चेष्टितमनभिसन्धानात् भृत्यवत् ॥ ६२ ॥

यथा भृत्यस्य स्वभावात् संस्कारादेव स्वामिसेवा भवति न स्वभोगापेक्षया एवं प्रधानस्यापि संस्कारादेव ॥ ६२ ॥

कर्माकृष्टेर्वाऽनादितः ॥ ६३ ॥

वाशब्दोऽत्र समुच्चये कर्मानाद्यतः कर्माकर्षणादपि[1] प्रधानस्यावश्यकी व्यवस्थिता च प्रवृत्तिरित्यर्थः ॥ ६३ ॥

पुरुषार्थप्राप्तौ प्रधाननिवृत्त्या मोक्षः सिद्ध्यतीत्याह—

विविक्तबोधात् सृष्टिनिवृत्तिः प्रधानस्य सूदवत् पाके ॥ ६४ ॥

विवेकख्यात्या परवैराग्येण पुरुषार्थसमाप्तौ प्रधानसृष्टिः निवर्तते। यथा पाके निष्पन्ने पाचकव्यापारो निवर्तते तद्वत् ॥ ६४ ॥

नन्वेवं एकस्य ज्ञाने प्रकृतिप्रवृत्तिनिवृत्तौ सर्वमुक्तिः स्यात् तत्राह—

इतर इतरवत् तद्दोषात् ॥ ६५ ॥

तद्दोषादविवेकरूपदोषादितरो विवेकरहितवत् बद्धवदेव। तथाच या निवृत्तिरुक्ता सा ज्ञानिनं प्रत्येवेति भावः ॥ ६५ ॥

सृष्टिनिवृत्तेः फलमाह—

1 कर्मणः आकर्षणादित्यर्थः ।

द्वयोरेकतरस्य वौदासीन्यमपवर्गः ॥ ६६ ॥

द्वयोः प्रधानपुरुषयोर्वौदासीन्यं परस्परवियोगः सोऽपवर्गः कैवल्यम्। न तयोः द्वयोः अहं मुक्तः स्यामिति पुरुषार्थतादर्शनात् पुरुषस्यैव वेत्यर्थः ॥ ६६ ॥

विवेकिने निवृत्तावपि प्रकृतिः अविवेकिनं प्रति प्रवर्तते इत्यत्र दृष्टान्तमाह—

अन्यसृष्ट्युपरागेऽपि न विरज्य(म)ते प्रबुद्धरज्जुतत्त्वस्येवोरगः॥ ६७ ॥

अन्यस्य पुरुषस्य सृष्ट्युपरागे विविक्तबोधात् प्रधानसृष्टिः न विरमति। न निवर्तत इत्यर्थः। कर्म निमित्तकारणं तस्य योगात सम्भवाच्च प्रधानसृष्टिर्न विरमति। यथा ज्ञानिनं प्रति निवृत्तेऽपि अप्रबुद्धरज्जुतत्त्वस्य भयादिसृष्ट्युपरागान्न विरतो भवति, प्रकृतिरपि तद्वदित्यर्थः। विरज्यत इति पाठे विरागः पराङ्मुखता ॥ ६७ ॥

न केवलं दृष्टान्तबलेनायमर्थः सिद्ध्यति, किन्तु—

कर्मनिमित्तयोगाच्च ॥ ६८ ॥

सृष्टौ निमित्तं यत्कर्म तत्सम्बन्धादपि अन्यपुरुषार्थं सृजतीत्यर्थः ॥ ६८ ॥

ननु सर्वेषां रागाद्यभावेन पुरुषाणां निरपेक्षत्वात् कर्मणामन्यधर्मत्वाच्च कथं व्यवस्थेत्यत आह—

नैरपेक्ष्येऽपि प्रकृत्युपकारेऽविवेको निमित्तम् ॥ ६९ ॥

प्रकृतिप्रवृत्तावविवेक एव निमित्तमित्यर्थः। तथाच प्रकृतिः बुद्धिरूपा सतीयं पुरुषं विविच्य न दर्शनवती तं प्रति प्रवर्तत इति व्यवस्थेति भावः। पुरुषाणां नैरपेक्ष्येऽपि अयमविवेकः प्रकृत्युपकारे प्रवृत्तौ निमित्तकारणमित्यर्थः ॥ ६९ ॥

ननु प्रकृतिस्वाभाव्यात् विवेकेऽपि कथं निवृत्तिस्तत्राह—

नर्तकीवत् प्रवृत्तस्यापि निवृत्तिः चारितार्थ्यात् ॥ ७० ॥

प्रधानस्य सामान्यतः न प्रवृत्तिस्वाभाव्यम् किन्तु पुरुषार्थप्रयुक्तम्। अतो यथा धनार्थं नर्तने प्रवृत्ताऽपि नर्तकी तल्लाभे मध्य एव निवर्तते, तथा पुरुषार्थसमाप्तौ प्रकृतिरपि ॥ ७० ॥

निवृत्तौ हेत्वन्तरमाह—

दोषबोधेऽपि नोपसर्पणं प्रधानस्य कुलवधूवत् ॥ ७१ ॥

यथा स्वामिना दोषदृष्टौ ज्ञानकुलवधूः तं प्रति नोपसर्पति तद्वत् प्रकृतिरपि। तदुक्तं नारदीये—

"सविकाराऽपि मौढ्येन चिरं भुक्ता गुणात्मना।
प्रकृतिर्ज्ञातदोषेयं लज्जयेव निवर्तते" ॥ इति ॥ ७१ ॥

ननु पुरुषार्थं प्रकृतिप्रवृत्त्या पुरुषस्य बन्धमोक्षरूपः परिणामः स्यादिति अत आह—

नैकान्ततो बन्धमोक्षौ पुरुषस्य अविवेकादृते ॥ ७२ ॥

अविवेकं विना पुरुषस्यैकान्ततः तात्त्विकबन्धमोक्षौ न, किन्तु वक्ष्यमाणप्रकारादित्यर्थः ॥ ७२ ॥

तात्त्विकौ तु प्रकृतेरेवेत्याह—

प्रकृतेराञ्जस्यात् ससङ्गत्वात् पशुवत् ॥ ७३ ॥

प्रकृतेरेवाञ्जस्यात् तत्त्वतो बन्धमोक्षौ ससङ्गत्वाद्धर्माधर्मादिलिप्तत्वात, यथा रज्जुसङ्गित्वात्पशोः साक्षाद्बन्धः आत्मनः तदद्वारा तद्वदित्यर्थः ॥ ७३ ॥

बुद्धेर्ये भावाष्टकरूपा गुणाः तत्र कैर्बन्धः? कैर्मोक्षः? इत्याकांक्षायामाह—

रूपैः सप्तभिरात्मानं बध्नाति प्रधानं कोशकार-
वद्विमोचयत्येकरूपेण ॥ ७४ ॥

धर्मवैराग्यैश्वर्यज्ञानानि तद्विपर्ययाश्च भावाष्टकम्। तत्र ज्ञानातिरिक्तैः सप्तभिः बध्नाति, ज्ञानेन विमोचयति। बन्धकत्वे दृष्टान्तः—यथा कोशकार क्रिमिविशेषः आत्मनिर्मितेनैव कोशेनात्मानं बध्नाति तद्वदित्यर्थः ॥ ७४ ॥

नन्वविवेकस्य बन्धमोक्षत्वं क्वापि न दृष्टम्, तत्कथमविवेकाद्दते इति, तत्राह—

निमित्तत्वमविवेकस्य न दृष्टहानिः ॥ ७५ ॥

अविवेकस्य पुरुषे बन्धमोक्षहेतुत्वमेव पूर्वमुक्तम्,[1] न त्वविवेक एव ताविति। नातो दृष्टहानिरित्यर्थः ॥ ७५ ॥

इदानीं विवेकनिष्पत्त्युपायेषु सारभूतमभ्यासमाह—

तत्त्वाभ्यासान्नेति नेतीति त्यागात् विवेकसिद्धिः ॥ ७६ ॥

प्रकृतिपर्यन्तेषु जडेषु[2] नेति नेतीत्यभिममानत्यागरूपात् तत्त्वाभ्यासात विवेकनिष्पत्तिर्भवति। इतरत्सर्वमभ्यासस्याङ्गमात्रमित्यर्थः, तथाच श्रुतिः— "अथात आदेशो नेति नेती "ति ॥ ७६ ॥

विवेकसिद्धौ विशेषमाह—

अधिकारिप्रभेदान्न नियमः ॥ ७७ ॥

मन्दाद्यधिकारिभेदत्त्वात् क्रियमाणोऽप्यभ्यासोऽस्मिन्नेव जन्मनि निष्पन्नो भवति इति नियमो नास्तीत्यर्थः ॥ ७७ ॥

ननु विवेकनिष्पत्तिक्षण एव मोक्षः अथवा विलम्बोऽप्यस्तीति तत्राह—

बाधितानुवृत्त्या मध्यविवेकतोऽप्युपभोगः ॥ ७८ ॥

सप्तम्यर्थे तसिल्। मध्यविवेकतः मध्यविवेकावस्थे पुरुषे सति बाधितानामपि दुःखादीनां प्रारब्धवशादनुवृत्त्या भोगो भवत्येवेत्यर्थः विवेकनिष्ठातो पुनरुत्थानादसम्प्रज्ञातजननात्तदुत्तरं योगो नास्तीति प्रतिपादयितुं मध्य विवेकतः इत्युक्तम् ॥ ७८ ॥

---

1 प्रथमध्याये ७७-७७ सूत्रेषु।

2 "अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपनम। चर्मावनध्दं दुर्गन्धि पूर्णं मूत्रपुरीषयोः। जराशोकसमाविष्टं रोगायतनमातुरम्। रजस्वलमनित्यं च भूतावासमिमं विदुः। इत्युक्तेषु इत्यर्थः ॥

जीवन्मुक्तश्च ॥ ७९ ॥

जीवन्मुक्तोऽपि मध्यविवेककाल एव भवतीत्यर्थः ॥ ७९ ॥

जीवन्मुक्ते प्रमाणमाह—

उपदेश्योपदेष्टृत्वात्तत्सिद्धिः ॥ ८० ॥

विवेकविषये शास्त्रसिद्धगुरुशिष्यभावप्रमाणात् तत्सिद्धिरित्यर्थः। तस्यैव[1] उपदेष्टृत्वसम्भवादिति ॥ ८० ॥

श्रुतिश्च ॥ ८१ ॥

"दीक्षयैव नरो मुच्येत् तिष्ठेन्मुक्तोऽपि विग्रहे"[2] इत्यादिश्रुतिस्तत्र प्रमाणम् ॥ ८१ ॥

ननु श्रवणमात्रेणाप्युपदेष्टृत्वं स्यात तत्राह—

इतरथा अन्धपरम्परा ॥ ८२ ॥

अकृतसाक्षात्कारस्याप्युपदेष्टृत्वे अन्धपरम्परापत्तिरित्यर्थः ॥ ८२ ॥

ननु ज्ञानेन कर्मक्षये सति कथं जीवनं स्यात् तत्राह—

चक्रभ्रमणवत् धृतशरीरः ॥ ८३ ॥

कुलालकर्मनिवृत्तावपि पूर्वकर्मवेगात् चक्रं कञ्चित्कालं स्वयमेव भ्रमति यथा, एवं ज्ञानोत्तरं कर्मानुत्पत्तावपि प्रारब्धवशात् शरीरं धृत्वा जीवन्मुक्तः तिष्ठतीत्यर्थः ॥ ८३ ॥

नन्वेवं योगेन संस्काराभिभवे कथं शरीरधारणं स्यात् तत्राह—

संस्कारलेशतः तत्सिद्धिः ॥ ८४ ॥

---

1 जीवन्मुक्तस्यैव।

2 "कुलालचक्रमध्यस्थो विच्छिन्नोऽपि भ्रमेद् घटः;" इति दृष्टान्तः।

अल्पावशिष्टशरीरधारणहेतुविषयसंस्कारतः तत्सिद्धिरित्यर्थः। न ह्येकधैव सकलसंस्काराभिभव इति भावः ॥ ८४ ॥

शास्त्रार्थमुपसंहरति—

विवेकान्निश्शेषदुःखनिवृत्तौ कृतकृत्यो नेतरान्नेतरात् ॥ ८५॥

स्पष्टम्। वीप्सा पूर्ववत्।
अन्यन्तलयपर्यन्तः कार्योऽव्यक्तस्य नात्मनः।
प्रोक्तएवं विवेकोऽत्र परवैराग्यसाधनम्॥

इति भाष्यस्य कारिका॥ ८५ ॥

इति भावगणेशात्मज-श्रीधरविरचितायां

साङ्ख्यप्रवचनवृत्तौ वैराग्याध्यायः

तृतीयः समाप्तः



# आख्यायिकाध्यायः

## चतुर्थः



शास्त्रसिद्धाख्यायिकाभिः विवेकसाधनानि प्रदर्श्यन्ते चतुर्थाध्यायेन—

राजपुत्रवत् तत्त्वोपदेशात् ॥१॥

विवेकोऽनुवर्तते पूर्वसूत्रात्। यथा शबरपालितः शबरंमन्यः कश्चिद्राजपुत्रो[1] मन्त्र्युपदेशादशबरमात्मानं विविच्य ज्ञातवान् एवं अन्येऽप्युपदेशाद्विविक्तमात्मानं जानन्तीत्यर्थः। आख्यायिकानां विस्तारो भाष्येऽनुसन्धेयः ॥१॥

प्रसङ्गतोपदेशश्रुतेरपि विवेकसिद्धिमाह—

पिशाचवदन्यार्थोपदेशेऽपि ॥२॥

अर्जुनार्थके गीतोपदेशे[2] श्रुते पिशाचो यथा मुक्तोऽभूत् एवं स्त्रीशूद्रादिरपि भवेदित्यर्थः ॥२॥

विवेकदार्ढ्यार्थमुपदेशावृत्तिरपि कर्तव्येत्याह—

आवृत्तिरसकृदुपदेशात् ॥३॥

छान्दोग्ये श्वेतकेतुं प्रत्यसकृदुपदेशस्य[3] श्रुतत्वादावृत्तिः कार्येत्यर्थः ॥३॥

वैराग्यार्थं सदृष्टान्तं देहानित्यत्वं प्रतिपादयति—

---

1 गण्डर्क्षजन्मना पुरान्निसारितः इति शेषः।

2 श्रीकृष्णेन कृते इति शेषः।

3 आरुणिकृतस्येति यावत्।

पितापुत्रवदुभयोर्दृष्टत्वात् ॥ ४ ॥

स्वपितापुत्रयोरिवात्मनोऽपि मरणोत्पत्त्योः दृष्टत्वात् अनुमितत्वात् वैराग्येण विवेको भवतीत्यर्थः ॥ ४ ॥

परिग्रहस्योद्वेजकत्वेनापरिग्रहस्य विकेकानुकूलत्वं दर्शयति—

श्येनवत् सुखदुःखी त्यागवियोगाभ्याम् ॥ ५ ॥

यथा आमिषपरिग्रहेण श्येनोऽन्यैः दुःखीक्रियते, तत्त्यक्त्वा च सुखी भवति, तद्वदन्योऽपीत्यर्थः ॥ ५ ॥

त्यागे दृष्टान्तमाह—

अहिनिर्ल्वयिनीवत् ॥ ६ ॥

यथा अहिना बहुकालोपभुक्तजीर्णत्वक् त्यज्यते तद्वत् बहोः कालादुपभुक्तं प्रकृत्यादि त्यजेदित्यर्थः ॥ ६ ॥

त्यक्तं च पुनर्नोपादेयमित्याह द्वाभ्याम्—

छिन्नहस्तवद्वा ॥ ७ ॥

यथा छिन्नं हस्तं पुनः कोऽपि नादत्ते तद्वदेवेत्यर्थः[1] ॥ ७ ॥

विवेकाननुकूलचिन्तनं बन्धायेत्याह—

असाधनानुचिन्तनं[2] बन्धाय भरतवत् ॥ ८ ॥

यथा राज्ञो भरतस्य मृगपोतानुचिन्तनं मृगयोनिदमित्यर्थः ॥ ८ ॥

विवेकार्थं एकाकिनैव स्थेयं, न बहुभिः द्वाभ्यां वा सह इत्याह सूत्राभ्याम्—

1 नाभिमन्येतेति शेषः ।
2 विवेकान्तरङ्गासाधनस्य धर्मस्यापि अनुष्ठाने चित्तस्य न तात्पर्यं कर्तव्य मित्यर्थः ।

बहुभिर्योगे विरोधः रागादिभिः कुमारीकङ्कण(शङ्ख)वत्[1] ॥ ९ ॥

योगे संयोगे, विरोधो विवेकबाधः ॥ ९ ॥

द्वाभ्यामपि तथैव[2] ॥ १० ॥

स्पष्टम्। तदुक्तम्—

"वासे बहूनां कलहो भवेद्वार्ता द्वयोरपि।
एक एव चरेद्योगी कुमार्या इव कङ्कणम्" ॥ इति ॥ १० ॥

आत्मोद्वेगकरी आशा त्याज्येत्याह—

निराशः सुखी पिङ्गलावत् ॥ ११ ॥

तदुक्तम्—

"आशा हि परमं दुःखं नैराश्यं परमं सुखम्।
यथा संछिद्य कान्ताशां सुखं सुष्वाप पिङ्गला" इति ॥ ११ ॥

योगविरोधित्वात् आरम्भो न कर्तव्य इत्याह—

अनारम्भेऽपि परगृहे सुखी सर्पवत् ॥ १२ ॥

तदुक्तम्—

"गृहारम्भो हि दुःखाय न सुखाय कथञ्चन।
सर्पः परकृतं वेश्म प्रविश्य सुखमेधते" इति ॥ १२ ॥

अनेकशास्त्रगुरूपासनेऽपि सारमात्रं ग्राह्यम्। अन्यथा अभ्युपगमाद्यसारांशे परस्परविरोधेनैकाग्रताभङ्गः स्यादित्याह—

बहुशास्त्रगुरूपासनेऽपि सारादानं षट्पदवत् ॥ १३ ॥

---

1 कुमारीहस्तधृतानां बहूनां कङ्कणानां योगेन यथा झणत्कारः तथेत्यर्थः।
2 अतः एकाकिनैव स्थातव्यमिति भावः।

तदुक्तं मार्कण्डेये—

"सारभूतमुपासीत ज्ञानं यत्स्वार्थसाधकम् ।
ज्ञानानां बहुता येषा योगविघ्नकरी हि सा" ॥ इति ॥ १३ ॥

चित्तैकाग्र्यतया विघ्नाभिभवमाह—

इषुकारवन्नैकचित्तस्य समाधिहानिः ॥ १४ ॥

यदुक्तम्—

"तदैवमात्मन्यवरुद्धचित्तो न वेद किञ्चिद्बहिरन्तरं वा ।
यथेषुकारो नृपतिं व्रजन्तं इषौ गतात्मा न ददर्श पार्श्वे" ॥ इति ॥

तथाच विषयान्तरसञ्चाराभावे ध्येयसाक्षात्कारोऽप्यवश्यंभावीति भावः ॥ १४ ॥

वर्णाश्रमधर्मरूपनियमलङ्घने ज्ञानाभावरूपानिष्टमाह—

कृतनियमलङ्घनादानर्थक्यं लोकवत् ॥ १५ ॥

यथा लोके पथ्यादिनियमलङ्घनादौषधसेवनमनर्थकम्, तद्वत् वर्णाश्रम धर्मरूपनियमलङ्घनाद् ज्ञानादिकमपीत्यर्थः ॥ १५ ॥

नियमविस्मरणेऽप्यानर्थक्यमाह—

तद्विस्मरणेऽपि भेकीवत् ॥ १६ ॥

काऽपि कामरूपिणी भेकराजदुहिता राजपत्नी भूत्वा तेन सह नियमं चक्रे, मया सह जलाशयो न गन्तव्य इति । स कदाचित् पिपासुः तं नियमं विस्मृत्य तया सहैव जलाशयं गतः । सा च भेकी भूत्वा गतेति पतितोऽनर्थः ॥ १६ ॥

उपदेशोऽपि विचारं विना व्यर्थ इत्याह—

नोपदेशश्रवणेऽपि कृतकृत्यता परामर्शादृते विरोचनवत् ॥ १७ ॥

यथेऽन्द्रविरोचनयोः उपदेशसाम्येऽपि इन्द्रस्य गुरुवाक्यतात्पर्यनिर्णाय कविचारात् विवेकः, तद्विरहान्न विरोचनस्य, तद्वदित्यर्थः ॥ १७ ॥

दृष्टस्तयोरिन्द्रस्य ॥ १८ ॥

तयोः इन्द्रविरोचनयोर्मध्ये ॥ १८ ॥

किञ्च—

प्रणतिब्रह्मचर्योपसपणानि कृत्वा सिद्धिः बहुकालात् तद्वत् ॥ १९ ॥

इन्द्रवदेव गुरुप्रणतिवेदाध्ययनसेवादीन् कृत्वैव बहुकालात् विवेको भवति ॥ १९ ॥

तत्किं बहुकालेनैव सिद्धिः ? नेत्याह—

न कालनियमो वामदेववत् ॥ २० ॥

जन्मान्तरीयसाधनात् वामदेवस्य गर्भे यथा ज्ञानस्योदयः अभूत् तथा कस्यचिदन्यस्यापीत्यर्थः ॥ २० ॥

ननु सगुणोपासनतोऽपि ज्ञानश्रवणात् किमर्थं दुष्करसूक्ष्मयोगचर्येति चेत् तत्राह—

अध्यस्तरूपोपासनात् पारम्पर्येण यज्ञोपासकानामिव ॥ २१ ॥

यज्ञोपासनादीनां क्रमेण सत्त्वशुद्धिद्वारा यथा ज्ञानोत्पत्तिः तथा सगुणोपासकानामपीत्यर्थः ॥ २१ ॥

ब्रह्मादिलोकपरम्परयाऽपि ज्ञाननिष्पत्तौ नास्ति नियम इत्याह—

इतरलाभेऽप्यावृत्तिः पञ्चाग्नियोगतो जन्मश्रुतेः ॥ २२ ॥

छान्दोग्यपञ्चमप्रपाठके "असौ वाव लोको गौतमाग्नि" रित्यादिना द्युपर्जन्यधरानरयोषिद्रूपाग्निपञ्चाहुतितो जन्मश्रवणात् ब्रह्मलोकलाभेऽप्यावृत्तिश्रवणादावृत्तिरस्तीत्यर्थः ॥ २२ ॥

ज्ञाननिष्पत्तिः विरक्तस्यैवेत्यत्र निदर्शनमाह—

विरक्तस्य हेयहानमुपादेयोपादानं हंसक्षीरवत् ॥ २३ ॥

प्रकृत्यादीनां हेयानां हानम्। उपादेयास्यात्मन उपादानं च विरक्तस्यैव भवति यथैकीभूतयोर्जलक्षीरयोर्हंसस्य ॥ २३ ॥

किञ्च सिद्धपुरुषसङ्गादप्येतद्भवतीत्याह—

लब्धातिशययोगाद्वा तद्वत् ॥ २४ ॥

लब्धोऽतिशयो ज्ञानकाष्ठा येन। यथा दत्तात्रेयसङ्गतोऽलर्कस्य विवेकः इत्यर्थः ॥ २४ ॥

रागिसङ्गो न कार्य इत्याह—

न कामचारित्वं रागोपहते शुकवत् ॥ २५ ॥

रागोपहते पुरुषे कामतः सङ्गो न कर्तव्यः। रागी शुकः रूपादिलुब्धात् यथा क्लिश्नाति तथैवमपीत्यर्थः ॥ २५ ॥

सङ्गे बाधकं विवृणोति—

गुणयोगात् बद्धः शुकवत् ॥ २६ ॥

गुणितया गुणलोलुपैः बद्धो भवति शुक इवेत्यर्थः ॥ २६ ॥

वैराग्यस्यापि उपायमवधारयति द्वाभ्याम्—

न भोगाद्रागशान्तिः मुनिवत् ॥ २७ ॥

सौभरेर्यथा भोगाद्रागशान्तिर्नाभूत् तद्वदन्यस्यापीत्यर्थः।

तदुक्तम्—

"न जातु कामः कामानामुपभोगेन शाम्यति" इति[1] ॥ २७ ॥

तर्हि कस्मादित्यत आह—

दोषदर्शनादुभयोः ॥ २८ ॥

प्रकृतितत्कार्ययोः दोषदर्शनादेव सौभरेरपि पश्चाद्वैराग्यं श्रूयते। थथा—'दुःखं यदेवैकशरीरजन्म शतार्धसङ्ख्यं तदिदं प्रसूतम्।

परिग्रहेण क्षितिपात्मजानां सुतैरनेकैर्बहुलीकृतं तत्'॥ इति ॥ २८ ॥

रागाद्युपहते चित्ते ज्ञानवृक्षबीजरूपोपदेशो नाङ्कुरं जनयतीत्याह—

1 'हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते' इत्युत्तरार्धम्।

न मलिनचेतस्युपदेशबीजप्ररोहोऽजवत् ॥ २९ ॥

यथेन्दुमतीशोकाभिभूते अजचेतसि वसिष्ठोपदेश इत्यर्थः ॥ २९ ॥

यथा मलिनदर्पणे आपाततोऽपि न मुखादिप्रतिबिम्बः, एवं चेतसि नापाततो ज्ञानमप्युपदेशादित्याह—

नाभासमात्रमपि मलिनदर्पणवत् ॥ ३० ॥

स्पष्टम् ॥ ३० ॥

कथञ्चिज्ज्ञायमानमपि क्षेत्रवैगुण्यात् नोपदेशानुरूपं भवेदित्याह—

न तज्जस्यापि तद्रूपता पङ्कजवत् ॥ ३१ ॥

यथा सम्यग्बीजाज्जातोऽप्यङ्कुरः पङ्किलक्षेत्रादिवैगुण्यान्न बीजानुरूपो भवति तद्वत् प्रकृतेऽपीत्यर्थः ॥ ३१ ॥

ननु ब्रह्मलोकादिष्वैश्वर्येणैव पुरुषार्थसिद्धिरस्तु किं ज्ञानेनेत्यत आह—

न भूतियोगेऽपि कृतकृत्यता उपास्यसिद्धिवत् ॥ ३२ ॥

ऐश्वर्ययोगेऽपि कृतार्थता क्षयातिशयदुःखैरनुगमात् उपास्यसिद्धिवत् यथा उपास्यब्रह्मादीनां सिद्धियोगेऽपि न कृतकृत्यता तद्वदित्यर्थः। वीप्सा पूर्ववत्। ॥ ३२ ॥

अध्यायत्रितयोक्तस्य विवेकस्यान्तरङ्गकम्।
आख्यायिकाभिः सम्प्रोक्तमत्राध्याये समासतः॥

इति भाष्यकारिका ॥

**इति श्रीभावगणेशात्मजश्रीधरविरचितायां**

**साङ्ख्यसूत्रप्रवचनवृत्तौ आख्यायिकाध्यायः**

**चतुर्थः समाप्तः ॥**



## परमतनिर्जयाध्यायः

## पञ्चमः

---

स्वशास्त्रविरुद्धान् परपक्षान खण्डयति पञ्चमाध्यायेन। तत्र स्वकृतौ अथशब्दोच्चारणरूपमङ्गलवैयर्थ्याक्षेपं समाधत्ते—

मङ्गलाचरणं शिष्टाचारात् फलदर्शनात् श्रुतितश्चेति ॥ १ ॥

कर्तव्यमिति शेषः। इतिशब्दो हेत्वन्तराकाङ्क्षानिरासार्थः। अत्र मङ्गलवादविशेषोऽनुसन्धेयः ॥ १ ॥

स्वोक्तेश्वरासिद्धौ पूर्वपक्षिणो निराकरोति—

नेश्वराधिष्ठिते फलनिष्पत्तिः कर्मणा तत्सिद्धेः ॥ २ ॥

ईश्वराधिष्ठिते कारणे फलनिष्पत्तिरिति न, कर्मणैव फलसिद्धेः, तथा च ईश्वरवैयर्थ्यमिति भावः ॥ २ ॥

किञ्च ईश्वरस्याधिष्ठातृत्वं न, सम्भवतीत्याह—

स्वोपकारादधिष्ठानं लोकवत् ॥ ३ ॥

स्वोपकारार्थमेव लोकेऽधिष्ठानं दृष्टम्। ईश्वरस्योपकाराभावात्तत्रेत्यर्थः ॥ ३ ॥

ननु भवतु तस्याप्युपकारस्तत्राह—

लौकिकेश्वरवदितरथा ॥ ४ ॥

उपकारस्वीकारे लौकिकेश्वरवत अपूर्वकामनया संसारित्वापत्तिरित्यर्थः ॥ ४ ॥

तथैव भवत्वित्याशङ्क्याह—

पारिभाषिको वा ॥ ५ ॥

संसारितुल्यत्वे ईश्वर इति परिभाषामात्रमित्यर्थः[1] ॥ ५ ॥

बाधकान्तरमाह—

न रागादृते तत्सिद्धिः प्रतिनियतकारणत्वात् ॥ ६ ॥

रागं विना नाधिष्ठातृत्वं सिद्ध्यति। प्रवृत्तौ रागस्य प्रतिनियतकारणत्वादित्यर्थः[2] ॥ ६ ॥

रागयोगस्वीकारे च नित्यमुक्तत्वं न स्यादित्याह—

तद्योगेऽपि न नित्यमुक्तः ॥ ७ ॥

ईश्वरस्यैश्वर्याङ्गीकारे प्रकारद्वयम्—प्रधानधर्मत्वेनाभिमतानां इच्छादीनां साक्षादेवेश्वरे योगात्, सन्निधिमात्रेण प्रेरकत्वाद्वा ॥ ७ ॥

तत्राद्ये आह—

प्रधानशक्तियोगाच्चेत् सङ्गापत्तिः ॥ ८ ॥

प्रधानशक्तेः इच्छादेः योगात् ऐश्वर्याङ्गीकारे पुरुषस्य धर्मसङ्गापत्तिः। तथा च निर्धर्मत्वश्रुतिविरोध इत्यर्थः ॥ ८ ॥

अन्त्ये त्वाह—

सत्तामात्राच्चेत् सर्वैश्वर्यम् ॥ ९ ॥

सान्निध्यस्याविशिष्टत्वात् सर्वेषामैश्वर्य एव सिद्ध्यति ॥ ९ ॥
तथाच साधकाभावान्न तत्सिद्धिरित्याह—

प्रमाणाभावान्न तत्सिद्धिः ॥ १० ॥

स्पष्टम् ॥ १० ॥

---

1 संसारित्वाप्रतिहतेच्छत्वयोः विरोधात् नित्यैश्वर्यानुपपत्तेरित्यर्थः।
2 उपकार इष्टार्थसिद्धिः, रागस्तु उत्कटेच्छेति भेदः ॥

[1]तत्र ईश्वरे तावदनुमानशब्दौ प्रमाणम्। तत्राप्रयोजकत्वेन व्याप्तिरूपसम्बन्धासिद्धेः नानुमानमित्याह—

सम्बन्धाभावान्नानुमानम् ॥ ११ ॥

स्पष्टम् ॥ ११ ॥

नापि शब्द इत्याह—

श्रुतिरपि प्रधानकार्यत्वस्य ॥ १२ ॥

"अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमाना" मित्यादिना प्रधानकार्यत्वमेव प्रपञ्चे वदति, न चेतनकार्यत्वम्। "तदैक्षत" इत्यादिश्रुतिश्चादिमपुरुषे इति भावः ॥ १२ ॥

आत्माश्रिताज्ञानकल्पनयैव अविद्याख्यशक्त्या तावत्सर्वव्यवहारोपपत्तेः किं प्रधानेनेति यदि केनचिदाक्षिप्यते तद्दूषयति—

नाविद्याशक्तियोगो निस्सङ्गस्य ॥ १३ ॥

अविद्या हि अतस्मिन् तदाकारता, तच्छक्तिश्च तद्वासना। सा च निस्सङ्गे चेतने सङ्गं विना न सम्भवतीत्यर्थः ॥ १३ ॥

नन्वविद्यावशादेवाविद्यायोगो वक्तव्यः। तस्य च मिथ्यात्वान्नासङ्गताक्षतिः, तत्राह—

तद्योगे तत्सिद्धावन्योन्याश्रयत्वम् ॥ १४ ॥

अविद्यायोगेऽविद्यासिद्धिः, तत्सिद्धौ च तद्योगः, इत्यन्योन्याश्रयः इत्यर्थः ॥ १४ ॥

ननु बीजाङ्कुरवदनवस्था न दोषायेत्यत आह—

न बीजाङ्कुरवत् सादिसंसारश्रुतेः ॥ १५ ॥

1 प्रत्यक्षं नास्तीति सिद्धवत्कृत्येति शेषः।

पुरुषाणामविद्याद्यखिलानर्थरूपस्य संसारस्य सादित्वश्रुतेः प्रलयसुषुप्त्यादावभावश्रवणान्नेयं बीजाङ्कुरतुल्येत्यर्थः ॥ १५ ॥

अपिच अविद्याशब्दार्थं विकल्प्य दूषयति—

विद्यातोऽन्यत्वे ब्रह्मबाधप्रसङ्गः ॥ १६ ॥

यदि विद्यान्यत्वमेवाविद्याशब्दार्थः तर्हि तस्य ज्ञाननाश्यत्वाभ्युपगमे ब्रह्मण आत्मनोऽपि बाधो नाशः प्रसज्यते, विद्याभिन्नत्वादित्यर्थः ॥ १६ ॥

अबाधे नैष्फल्यम् ॥ १७ ॥

यद्यविद्या विद्यया न बाध्यते तदा विद्यावैकल्यमित्यर्थः ॥ १७ ॥

पक्षान्तरं दूषयति—

विद्याबाध्यत्वे जगतोऽप्येवम् ॥ १८ ॥

यदि आत्मनि धर्मिणि विद्याबाध्यत्वमविद्यात्वमुच्यते, तदा जगतः प्रकृत्याद्यखिलस्याप्येवमविद्यात्वं स्यात्। "अस्थूलमनणिव"त्यादि श्रुत्या आत्मनि मिथ्याज्ञानस्येव तस्यापि बाधात् इत्यर्थः ॥ १८ ॥

तद्रूपत्वे सादित्वम् ॥ १९ ॥

भवतु वा कथंचिद्विद्याबाध्यत्वमेवाविद्यात्वम, तथापि तादृशवस्तुनः सादित्वमेव पुरुषेषु, नत्वनादित्वमपि सम्भवति। 'विज्ञानघन' एवेत्यादिश्रुतिभिः प्रलयादौ पुरुषस्य चिन्मात्रत्वसिद्धेरित्यर्थः ॥ १९ ॥

यदुक्तं कर्मनिमित्ता प्रधानप्रवृत्तिरिति, तत्र पूर्वपक्षं समाधत्ते[1]—

न धर्मापलापः प्रकृतिकार्यवैचित्र्यात् ॥ २० ॥

प्रकृतिकार्यवैचित्र्यानुपपत्त्या अनुमितस्य धर्मस्यापलापो न कार्यः ॥ २० ॥

किञ्च—

1 उत्तरत्र प्रघट्टकेनेति शेषः।

श्रुतिलिङ्गादिभिः तत्सिद्धिः ॥ २१ ॥

'पुण्यो वै पुण्येने'त्यादिश्रुतेः विध्यादिलिङ्गाद्योगिप्रत्यक्षादिभ्यश्च तत्सिद्धिरित्यर्थः ॥ २१ ॥

धर्माभावसाधकमाभासीकरोति—

न नियमः प्रमाणान्तरावकाशात् ॥ २२ ॥

लौकिकप्रत्यक्षाभावान्न वस्तुसिद्धिरिति नियमो नास्तीति प्रमाणान्तरैरपि[1] वस्तुसिद्धेरित्यर्थः ॥ २२ ॥

धर्मवदधर्मं साधयति—

उभयत्राप्येवम् ॥ २३ ॥

धर्मवदधर्मेऽपि प्रमाणानीत्यर्थः ॥ २३ ॥

विध्यन्यथानुपपत्तेः धर्मसिद्धिरिति चेत्, निषेधानुपपत्तिरधर्मेऽपि समेत्याह—

अर्थात् सिद्धिश्चेत् समानमुभयोः[2] ॥ २४ ॥

अर्थात् अर्थापत्तेः ॥ २४ ॥

धर्मादीनां अन्तःकरणधर्मत्वात तत्स्वीकारेऽपि न पुरुषस्य परिणामित्वापत्तिरित्याह—

अन्तःकरणधर्मत्वं धर्मादीनाम् ॥ २५ ॥

आदिपदेनेच्छादिपरिग्रहः ॥ २५ ॥

ननु अतिरिक्तपदार्थानां "नेह नानाऽस्ति किञ्चने"ति श्रुतिबाधितत्वात् तव सृष्टिः दुर्घटेत्यत आह—

---

1 अनुमानादिभिः ।

2 उभयोः धर्माधर्मयोः

गुणादीनां च नात्यन्तबाधः ॥ २६ ॥

सत्त्वादिगुणतद्धर्मतत्कार्यसुखमहदादीनां च न स्वरूपतो बाधः, किन्तु चेतने साक्षात्संसर्गत एव, अयसि वह्निवदित्यर्थः[1] ॥ २६ ॥

श्रुतिबाधं निराकृत्य साधकमाह—

पञ्चावयवयोगात् सुखसंवित्तिः ॥ २७ ॥

अत्र विषयैकदेशसुखमात्रस्य ग्रहणं विशिष्टपक्षतासूचनाय। सुखं सत् अर्थक्रियाकारित्वात्; यत् अर्थक्रियाकारि तत् सत्, यथा चेतनः; पुलकादिरूपार्थक्रियाकारि च सुखम्; तस्मादिति प्रतिज्ञादिपञ्चावयवयोगात् सुखसंवित्तिः सुखसिद्धिरित्यर्थः ॥ २७ ॥

व्याप्त्यग्रहादनुमानमप्रमाणमिति चार्वाकः पुनः शङ्कते—

न सकृद्ग्रहणात् सम्बन्धसिद्धिः ॥ २८ ॥

सकृत्सहचारग्रहाद् व्याप्तिज्ञानं न भवति ॥ २८ ॥

समाधत्ते—

नियतधर्मसाहित्यमुभयोरेकतरस्य वा व्याप्तिः ॥ २९ ॥

समव्याप्त्यभिप्रायेणोभयोरित्युक्तम्। धर्मसाहित्यं धर्मतायां साहित्यम्, सहचार इति यावत्। तथा च साध्यसाधनयोः साधनस्यैव वा नियतसहचारो व्याप्तिः। नियमश्च अनुकूलतर्केण ग्राह्य इति भावः ॥ २९ ॥

व्याप्तिश्च न पदार्थान्तरमित्याह—

न तत्त्वान्तरं वस्तुकल्पनाप्रसक्तेः ॥ ३० ॥

तत्त्वान्तरं पदार्थान्तरमिति[2] स्पष्टम् ॥ ३० ॥

---

1 औष्ण्यबाधवदिति यावत्।

2 नियतधर्मसाहित्यातिरिक्तम्।

निजशक्त्युद्भवमित्याचार्याः ॥ ३१ ॥

स्वभावशक्तिजन्यशक्तिविशेषरूपां[1] व्याप्तिमाहुः केचनाचार्याः । निजशक्तेः यावद्वस्तुभावित्वे देशान्तरगतस्यापि व्याप्यत्वप्रसङ्गवारणायोद्भवेति । देशान्तरगमनेन स नश्यतीति भावः ॥ ३१ ॥

आधेयशक्तियोग इति पञ्चशिखः ॥ ३२ ॥

बुद्ध्यादिषु प्रकृत्यादिव्याप्यताव्यवहारादाधारताशक्तिः व्यापकता, आधेयताशक्तिः व्याप्यतेति ॥ ३२ ॥

ननु स्वरूपशक्तिरेव व्याप्तिरस्तु तत्राह—

न स्वरूपशक्तिर्नियमः पुनर्वादप्रसक्तेः ॥ ३३ ॥

स्वरूपशक्तेः व्याप्यत्वे घटः कलश इति तद्बुद्धिर्व्याप्येति पौनरुक्त्यप्रसङ्गः । व्याप्तेर्बुद्धिस्वरूपत्वादित्यर्थः ॥ ३३ ॥

पौनरुक्त्यस्य दूषकत्वे बीजमाह—

विशेषणानर्थक्यप्रसक्तेः ॥ ३४ ॥

स्पष्टम् ॥ ३४ ॥

दूषणान्तरमाह—

पल्लवादिष्वनुपपत्तेश्च ॥ ३५ ॥

स्वरूपशक्तेः व्याप्यत्वे छिन्नपल्लवस्य वृक्षव्याप्यत्वं स्यात् । अस्मिन् मते तु छेदेनाधेयशक्तिनाशान्न व्याप्तिरिति नातिप्रसङ्गः ॥ ३५ ॥

ननु किमाधेयशक्तिरेव व्याप्तिः नेत्याह—

आधेयशक्तिसिद्धौ निजशक्तियोगः समानन्यायात् ॥ ३६ ॥

---

1 तत्त्वान्तरमिति यावत्।

आधेयशक्तेः व्याप्तिसिद्धौ निजशक्त्युद्भवेऽपि तत्त्वेन सिद्ध एव युक्ति-साम्यात्। तेन पृथिव्यादेरपि गन्धव्याप्यत्वमिति भावः ॥ ३६ ॥

शब्दशक्त्यादिनिर्वचनेन तदुपपत्तिरूपं शब्दप्रामाण्ये बाधकमपास्यते—

वाच्यवाचकभावः सम्बन्धः शब्दार्थयोः ॥ ३७ ॥

वाच्यताख्या[1] शक्तिरेवोभयोस्सम्बन्धः। तदज्ञानादेव शब्दार्थो पस्थितिरिति भावः ॥ ३७ ॥

तद्ज्ञापकान्याह—

त्रिभिः सम्बन्धसिद्धिः ॥ ३८ ॥

आप्तोपदेश-वृद्धव्यवहार-प्रसिद्धपदसामानाधिकरण्यैः शक्तिग्रह इत्यर्थः ॥ ३८ ॥

'गामानये'त्यादिवत् 'पुत्रस्ते जातः' इत्यादावपि बोधतत्कार्यहर्षादिदर्श-नात् न कार्यत्वविशिष्टे एव शक्तिग्रहनियमः इत्याह—

न कार्ये नियमः उभयथा दर्शनात् ॥ ३९ ॥

स्पष्टम् ॥ ३९ ॥

बोधानुभवेन लोके सिद्धार्थबोधकत्वं प्रसाध्य वेदेऽपि साधयति—

लोके व्युत्पन्नस्य वेदार्थप्रतीतिः ॥ ४० ॥

लोके शब्दशक्तिव्युत्पन्नस्य तदनुसारेणैव वेदार्थस्य प्रतीतिर्भवति। "य एव लौकिकास्त एव वैदिकाः" इति न्यायादित्यर्थः ॥ ४० ॥

अत्र शङ्कते—

न त्रिभिरपौरुषेयत्वाद्वेदस्य तदर्थस्याप्यतीन्द्रियत्वात् ॥ ४१ ॥

1 शब्दनिष्ठेति शेषः।

ननु पूर्वोक्तैस्त्रिभिर्वेदे न शक्तिग्रहः वेदस्यापौरुषेयत्वेनाप्तोपदेशाभावात्। तदर्थस्यातीन्द्रियत्वेन व्यवहारस्य प्रसिद्धपदसामानाधिकरण्यस्य चाभावादित्यर्थः॥ ४१ ॥

तत्रातीन्द्रियत्वमादौ निराकरोति—

न यज्ञादेः स्वरूपतो धर्मत्वं वैशिष्ट्यात् ॥ ४२ ॥

यदुक्तं तन्न, इच्छाद्यात्मकस्य यागादेः विशिष्टप्रेमसाधकत्वात् स्वरूपत एव धर्मत्वं, तस्य वेदे विहितत्वात् प्रत्यक्षत्वमेवेत्यर्थः ॥ ४२ ॥

उपदेशादिकमप्युपपादयति—

निजशक्तिः व्युत्पत्त्या व्यवच्छिद्यते ॥ ४३ ॥

वेदस्यापौरुषेयत्वेऽपि तच्छब्दानां स्वार्थेषु या स्वाभाविकी शक्तिः सा वृद्धपरम्पराव्युत्पत्त्या गुरुभिः शिष्यो विशिष्योपदिश्यते ॥ ४३ ॥

ननु तथाप्यतीन्द्रियदेवताफलादिषु कथं शक्तिग्रहस्तत्राह—

योग्यायोग्येषु प्रतीतिजनकत्वात् तत्सिद्धिः ॥ ४४ ॥

प्रत्यक्षाप्रत्यक्षपदार्थेषु सामान्यधर्मपुरस्कारेण शक्तिग्रहसिद्धिः। कुतः? पदानां साधारण्येन प्रतीतिजनकत्वस्य अनुभवसिद्धत्वादित्यर्थः ॥ ४४ ॥

प्रसङ्गेनान्यं वेदगतं विशेषमवधारयति—

न नित्यत्वं वेदानां कार्यत्वश्रुतेः[1] ॥ ४५ ॥

स्पष्टम् ॥ ४५ ॥

तर्हि किं पौरुषेयः? नेत्याह—

न पौरुषेयत्वं तत्कर्तुः पुरुषस्याभावात् ॥ ४६ ॥

1 'तस्मात्तऽपानात् त्रयो वेदा अजायन्त।' इत्यादिश्रुतेः इत्यर्थः।

स्पष्टम् ॥ ४६ ॥

कर्त्रभावं[1] विवृणोति—

मुक्तामुक्तयोरयोग्यत्वात् ॥ ४७ ॥

दारादिमुक्तस्य तदभावकर्तृत्वम्। तद्युक्तस्याज्ञत्वादित्यर्थः ॥ ४७ ॥

तर्हि नित्यत्वमेवावगतं तत्राह—

नापौरुषेयत्वान्नित्यत्वमङ्कुरादिवत् ॥ ४८ ॥

स्पष्टम् ॥ ४८ ॥

अङ्कुरादौ घटादिवत् कार्यत्वेन पौरुषेयत्वानुमाने यत्पौरुषेयं तच्छरीरजन्यमिति दृष्टनियमस्य बाधः स्यादित्याह—

तेषामपि तद्योगे दृष्टबाधादिप्रसक्तिः ॥ ४९ ॥

तेषामङ्कुरादीनां तद्योगे पौरुषेयत्वयोगे ॥ ४९ ॥

आदिपुरुषोच्चरितत्वेऽपि वेदा अपौरुषेया एवेत्याह—

यस्मिन् अदृष्टेऽपि कृतबुद्धिरुपजायते तत्पौरुषेयम् ॥ ५० ॥

यस्मिन् वाक्ये ज्ञाते श्रुते दृष्टबाधाहितबुद्धिः तज्जन्यबोधतुल्यार्थको बोध उपजायते। प्रमाणान्तरगतं पौरुषेयम्। यथा गामानयेति शब्दः। प्रमाणातिरिक्तप्रमितिजन्यविषयार्थकमिति शब्दानुपजीव्यकत्वात् अपौरुषेयो वेद इत्यर्थः। वाक्यार्थज्ञानपूर्वकप्रमाणशब्दत्वादिति निष्कृष्टार्थत्वादित्यर्थः ॥ ५० ॥

तत्प्रामाण्ये किं मानं तत्राह—

निजशक्त्यभिव्यक्तेः स्वतः प्रामाण्यम् ॥ ५१ ॥

---

1 कर्त्रन्तराभावमिति यावत्।

वेदानां या स्वाभाविकी यथार्थज्ञानजननशक्तिः तस्याः मन्त्रायुर्वेदादौ अभिव्यक्तेः उपलम्भात् अखिलवेदानां प्रामाण्यं सिद्ध्यति । तथा च न्यायसूत्रम्-

"मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्य"मिति ॥ ५१ ॥

असन्नेव प्रपञ्चो भासत इति नास्तिकमतं निराकरोति—

नासतः ख्यानं नृशृङ्गवत् ॥ ५२ ॥

अत्यन्तासद्व्यावृत्तप्रतीतेरेव प्रपञ्चसत्त्वसिद्धिरित्यर्थः ॥ ५२ ॥

तर्हि किमत्यन्तसद्विषयिणी प्रपञ्चप्रतीतिः-नेत्याह—

न सतो बाधदर्शनात् ॥ ५३ ॥

न सतः प्रपञ्चप्रतीतिः नात्यन्तसद्विषयिणी, प्रपञ्चस्य परिणामितया पूर्वरूपैः प्रतिक्षणं बाधदर्शनात् ॥ ५३ ॥

नन्वेवं सदसद्विषयकविलक्षणैरस्तु प्रपञ्चप्रतीतिः- तत्राह—

नानिर्वचनीयस्य तदभावात् ॥ ५४ ॥

अनिर्वचनीयपदार्थाभावादित्यर्थः[1] ॥ ५४ ॥

एवं असत्ख्यातिं निरस्य अन्यथाख्यातिं निरस्यति—

नान्यथाख्यातिः स्ववचोव्याघातात् ॥ ५५ ॥

असता सम्बन्धाभावात् असत्ख्यातिमस्वीकुर्वतामन्यथाख्यातिस्वीकारे रजतादिभिः सम्बन्धाभावस्य तुल्यत्वेन स्ववचोव्याघातः स्यादित्यर्थः ॥ ५५ ॥

प्रपञ्चज्ञाने स्वसिद्धान्तमुपसंहरति—

सदसत्ख्यातिः बाधाबाधात् ॥ ५६ ॥

---

1 सदसद्भिन्नवस्त्वप्रसिद्धेः, दृष्टानुसारेणैव कल्पनायाः औचित्यात् ।

पूर्वपूर्वपरिणामरूपैः बाधात् स्वरूपेणाबाधाच्च सदसतः प्रपञ्चस्य ख्यातिः ज्ञानम्। ईदृशमेवात्मलक्षणं सदसत्त्वं प्रकृत्यादेः पुराणेषूच्यत इत्यवधेयम् ॥ ५६ ॥

इदानीं शब्दविचारप्रसङ्गागतं अन्यदप्यागन्तुकतया अन्ते प्रस्तूयते—

प्रतीत्यप्रतीतिभ्यां न स्फोटात्मकः शब्दः ॥ ५७ ॥

वर्णसमुदायव्यङ्ग्यस्तदतिरिक्तः स्फोटो योगाद्यैः स्वीक्रियते। स किं प्रतीयते न वा। आद्ये तत्प्रत्यायकस्यैवार्थप्रत्यायकत्वमस्तु किं स्फोटेन। अन्त्ये प्रतीत्यभावादेव न सिद्ध्यति इत्युभयथाऽपि स्फोटाभाव इत्यर्थः ॥ ५७ ॥

शब्दनित्यत्वं प्रतिषेधति—

न शब्दनित्यत्वं कार्यताप्रतीतेः ॥ ५८ ॥

कार्यतेत्युपलक्षणम्। 'नष्टः कोलाहलः' इति विनाशप्रतीतिरपीत्यर्थः ॥५८॥

शङ्कते—

पूर्वसिद्धसत्त्वस्याभिव्यक्तिः[1] दीपेनेव घटस्य ॥ ५९ ॥

स्पष्टम् ॥ ५९ ॥

परिहरति—

सत्कार्यसिद्धान्तश्चेत् सिद्धसाधनम् ॥ ६० ॥

यद्यभिव्यक्तिः वर्तमानावस्थालाभः[2] उच्यते, तदेदृशं नित्यत्वं सर्वकार्याणामेवेति सिद्धसाधनम्। यदि च वर्तमानतया सत एव शब्दस्य ज्ञानमभिव्यक्तिरुच्यते, तदा घटादावप्येवं सुवचम्। वर्तमानस्यैव घटस्य करणव्यापारेण ज्ञानोत्पत्तिरिति भावः ॥ ६० ॥

1 शब्दस्य ध्वन्यादिभिरिति शेषः।
2 अनागतावस्थात्यागेनेत्यादिः।

निरस्तमप्यात्माद्वैतं हेत्वन्तरोद्भावनाय पुनरारभते—

नाद्वैतमात्मनो लिङ्गात् तद्भेदप्रतीतेः ॥ ६१ ॥

"अजो ह्यको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" इति श्रुत्युक्तप्रकृतित्यागलिङ्गेन भेदसिद्धेः नात्माद्वैतमित्यर्थः[1] ॥ ६१ ॥

"अस्थूलमनण्वि"ति प्रत्यक्षश्रुतिबाधात् प्रपञ्चेनाप्यात्मनो नात्यन्ताभेदः इत्याह—

नानात्मापि[2] प्रत्यक्षबाधात् ॥ ६२ ॥

स्पष्टम् ॥ ६२ ॥

अत एव समुचिताभ्यामप्यात्मानात्मभ्यां नाद्वैतमित्याह—

नोभाभ्यां तेनैव ॥ ६३ ॥

स्पष्टम् ॥ ६३ ॥

नन्वेवं 'आत्मैवेद'मित्यादीनां श्रुतीनां का गतिस्तत्राह—

अन्यपरत्वमविवेकानां तत्र ॥ ६४ ॥

कर्मणि षष्ठी। अविवेकिपुरुषान्प्रति तत्राऽद्वैतेऽन्यपरत्वमुपासनार्थानुवाद इत्यर्थः[3] ॥ ६४ ॥

अद्वैतवादिनां जगदुपादानकारणं किमपि न सम्भवतीत्याह—

नात्माऽविद्या नोभयं जगदुपादानकारणं
निस्सङ्गत्वात् ॥ ६५ ॥

आत्मा तदाश्रिताऽविद्या च कपालद्वयवत्समुचितं वा तद्द्वयं नोपादान कारणमात्मनोऽसङ्गत्वात्। अविद्यायाश्चाद्रव्यत्वेनानुपादानत्वात्। द्रव्यत्वं चेत्तदा अद्वैतक्षतिरिति भावः ॥ ६५ ॥

---

1 नात्यन्तमभेदः इत्यर्थः।

2 अनात्मनैति छेदः।

3 अज एव परमार्थदशायां उपास्यानां आत्मत्वप्रतिषेधः—'यन्मनसा न मनुते' इत्यादिनेति ज्ञेयम्।

'आनन्दो ब्रह्मे'ति श्रुतेरानन्दस्वरूप एवात्मेति पूर्वपक्षं निराकरोति—

नैकस्यानन्दचिद्रूपत्वे द्वयोर्भेदात् ॥ ६६ ॥

सुखज्ञानयोरभेदे घटमहं जानामीत्यादौ सुखभावापत्तिरिति भावः ॥ ६६ ॥

ननु तर्ह्यानन्दरूपताश्रुतेः का गतिः तत्राह—

दुःखनिवृत्तेर्गौणः ॥ ६७ ॥

दुःखनिवृत्तिगुणिन्यात्मन्यानन्दशब्दो गौण इत्यर्थः ॥ ६७ ॥

ननु किमर्थं गौणप्रयोगस्तत्राह—

विमुक्तिप्रशंसा मन्दानाम् ॥ ६८ ॥

मन्दान्प्रति निर्दुःखात्मस्वरूपमुक्तिं सुखत्वेन श्रुतिः स्तौति, प्ररोचनार्थमित्यर्थः ॥ ६८ ॥

स्वोपादानत्वोपपत्तये मनोविभुत्वमप्यपाकरोति—

न व्यापकत्वं मनसः करणत्वादिन्द्रियत्वाद्वा
वास्यादिवच्चक्षुरदिवच्च ॥ ६९ ॥

मनसो न व्यापकत्वं करणत्वादिन्द्रियत्वात, वास्यादिवदित्यर्थः ॥ ६९ ॥

अनुकूलतर्कमाह—

सक्रियत्वात् गतिश्रुतेः ॥ ७० ॥

'तमुत्क्रामन्तं प्राणोऽनूत्क्रामाती'ति श्रुतेः ॥ ७० ॥

निरवयवत्वमपि मनसो निराकरोति—

न निर्भागत्वं तद्योगाद्घटवत् ॥ ७१ ॥

तच्छब्दश्चेन्द्रियपरामर्शकः । तथा च एकदा अनेकेन्द्रियसम्बन्धात्तस्य, मध्यमपरिमाणं मनो घटवत् सावयवमेवेत्यर्थः ॥ ७१ ॥

मनःकालादीनां नित्यत्वं प्रतिषेधति—

प्रकृतिपुरुषयोरन्यत्सर्वमनित्यम् ॥ ७२ ॥

स्पष्टम् ॥ ७२ ॥

अवयवायविभावो न; 'निष्कलं निष्क्रियं' इत्यादिश्रुत्या निर्भागत्वश्रुतेरित्याह—

न भागलाभः भागिनो निर्भागत्वश्रुतेः ॥ ७३ ॥

स्पष्टम् ॥ ७३ ॥

मोक्षेऽन्यमतानि निराकरोति—

नानन्दाभिव्यक्तिर्मुक्तिः निर्धर्मत्वात ॥ ७४ ॥

निर्धर्मत्वेनात्मन्यानन्दाभावात् तत्स्वरूपत्वस्य च निरस्तत्वादित्यर्थः॥ ॥ ७४ ॥

अत एव—

न विशेषगुणोच्छित्तिस्तद्वत्[1] ॥ ७५ ॥

स्पष्टम् ॥ ७५ ॥

लोकविशेषगतिरेव मोक्ष इति मतं निराकरोति—

न विशेषगतिः निष्क्रियस्य ॥ ७६ ॥

विभुत्वेन सतो गत्यसम्भवात् औपाधिकगत्यर्थमुपाधियोगे च स्वीकृते मोक्षानुपपत्तिरित्यर्थः ॥ ७६ ॥

नाकारोपरागोच्छित्तिः क्षणिकत्वादिदोषात् ॥ ७७ ॥

---

1 निर्धर्मत्वादेवेत्यर्थः

क्षणिकादिज्ञानसन्तानरूपात्मनि विषयाकारतासम्बन्धो बन्धः। तन्नाशो मोक्ष इति नास्तिकमतम्, तन्न। क्षणिकत्वादिदोषेणाकारोच्छित्तिकाले आकारिणोप्युच्छेदादित्यर्थः ॥ ७७ ॥

न सर्वोच्छित्तिरपुरुषार्थत्वादिदोषात् ॥ ७८ ॥

व्याख्यातमेतत् "अपुरुषार्थत्वमुभयथे"ति सूत्रे ॥ ७८ ॥

अत एव—

एवं शून्यमपि[1] ॥ ७९ ॥

स्पष्टम् ॥ ७९ ॥

संयोगाश्च वियोगान्ता इति न
देशादिलाभोऽपि ॥ ८० ॥

प्रकृष्टदेशधनाङ्गनादिस्वामित्वलाभोऽपि न मुक्तिः। तस्याप्यनित्यत्वादित्यर्थः। अनित्यत्वे "संयोगाश्च वियोगान्ताः मरणान्तं च जीवित" मिति प्रमाणवाक्यम्। तदेकदेशग्रहणेनोक्तम् ॥ ८० ॥

न भागियोगो भागस्य ॥ ८१ ॥

भागस्यांशस्य जीवस्य भागिनीश्वरे योगो न मुक्तिः। ईश्वरासिद्धेरिति शेषः ॥ ८१ ॥

नाणिमादियोगोऽप्यवश्यंभावित्वात्[2]
तदुच्छित्तेरितरयोगवत् ॥ ८२ ॥

स्पष्टम्। वियोगवदिति पाठे तूच्छिष्छत्तावयं दृान्तः ॥ ८२ ॥

---

1 ज्ञाने ज्ञेयात्मकाखिलप्रपञ्चनाशोऽपि एवं आत्मनाशेन अपुरुषार्थत्वात् न मोक्षः इत्यर्थः

2 ऐश्वर्यान्तरसंबन्धवत्।

नेन्द्रादिपदयोगोऽपि तद्वत्[1] ॥ ८३ ॥

इदमपि स्पष्टम् ॥ ८३ ॥

अथेन्द्रियभौतिकत्वं निराकरोति—

न भूतप्रकृतिकत्वमिन्द्रियाणामाहङ्कारिकत्वश्रुतेः ॥ ८४ ॥

व्याख्यातमेतत्[2] ॥ ८४ ॥

वैशेषिकन्यायमते खण्डयति सूत्राभ्याम्—

न षट्पदार्थनियमस्तद्बोधान्मुक्तिः ॥ ८५ ॥

द्रव्यादयः षडेव पदार्थाः, तज्ज्ञानादेव मुक्तिरिति, यद्वैशेषिकमतं ; तन्न अन्यत्साधितप्रकृत्यादिपदार्थसत्वात्, तदविवेके मोक्षासम्भावादित्यर्थः ॥ ८५ ॥

षोडशादिष्वप्येवम् ॥ ८६ ॥

स्पष्टम् ॥ ८६ ॥

प्रसङ्गतोऽन्यं तत्सिद्धान्तं दूषयति—

नाणुनित्यता तत्कार्यत्वश्रुतेः ॥ ८७ ॥

अणूनां परमापरमाप्रकर्षकाष्ठापन्नपृथिव्यादीनां न नित्यता । परमाणु रूपास्तु सत्त्वादिगुणा नित्या एव ॥ ८७ ॥

'अण्व्यो मात्रा विनाशिन्यो
दशार्धानां च याः स्मृताः ।
ताभिः सार्धमिदं सर्वं
सम्भवत्यनुपूर्वशः ॥'

इति मनुवाक्ये तत्कार्यत्वश्रुतेरित्यर्थः ॥

1 इतरैश्वर्यवत् क्षयिष्णुत्वादित्यर्थः ।
2 द्वितीयाध्याये सूत्रं २० ।

ननु निरवयवस्य परमाणोः कथं कार्यत्वं घटते इत्यत्राह—

न निर्भागत्वं कार्यत्वात् ॥ ८८ ॥

श्रुतिसिद्धकार्यत्वान्यथानुपपत्त्या पृथिव्याद्यणूनां न निरवयवत्वम् ॥८८॥

दशार्धानां पञ्चभूतानां बाह्यद्रव्यप्रत्यक्षे उद्भूतरूपं प्रयोजकमिति मतं निराकरोति—

न रूपनिबन्धनात् प्रत्यक्षनियमः ॥ ८९ ॥

न रूपाभावात् अप्रत्यक्षत्वम्। किन्तु प्रत्यक्षप्रतिबन्धकजातिरूपसूक्ष्मत्वात् योगजधर्मादिरुक्तरूपाणामपि प्रत्यक्षसम्भवादित्यर्थः। वस्तुनोऽननुगमस्तु न दोषः ॥ ८९ ॥

न परिमाणचातुर्विध्यं द्वाभ्यां तद्योगात् ॥ ९० ॥

अणु महद्दीर्घं ह्रस्वमिति परिमाणचातुर्विध्यं न भवति। द्वाभ्यामणु महद्भ्यामेव तद्योगात्सर्वपरिमाणव्यवहारसम्भवादित्यर्थः ॥ ९० ॥

सामान्यानभ्युपगन्तुर्मतं निराकरोति—

अनित्यत्वेऽपि स्थिरतायोगात् प्रत्यभि
ज्ञानं सामान्यस्य ॥ ९१ ॥

अनित्यत्वनियमे व्यक्त्यननुगम इति यावत्। स्थिरतायोगादेकाकारप्रतीतिसत्त्वात् सामान्यस्य प्रत्यभिज्ञानसिद्धिरित्यर्थः ॥ ९१ ॥

अतस्तदपलापो न युक्त इत्याह—

न तदपलापस्तस्मात् ॥ ९२ ॥

स्पष्टम् ॥ ९२ ॥

अतद्व्यावृत्तिरूपत्वं न, सामान्यस्य विधिमुखप्रतीतिविषयत्वादित्याह–

नान्यनिवृत्तिरूपत्वं भावप्रतीतेः[1] ॥ ९३ ॥

---

1 स एवायमिति तद्भावप्रत्ययादित्यर्थः।

साहश्ये मतान्तराणि खण्डयति—

न तत्त्वान्तरं साहश्यं प्रत्यक्षोपलब्धेः ॥ ९४ ॥

प्रत्यक्षेण तद्गतभूयोधर्मवत्त्वस्यैव साहश्यत्वेनोपलब्धेर्न पदार्थान्तरं साहश्यमित्यर्थः ॥ ९४ ॥

निजशक्त्यभिव्यक्तिर्वा वैशिष्ट्यात्तदुपलब्धेः ॥ ९५ ॥

स्वाभाविकशक्तेः वयोवस्थादिभिरभिव्यक्तिसाहश्यमित्यपि न वैशिष्ट्यात्। शक्तिवैलक्षण्यतः साहश्यप्रतीतिः शक्तिप्रतीतिर्नापेक्षिते तु साहश्य धीरिति भावः ॥ ९५ ॥

न संज्ञासंज्ञिसम्बन्धोऽपि ॥ ९६ ॥

एतया संज्ञया संज्ञितः सम्बन्धोऽपि न साहश्यम् ॥ ९६ ॥

अत्र हेतुमाह—

न सम्बन्धनित्यतोभयानित्यत्वात् ॥ ९७ ॥

संज्ञासंज्ञिनोरुभयोरनित्यवात् तत्सम्बन्धस्यापि न नित्यता। अयं भावः। सम्बन्ध्युभयस्यानित्यत्वे तथैव सम्बन्धस्याप्यनित्यत्वम्। तया चानित्येन सम्बन्धेन अतीतवस्तुसाहश्यं वर्तमानवस्तुनि कथमिति ॥ ९७ ॥

ननु सम्बन्ध्यनित्यत्वेऽपि नित्यसम्बन्धः स्यात्, तत्राह—

नाजः[1] सम्बन्धः धर्मिग्राहकप्रमाणबाधात् ॥ ९८ ॥

सम्बन्धिनोः कादाचित्कविभाग एव सम्बन्धः कल्प्यते। अन्यथा स्वरूपेणैवोपपत्तौ सम्बन्धासिद्धेः। कादाचित्कविभागस्तु सम्बन्धानित्यत्व एव भवति। अतो धर्मिग्राहकमानबाधान्न नित्यसम्बन्ध इत्यर्थः ॥ ९८ ॥

नन्वेवं चेत्तर्हि का गतिस्समवायस्येत्यत आह—

1 अजः = अजन्यः = नित्यः।

न समवायोऽस्ति प्रमाणाभावात् ॥ ९९ ॥

स्पष्टम् ॥ ९९ ॥

प्रमाणाभावं विवृणोति—

उभयत्राप्यन्यथासिद्धेर्न प्रत्यक्षमनुमानं वा ॥ १०० ॥

उभयत्रापि वैशिष्ट्यप्रत्यक्षे तन्निवर्तकेऽनुमाने वा सम्बन्धिस्वरूपेणैवान्यथासिद्धेर्नोभयं तत्र प्रमाणमित्यर्थः। यथा समवायीति वैशिष्ट्यप्रतीत्या वाऽप्यतिरिक्तसम्बन्धसिद्धिः तद्वद्रूपवानित्यत्रापीति भावः ॥ १०० ॥

अथ क्षणिका एव पदार्था यत्रोत्पद्यन्ते, तत्र नश्यन्तीत्यतो न देशान्तरसंयोगेनानुमेयस्य कर्मणस्सिद्धिरिति नास्तिकाक्षेपं निराकरोति—

नानुमेयत्वमेव क्रियायाः नेदिष्ठस्य तत्तद्वतो
रेवापरोक्षप्रतीतेः ॥ १०१ ॥

भवेदेवं यद्यनुमेयैव क्रिया स्यात्, किन्तु निकटवर्तिनः क्रियाक्रियावतोः प्रत्यक्षप्रतीतिः वृक्षश्चलतीत्यस्ति यत इत्यर्थः ॥ १०१ ॥

देहे उक्तकल्पेषु विशेषमवधारयति—

न पाञ्चभौतिकं शरीरं बहूनामुपादानायोगात् ॥ १०२ ॥

स्पष्टम् ॥ १०२ ॥

बहूनां विजातीयानां स्थूलमेव शरीरमिति केचित्। तत्राह—

न स्थूलमिति नियमः आतिवाहिकस्यापि विद्यमानत्वात् ॥ १०३ ॥

लोकान्तरं लिङ्गदेहमतिवाहयतीत्यातिवाहिकं सूक्ष्मभौतिकं न स्वात त्र्यात तद्वते इति "छायावच्चित्रवच्चे"त्यत्र प्रसाधितम् ॥ १०३ ॥

गोलकातिरिक्तेन्द्रियोपपत्तये तेषां असम्बन्धकप्रकाशकत्वं निराकरोति—

नाप्राप्तप्रकाशकत्वमिन्द्रियाणामप्राप्तेः सर्वप्राप्तेर्वा ॥ १०४ ॥

अप्राप्तेः प्रदीपादीनां अप्राप्तप्रकाशकत्वादर्शनात्। असम्बन्धप्रकाशकत्वे

सर्वप्राप्तेर्वा व्यवहितादिसर्ववस्तूपलम्भापत्तिरित्यर्थः। तथा च विप्रकृष्टसूर्यादिसम्बन्धार्थमतिरिक्तमिन्द्रियं सिध्यतीति भावः ॥ १०४ ॥

नन्वेवं तेजस्साम्याच्चक्षुषः तेजसत्वमेवास्तु तत्राह—

न तेजोऽपसर्पणात् तैजसं चक्षुः वृत्तितस्तत्सिद्धेः ॥ १०५ ॥

तेजसः प्रभादेः आश्रयं असन्त्यज्यापसर्पणमन्यत्र गमनं दृष्टमिति कृत्वा चक्षुरपि तैजसं न वाच्यम्, यतो यथा प्राणो देहं सन्त्यज्य प्राणाख्यवृत्त्या बहिर्याति, तद्वत् वृत्तिभेदतः अतैजसं चक्षुरित्यर्थः ॥ १०५ ॥

एवंभूतवृत्तौ प्रमाणमाह—

प्राप्तार्थप्रकाशलिङ्गात् वृत्तिसिद्धिः ॥ १०६ ॥

स्पष्टम् ॥ १०६ ॥

वृत्तिस्वरूपं दर्शयति—

भागगुणाभ्यां तत्त्वान्तरं वृत्तिः सम्बन्धार्थं सर्पतीति ॥ १०७ ॥

विस्फुलिङ्गवत् विभक्तांशो भागः, गुणो रूपादिः। तथाच चक्षुरादिभागगुणाभ्यां अतिरिक्ता वृत्तिः तत्र हेतुः सम्बन्धार्थं सर्पतीति हेतौ अयमर्थः। वृत्तेर्विभक्तांशत्वे तदद्वारा चक्षुरादेः सम्बन्धासम्भवः। गुणत्वे च सर्वगुणासम्भवः। अतस्ताभ्यां भिन्नसम्बन्धांशविशेष एव। एतेन प्रसरणादिमान् बुध्यत एव बुद्धिवृत्तिरित्यवधेयम् ॥ १०७ ॥

नन्वेवं वृत्तीनां द्रव्यत्वे कथमिच्छादिषु वृत्तित्वव्यवहारः तत्राह—

न द्रव्यनियमःतद्योगात् ॥ १०८ ॥

न वृत्तिः द्रव्यमेवेति नियमः, यतः इच्छादिषु तद्योगात् स्थितिहेतुको वृत्तिशब्दयोगार्थसाम्यात् प्रतिग्रहादाविव वृत्ताविच्छादिषु च तुल्य एव वृत्तित्वव्यवहार इत्यर्थः। इच्छादिसर्ववृत्तीनां निरोधेनैव चित्तमरणादिति भावः ॥ १०८ ॥

ननु इन्द्रियाणां भौतिकाहङ्कारिकत्वश्रुत्योर्देशभेदेन व्यवस्थाऽस्तु तत्राह—

न देशभेदेऽप्यन्योपादानताऽस्मदादिवन्नियमः ॥ १०९ ॥

स्वर्गादिदेशभेदेनापीन्द्रियाणां न भूताद्युपादानकत्वम्। किन्तु अस्मदादीनामिव आहङ्कारित्वनियम एव। एकस्यैव लिङ्गस्य नानादेशसञ्चारमात्रश्रवणादित्यर्थः। देशभेदे सत्यपि पृथिव्याः. अन्यस्य अन्यादेरुपादानता न ॥१०९॥

निमित्तव्यपदेशात् पाञ्चभौतिकं शरीरमिति व्यपदेशः तर्हि भौतिकत्वश्रुतिः कथं तत्राह—

निमित्तव्यपदेशात् तद्व्यपदेशः ॥ ११० ॥

इन्द्रियाणां वृत्तिलाभे भूतानां निमित्तत्वेन व्यपदेशात भौतिकत्वव्यपदेश इत्यर्थः ॥ ११० ॥

स्थूलशरीरगतं विशेषं प्रसङ्गादवधारयति—

ऊष्मजाण्डजजरायुजोद्भिज्जसाङ्कल्पिकसांसिद्धिकं
चेति न नियमः ॥ १११ ॥

इतिः हेतौ। ऊष्मजाद्यनेकशरीरभेदसत्वाचाण्डजं जीवजमुद्भिज्जमिति त्रैविध्यनियमो न। "तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति अण्डजं जीवजमुद्भिज्जम्" इति श्रुतिस्तु प्रायिकाभिप्रायेणेति भावः। सङ्कल्पजाः सनकादयः। सांसिद्धिकाः तपआदिसिद्धिजाः। यथा रक्तबीजशरीरोत्पन्न शरीरादयः इति ॥ १११ ॥

वैशेषिकादिवैलक्षण्येन स्वोक्तं शरीरस्यैकोपादानकत्वं विवृणोति—

सर्वेषु पृथिव्युपादानमसाधारण्यात्
तद्व्यपदेशः पूर्ववत् ॥ ११२ ॥

सर्वशरीरेषु पृथिव्येवोपादानमसाधारण्यात्। तैजसादिव्यपदेशस्तु पूर्ववदिन्द्रिये भौतिकत्वव्यपदेशवदसाधारण्येनोपष्टम्भकत्वादेवेत्यर्थः ॥ ११२ ॥

ननु प्राणस्य शरीरे प्राधान्यात प्राण एव देहारम्भकोऽस्तु तत्राह—

न देहारम्भकस्य प्राणत्वमिन्द्रिय
शक्तितस्तत्सिद्धेः ॥ ११३ ॥

'सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च' इति सूत्रेऽन्तःकरणवृत्तेरेव प्राणत्वसिद्धेः शरीरारम्भकस्य न प्राणत्वम्। अन्तःकरणविगमेऽपि स्थूलशरीरोपलब्धेरित्यर्थः ॥ ११३ ॥

नन्वेवं प्राणस्य देहानुपादानत्वे तं विनापि देह उत्पद्येत तत्राह—

भोक्तुरधिष्ठानात् भोगायतननिर्माणम् अन्यथा पूतिभावप्रसङ्गात् ॥ ११४ ॥

भोक्तुः प्राणिनोऽधिष्ठानात् शुक्लशोणितात् शरीरनिर्माणम्। अधिष्ठानानङ्गीकारे भूपतितशुक्लशोणितस्येव तस्यापि पूतिभावप्रसङ्गादित्यर्थः॥ ११४ ॥

ननु कूटस्थस्य भोक्तुः कथं व्यापारस्तत्राह—

भृत्यद्वारा स्वाम्यधिष्ठितिर्नैकान्त्यात् ॥ ११५ ॥

प्राणद्वारा पुरुषस्याधिष्ठातृत्वं न साक्षादित्यर्थः। संयोगमात्रेणाधिष्ठातृत्वस्यातिप्रसक्तत्वात्तदत्र नोक्तम् ॥ ११५ ॥

आत्मनो नित्यमुक्तत्वमुपपादयति—

समाधिसुषुप्तिमोक्षेषु ब्रह्मरूपता ॥ ११६ ॥

असंप्रज्ञातसमाधिसुषुप्तिविदेहकैवल्येषु[1] प्रतिबिम्बरूपौपाधिकधर्मनिवृत्त्या परिपूर्णचित्स्वरूपेणावस्थानं भवति। तथाच प्रतिबिम्बादीनां तुच्छत्वान्नित्यमुक्त एव पुरुष इत्यर्थः ॥ ११६ ॥

तर्हि समाधिसुषुप्तिभ्यां मोक्षस्य को विशेषस्तत्राह—

द्वयोः सबीजमन्यत्र तद्धतिः ॥ ११७ ॥

समाधिसुषुप्त्योः बन्धसंस्कारवत्त्वम्। मोक्षे तु तदभाव एव विशेषः ॥ ११७ ॥

1 सवत्रात्र बुद्धिवृत्तिविलयः समानः

ननु समाधिसुषुप्ती दृष्टार्थे, मोक्षे तु किं प्रमाणम्? तत्राह—

द्वयोरिव त्रयस्यापि दृष्टत्वात्[1] न तु द्वौ ॥ ११८ ॥

लोके द्वयोरिव श्रुतौ त्रयस्यापि दृष्टत्वान्न द्वावेवेत्यर्थः ॥ ११८ ॥

ननु समाधिसुषुप्त्योः सवासनत्वे वासनावशात् तदा कथं नार्थाकारवृत्तिः तत्राह—

वासनया न स्वार्थख्यापनं दोषयोगेऽपि न
निमित्तस्य प्रधानबाधकत्वम् ॥ ११९ ॥

अपिस्समाधिसमुच्चयार्थः, समाधिनिद्रासमाधिदोषयोगे वासनया न स्वार्थख्यापनं भवति, यतो निमित्तस्य गुणीभूतसंस्कारस्य समाध्यादिबाधकत्वं न सम्भवतीत्यर्थः ॥ ११९ ॥

ननु जीवन्मुक्तस्य पूर्वसंस्काराणां सकृद्योगेन नाशादुत्पन्नज्ञानत्वाच्च सर्वत्रोपेक्षारूपज्ञानेन संस्कारान्तरानुत्पादात् सहकारिसंस्काराभावात्कथं प्रारब्धभोगः स्यात् तत्राह—

एकः संस्कारः क्रियानिर्वर्तको न तु प्रतिक्रियं संस्कार
भेदः बहुकल्पनाप्रसक्तेः ॥ १२० ॥

एकेनैव संस्कारेण सर्वा प्रारब्धभोगक्रिया समाप्यते, न तु प्रतिभोगक्रियं सस्कारभेदः । कल्पनागौरवादित्यर्थः ॥ १२० ॥

बाह्यबुद्ध्यभावादुद्भिज्जे शरीरत्वं नास्तीति नास्तिकाक्षेपमपाकरोति—

न बाह्यबुद्धिनियमः वृक्षगुल्मलतौषधि
वनस्पतितृणवीरुधादीनामपि
भोक्तृभोगायतनत्वं पूर्ववत् ॥ १२१ ॥

1 अनुमितत्वादिति भाष्यम् ।

बाह्यबुद्ध्यैव शरीरत्वमिति न नियमः, यतो वृक्षादीनामपि भोगायतनत्वं पूर्ववत्, मनुष्यादेः भोक्तुरनधिष्ठाने पूतिभाववत् वृक्षादीनामपि तदनधिष्ठाने शुष्कत्वापत्तेरित्यर्थः। तथाच श्रुतिः "अस्य यदेकां शाखां जीवो जहाति, अथ सा शुष्यती"ति। दैर्घ्यभयात् 'नियमः' इत्यत्र भेदेन सूत्रद्वयकरणेऽप्ययमेवार्थः ॥ १२१ ॥

किञ्च—

स्मृतेश्च ॥ १२२ ॥

किञ्च स्मृतेश्च बाह्यैव बुद्धिरित्यनियमेनान्तराऽप्यस्तीत्यण्डजादीनां यथा भोक्तृभोगायतनत्वं पूर्ववत्तथा वृक्षादीनामपि।

"शरीरजैः कर्मदोषैः याति स्थावरतां"[1] इति स्मृतेः तेषां शरीरत्वसिद्धिरित्यर्थः ॥ १२२ ॥

तर्हि तेषां चेतनत्वे कुतो न धर्माधर्मोत्पत्तिः तत्राह—

न देहमात्रतः कर्माधिकारित्वं वैशिष्ट्यश्रुतेः ॥ १२३ ॥

ब्राह्मणादिदेहवैशिष्ट्येनैव कर्माधिकारित्वेन श्रुतेः, सर्वदेहावच्छेदेन कर्माधिकारः इत्यर्थः ॥ १२३ ॥

अधिकारिभेदेन कर्मादिव्यवस्थां दर्शयति—

त्रिधा त्रयाणां व्यवस्था कर्मदेहो
पभोगदेहोभयदेहाः ॥ १२४ ॥

त्रयाणामुत्तममध्यमाधमानां सर्वप्राणिनां देहाद्यास्त्रिधा व्यवस्था। यथा कर्म देहःऋषीणां, भोगदेहः देवानांस्थावरादीनां च, उभयदेहः राजर्षीणामिति ॥ १२४ ॥

अनुशयिनो विरक्तस्योक्तव्यवस्थाबहिर्भूतमपि शरीरमाह—

न किञ्चिदप्यनुशयिनः[2] ॥ १२५ ॥

---

1 'वाचिकैः पक्षिमृगतां मानसैः अन्त्यजातिताम्' इत्युत्तरार्धम् ॥

2 'विद्यादनुशयं द्वेष्यं पश्चात्तापानुतापयोः' इति वाक्यात् अनुशयः वैराग्यम्।

यथा जडभरतादीनां ज्ञानमात्रप्रधानो देहः ॥ १२५ ॥

ईश्वरानभ्युपगमात् ज्ञानेच्छादिनित्यत्वं प्रतिषेधति—

न बुद्ध्यादिनित्यत्वमाश्रयाविशेषेऽपि
वह्निवत् ॥ २२६ ॥

बुद्धिरत्राध्यवसायाख्या वृत्तिः। यथा लौकिकवह्निदृष्टान्तेन आवरणतेजसोऽप्यनित्यत्वानुमानं, तथा अस्मदादिबुद्धिदृष्टान्तेन सर्वबुद्ध्यादीनामनित्यत्वानुमानादित्यर्थः ॥ १२६ ॥

किञ्च सत्याश्रय ईश्वरे सिद्धे तस्मिंस्तेषां नित्यत्वं वाच्यम्। स एवासिद्धः इत्याह—

आश्रयासिद्धेश्च ॥ १२७ ॥

स्पष्टम् ॥ १२७ ॥

ननु योगसिद्धबलवदादिभिरेव ब्रह्माण्डादिसजनादीश्वरान्यथासिद्धिः कृता या सैव न सम्भवति, योगसिध्देरेवाभावादत आह—

योगसिद्धयोऽप्यौषधादिसिद्धिवन्नापलापनीयाः ॥ १२८ ॥

अत एव योगसूत्रम् " जन्मौषधिमन्त्रतपस्समाधिजास्सिद्धयः " इति ॥ ९२८ ॥

पूर्वं पृथक् चेतनसाधनाय प्रतिषिद्धमिदानीं परमतखण्डनाय भूतचैतन्यं प्रतिषिध्यते—

न भूतचैतन्यं प्रत्येकादृष्टेः सांहत्येऽपि च
सांहत्येऽपि च ॥ १२९ ॥

अर्थः पूर्ववत। वीप्साऽपि ॥ १२९ ॥

स्वसिद्धान्तविरुद्धार्थभाषिणो ये कुवादिनः।
पञ्चमे तान्निराकृत्य स्वसिद्धान्तो दृढीकृतः ॥

इति श्रीभावगणेशात्मज-श्रीधरविरचितायां-
साङ्ख्यसूत्रप्रवचनवृत्तौ परमतनिर्जयाध्यायः
पञ्चमः समाप्तः



# अथ तन्त्राध्यायः

## षष्ठः

---

उक्तं शास्त्रार्थं सारतः सङ्कलयन्[1] उपसंहरति षष्ठाध्यायेन—

अस्त्यात्मा नास्तित्वसाधनाभावात् ॥ १ ॥

नास्तित्वे साधकं[2] अस्तित्वे बाधकम्, तदभावोपन्यसनेन सामान्येन साधने प्रमाणानपेक्षेति सूचितम्। अतस्तद्विवेकमात्रं कर्तव्यमिति भावः ॥ १ ॥

अथ विवेकं हेतुद्वयेन साधयति—

देहादिव्यतिरिक्तोऽसौ वैचित्र्यात् ॥ २ ॥

आत्मा देहादिप्रकृत्यन्तेभ्यो भिन्नः, वैचित्र्यात्। अपरिणामित्वादित्यर्थः देहादीनां परिणामित्वं प्रत्यक्षादिभिः सिद्धम्। पुरुषस्यापरिणामित्वं तु "सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामात्"[3] इति योगसूत्रतद्भाष्यवार्तिकेषु प्रसाधितम् ॥ २ ॥

हेत्वन्तरमाह—

षष्ठीव्यपदेशादपि ॥ ३ ॥

'राज्ञः पुरुषः' इतिवदात्मनो देह इति षष्ठीव्यपदेशो भेदे एव सम्भवतीत्यर्थः ॥ ३ ॥

---

1 स्थूणानिखनन्यायेनेति यावत्।

2 मूले साधनपदं साधकहेतुपरमिति भावः।

3 यदि पुरुषोऽपि चित्तवत् परिणामी स्यात् तदा, क्षिप्तमूढविक्षिप्तैकाग्रतावस्थितं चित्तं वृत्तिमत् आनिरोधात् सर्वथा पुरुषेणानुभूयमानं विरुद्ध्येत, अतः सदा ज्ञातविषय-एवायं अपरिणामी इत्यर्थः (यो. 4-18)।

ननु 'राहोः शिरः' 'शिलापुत्रकस्य शरीरम्' इतिवदयमपि भवतु, तत्राह—

न शिलापुत्रवत्, धर्मिग्राहकमानबाधात्[1] ॥ ४ ॥

शिलापुत्रादौ धर्मिग्राहकप्रत्यक्षेण भेदबाधात् स न सिद्ध्यति। प्रकृते तु न शिलापुत्रवद्भाव इत्यर्थः ॥ ४ ॥

अथ पुरुषार्थमवधारयति—

अत्यन्तदुःखनिवृत्त्या कृतकृत्यता[2] ॥ ५ ॥

स्पष्टम् ॥ ५ ॥

नन्वत्यन्तदुःखनिवृत्त्या सुखस्यापि निवृत्तेः तुल्यायव्ययत्वेन न सा पुरुषार्थस्तत्राह—

यथा दुःखात् क्लेशः पुरुषस्य, न
तथा सुखाभिलाषः[3] ॥ ६ ॥

ल्यब्लोपे पञ्चमी[4]। दुःखं प्राप्येत्यर्थः। तथा च न दुर्बलसुखाभिलाषः बलवद्द्वेषविषयदुःखनिवृत्त्यर्थप्रवृत्तौ प्रतिबन्धक इति भावः। अत एव लोकोक्तिः —

"अभ्यर्थनाभङ्गभयेन साधुः

माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे "[5] इति ॥ ६ ॥

---

1 तथाच नायं गौणो व्यवहारः। आत्मनः शरीरादिभ्यो भेदेनानुभावकं यन्मानं—अधिकारिभेदेन अवस्थाभेदेन च प्रमाणभूतं प्रत्यक्षानुमानशब्दात्मकं तेन बाधनात इति भावः।

2 अन्तमतिक्रान्तया त्रिविधदुःखनिवृत्त्यैव अस्य कृतार्थता भवति इत्यर्थः।

3 तथा च न सुखावाप्तिः परमपुरुषार्थः। दुःखात्यन्तनिवृत्तेरेव इतो बलीयस्त्वादिति भावः।

4 'ल्यब्लोपे कर्मण्यधिकरणे च' इति वार्तिकात्, प्रसादात् प्रेक्षते, प्रासादमारुह्य प्रेक्षते, इतिवत्।

5 कुमारसं. 1.53.

अपि च सुखापेक्षया दुःखस्य बहुलत्वादपि तन्निवृत्तिः पुरुषार्थ इत्याह—

कुत्रापि कोऽपि सुखीति[1] ॥ ७ ॥

अनन्ततृणवृक्षादियोनिषु कश्चिदेव मनुष्यादिः सुखी भवतीत्यर्थः ॥ ७ ॥

तदपि सुखं दुःखसंपृक्तत्वाद्विषसंपृक्तमधुवद्धेयमित्याह—

तदपि दुःखशबलमिति दुःखपक्षे निःक्षिपन्ते विवेचकाः ॥ ८ ॥

तथा च योगसूत्रम्—"परिणामतापसंस्कारदुःखैः गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः"[2] इति ॥ ८ ॥

आशङ्क्य समाधत्ते—

सुखलाभाभावादपुरुषार्थत्वमिति चेन्न द्वैविध्यात् ॥ ९ ॥

ननु सुखोपरक्तैव दुःखनिवृत्तिः पुरुषार्थः, अतस्तत्त्वतो दुःखनिवृत्तौ सुखलाभाभावादपुरुषार्थत्वमिति चेन्न, द्वैविध्यात् सुखवत्, दुःखाभावस्यापि स्वेच्छाविषयत्वेन पुरुषार्थद्वैविध्यादित्यर्थः ॥ ९ ॥

शङ्कते—

निर्गुणत्वमात्मनोऽसङ्गत्वादिश्रुतेः ॥ १० ॥

असङ्गत्वनिर्गुणत्वादिश्रवणादात्मनि दुःखनिवृत्तेः नित्यसिद्धत्वान्न तस्याः पुरुषार्थत्वं घटते इति ॥ १० ॥

समाधत्ते—

परमधर्मत्वेऽपि तत्सिद्धिरविवेकात ॥ ११ ॥

दुःखादिगुणानां चित्तधर्मत्वेऽपि प्रतिबिम्बसम्बन्धेन सिद्धिरविवेकान्निमित्ताद्भवति। ततस्तेन सम्बन्धेन दुःखनिवृत्तिः पुरुषार्थ इति भावः। प्रपञ्चितमेतत् प्रथमाध्याये ॥ ११ ॥

---

1 इतिः हेतौ तस्मात् न सुखं परमपुरुषार्थः इति शेषः।

2 यो. सू. 2.15.

नन्वविवेकः किंमूलकः? इत्याकांक्षायामाह—

अनादिरविवेकोऽन्यथा दोषद्वयप्रसक्तेः ॥ १२ ॥

अनादिवासनाघटितप्रवाहरूपेण। अन्यथा सादित्वे स्वत एवोत्पादे मुक्तस्यापि बन्धापत्तिः। कर्मादिजन्यत्वे च कर्मादिकं प्रति तस्य कारणत्वं न स्यादिति दोषद्वयप्रसक्तिः स्यादित्यर्थः ॥ १२ ॥

ननु किं चेतनवदनादिर्नेत्यत आह—

न नित्यः स्यादात्मवदन्यथानुच्छित्तिः ॥ १३ ॥

आत्मवदखण्डानादिर्न भवति। किन्तु प्रवाहरूपेणैव। अन्यथा आत्मतुल्यानादित्वे श्रुतिसिद्धोच्छेदानुपपत्तिरित्यर्थः ॥ १३ ॥

उक्तमविवेकोच्छेदकं स्मारयति—

प्रतिनियतकारणनाश्यत्वमस्य ध्वान्तवत्[1] ॥ १४ ॥

एतन्नियतकारणात्तदुच्छित्तिः ध्वान्तवदित्यनेन गतार्थम् ॥ १४ ॥

विवेकेनैवाविवेको नाश्यत इति प्रतिनियमस्य ग्राहकमाह—

अत्रापि प्रतिनियमोऽन्वयव्यतिरेकात् ॥ १५ ॥

ध्वान्तालोकयोरिव प्रकृतेऽपि प्रतिनियमः शुक्तिरजतादिषु अन्वयव्यतिरेकाभ्यामेव ग्राह्य इत्यर्थः ॥ १५ ॥

बन्धे स्वाभाविकप्रकारान्तरासंभवादविवेक एव बन्धहेतुरित्युक्तं स्मारयति—

प्रकारान्तरासम्भवादविवेक एव बन्धः ॥ १६ ॥

1 'अन्धंतम इवाज्ञानं दीपवच्चेन्द्रियोद्भवम्। यथा सूर्यस्तथा ज्ञानं यद्विप्रर्षे विवेकजम्॥' इति विष्णुपुराणे। अनेन अज्ञानम्, इन्द्रियभवं ज्ञानम्, विवेकजं ज्ञानं च लक्षितम्॥

स्पष्टम् ॥ १६ ॥

मुक्तेः कार्यत्वेऽप्यनावृत्तिश्रुतिबलान्नित्यत्वमेवातो न मुक्तस्य पुनर्बन्ध इत्याह—

न मुक्तस्य पुनर्बन्धयोगोऽप्यनावृत्तिश्रुतेः ॥ १७ ॥

भावकार्यस्यैवानित्यत्वमिति भावः। अपिः पूर्वसूत्रार्थसमुच्चये ॥ १७ ॥

मुक्तस्य पुनर्बन्धस्वीकारे वाधकमाह—

अपुरुषार्थत्वमन्यथा ॥ १८ ॥

स्पष्टम् ॥ १८ ॥

अपुरुषार्थत्वे हेतुमाह—

अविशेषापत्तिरुभयोः ॥ १९ ॥

भाविबन्धसामान्येन समग्रसुषुप्तिमुक्तयोः अविशेषापत्तेः। अतो मुक्तिः पुरुषार्थो न स्यादिति भावः ॥ १९ ॥

नन्वेवं मुक्तेः कार्यत्वे नित्यमुक्तत्वं आत्मनः कथं तत्राह—

मुक्तिरन्तरायध्वस्तेर्न परः ॥ २० ॥

अन्तरायस्वरूपाच्छादकं ध्वंसात्परो मुक्तिपदार्थो न। अयं भावः—यथा शुक्लस्वभास्य स्फटिकस्यावारकजपासंयोगवशात् रक्तत्वं तन्निवृत्तिश्च व्यवहारमात्रमिति, तथा नित्यमुक्तस्य पुंस आवारकप्रतिबिम्बवशात् बन्धमोक्षव्यवहारमात्रमिति ॥ २० ॥

वस्तुतस्तु दुःखप्रतिबिम्बस्वरूपबन्धस्वीकारेऽपि साक्षात्सम्बन्धेन निर्दुःखतारूपनित्यप्रतिपादकश्रुतेः न विरोध इत्याह—

तत्राप्यविरोधः[1] ॥ २१ ॥

स्पष्टम्। समाप्तोऽयं विचारः ॥ २१ ॥

1 अन्तरायध्वंसस्यैव मोक्षत्वेऽपि पुरुषार्थत्वाविरोधः इत्यर्थः ॥

अथ तृतीयाध्यायोक्तज्ञानसाध्यान्युपसंह्रियन्ते। तत्र मन्दाद्यधिकारिसत्त्वात् श्रवणमात्रेण न साक्षात्कारनियम इत्याह—

अधिकारित्रैविध्यान्न नियमः[1] ॥ २२ ॥

योगोऽप्यपेक्षते इति भावः ॥ २२॥

किञ्च कोमलकण्टकन्यायेन जातेऽपि साक्षात्कारेऽविवेकोन्मूलनप्रयोजकतद्दार्ढ्यार्थं श्रवणमननोत्तरेषां निदिध्यासनादीनां नियमोऽस्तीत्याह—

दार्ढ्यार्थमुत्तरेषाम् ॥ २३ ॥

नियम इत्यनुषज्यते ॥ २३ ॥

उत्तराण्येव साधनान्याह—

स्थिरसुखमासनमिति न नियमः ॥ २४ ॥

यतः स्थिरसुखमासनमित्युक्तमतो न पद्मासनादिनियमः इत्यर्थः ॥ २४॥

मुख्यं साक्षात्कारसाधनमाह—

ध्यानं निर्विषयं मनः ॥ २५॥

वृत्तिनिरोधान्निर्विषयं चित्तं ध्यानं योग इत्यर्थः। कार्यकारणयोरभेदोपचारः ॥ २५ ॥

ननु योगायोगयोः पुरुषस्याविशेषात् किं योगेनेत्याशङ्क्य, योगस्य ज्ञानद्वारा मोक्षफलकत्वे सत्यपि दुःखोपरागनिवृत्तिरूपमवान्तरफलं व्युत्थानदशातो विशेषमाह—

उभयथाऽप्यविशेषश्चेन्नैवमुपरागनिरोधाद्विशेषः[2] ॥ २६ ॥

भावस्तूक्त एव ॥ २६ ॥

---

1 ज्ञानधिकारिणः उत्तममध्यमभेदात् इत्यर्थः। श्रवणानन्तरमेव मानससाक्षात्कार इति नियमो नास्तीत्यर्थः।

2 वृत्तिप्रतिबिम्बापगमात् योगावस्थायां अयोगावस्थातो विशेषः पुरुषस्येत्यर्थः।

ननु निस्सङ्गे कथमुपराग इत्याशङ्कायां उक्तं स्मारयति—

निस्सङ्गेऽप्युपरागोऽविवेकात् ॥ २७ ॥

स्पष्टम् ॥ २७ ॥

एतदेव विवृणोति—

जपास्फटिकयोरिव नोपरागः किन्त्वभिमानः ॥ २८ ॥

यथा जपास्फटिकयोः नोपरागः, किन्तु जपाप्रतिबिम्बवशात् उपरागाभिमानमात्रम्, एवं बुद्धिप्रतिबिम्बवशात् पुरुषेऽपि। एवं च न निस्सङ्गत्वहानिरित्यर्थः ॥ २८ ॥

यथोक्तोपरागनिरोधोपायमाह—

ध्यानधारणाभ्यासवैराग्यादिभिः तन्निरोधः[1] ॥ २९ ॥

ध्यानादिभिर्योगोक्तैः ॥ २९ ॥

चित्तनिष्ठध्यानादिना पुरुषस्योपरागनिरोधे पूर्वाचारसिद्धं द्वारमाह—

लयविक्षेपयोर्व्यावृत्त्येत्याचार्याः ॥ ३० ॥

लयः निद्रा, विक्षेपः प्राणादिवृत्तयः। तेषां निरोधेनोपरागनिवृत्तिर्भवतीति योगाचार्या आहुः। तदेवं योगादेव ज्ञानद्वारा मोक्षान्तरायध्वंस इति प्रघट्टकार्थः ॥ ३० ॥

चित्तप्रसादे जाते ध्यानादौ न गुहादिस्थाननियमः इत्याह—

न स्थाननियमः चित्तप्रसादात् ॥ ३१ ॥

ल्यब्लोपे पञ्चमी। प्रसादं प्राप्येत्यर्थः। तथा चित्तप्रसादार्थं शास्त्रे गृहादिस्थानमुद्दिष्टं इति भावः ॥ ३१ ॥

---

1 समाधिद्वारकं ध्यानं योगस्य कारणम्, ध्यानस्य कारणं धारणा, धारणाया, कारणं चित्तस्थैर्यसाधनानुष्ठानम्। अभ्यासस्य कारणम् विषयवैराग्यम्, तस्यापि दोषदर्शनम् इति ध्येयम्।

पूर्वोक्तं प्रकृतेः मूलकारणत्वमुपसंहरति—

प्रकृतेराद्योपादानताऽन्येषां कार्यत्वश्रुतेः ॥ ३२ ॥

महदादीनां कार्यत्वश्रुतेः प्रकृतिः मूलकारणमित्यर्थः ॥ ३२ ॥

नित्यत्वेऽपि पुरुषस्य नोपादानता, अपरिणामित्वेनायोग्यत्वात् इत्याह—

नित्यत्वेऽपि नात्मनो योग्यत्वाभावात् ॥ ३३ ॥

स्पष्टम् ॥ ३३ ॥

ननु "बह्वीः प्रजाः पुरुषात् सम्प्रसूताः" इति श्रुतेः पुरुषस्य कारणत्वावगमात् विवर्तादिवादाः आश्रयणीयाः इत्याशङ्क्याह—

श्रुतिविरोधान्न कुतर्कापसदस्यात्मलाभः ॥ ३४ ॥

पुरुषकारणतायां ये ये पक्षाः सम्भाविताः ते सर्वे श्रुतिविरुद्धा इत्यतः तदभ्युपगन्तॄणां कुतार्किकाधमानां आत्मस्वरूपज्ञानं न भवतीत्यर्थः। तस्मात्संयोगमात्रेणाधिष्ठानकारणत्वमात्रपरैव श्रुतिरिति भावः ॥ ३४ ॥

प्रकृतेरहङ्कारादौ परम्पराकारणत्वेऽपि अनुवृत्तिरस्ति अतो लाघवादणोरिवोपादानत्वमक्षतमित्याह—

पारम्पर्येऽपि प्रधानानुवृत्तिरणुवत् ॥ ३५ ॥

स्पष्टम् ॥ ३५ ॥

प्रकृतेः व्यापकत्वमुपसंहरति—

सर्वत्र कार्यदर्शनात् विभुत्वम् ॥ ३६ ॥

न परिच्छिन्नं सर्वोपादानमित्यत्र व्याख्यातम् ॥ ३६ ॥

ननु परिच्छिन्नत्वेऽपि अगत्या सर्वत्र कार्योत्पत्तिरस्तु तत्राह—

गतियोगेऽप्याद्यकारणताहानिरणुवत् ॥ ३७ ॥

गतियोगेन सर्वत्र कार्योपपादनेऽपि परिच्छिन्नत्वेनोत्पत्तिमत्त्वान्नाद्य-कारणता अणूनां सूक्ष्मभूतानामिव। उक्तं चैतत् "उत्पत्तिश्रुते"रित्यत्र प्रसिद्ध षडादिपदार्थेभ्योऽतिरिक्तं प्रधानमिति ॥ ३७ ॥

न षडादिनियम[1] इत्याह—

प्रसिद्धाधिक्यं[2] प्रधानस्य न नियमः ॥ ३८ ॥

स्पष्टम् ॥ ३८ ॥

सत्त्वादयो न प्रकृतिधर्माः। किन्तु तद्रूपैव प्रकृतिरित्याह—

सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वात् ॥ ३९ ॥

गुणसाम्येऽप्युदाहृतवाक्यात्,

"गुणेभ्यः क्षोभ्यमानेभ्यः त्रयो देवा विजज्ञिरे।"

इति वाक्याच्च गुणरूपैव प्रकृतिः लाघवात्। उपपादितश्च सत्त्वादौ गुणव्यवहारः द्रव्यत्वेऽपि ॥ ३९ ॥

प्रधानस्याभोक्तृत्वेऽप्युपपादितां प्रधानसृष्टिं स्मारयति—

अनुपभोगेऽपि पुमर्थं सृष्टिः प्रधानस्योष्ट्रकुङ्कुमवहनवत् ॥ ४० ॥

व्याख्यातमेतत तृतीयाध्याये ॥ ४० ॥

विचित्रसृष्टौ निमित्तमाह-

कर्मवैचित्र्यात् सृष्टिवैचित्र्यम् ॥ ४१ ॥

कर्मादृष्टम् ॥ ४१ ॥

---

1 द्रव्यादिषु षटत्वादिनियमो नास्तीत्यर्थः।

2 प्रसिद्धेभ्यो नगद्रव्येभ्यः अतिरिक्तत्वमित्यर्थः।

सत्त्वादीनां न्यूनाधिकभावेन योगो वैषम्यं, तदभावः साम्यम्। ताभ्यां सृष्टिप्रलयादिरूपविरुद्धकार्यद्वयम् प्रधानाद्घटते इत्याह—

साम्यवैषम्याभ्यां कार्यद्वयम्[1] ॥ ४२ ॥

स्पष्टम् ॥ ४२ ॥

चेतनोद्देशान्नियमः कण्टकमोक्षवदित्यत्रोक्तमुपसंहरति—

विमुक्तबोधान्न सृष्टिः प्रधानस्य लोकवत् ॥ ४३ ॥

विमुक्तस्य विविक्तपुरुषस्य बोधः साक्षात्कारो यस्य तं प्राप्येति। ल्यब्लोपे पञ्चमी। शेषं व्याख्यातं तत्सूत्रे ॥ ४३ ॥

अत एव मुक्त्यर्थं प्रधानप्रवृत्तावपि न मुक्तस्य भुक्तादिभ्योऽविवेकाभावादित्याह—

नान्योपसर्पणेऽपि मुक्तोपभोगो निमित्ताभावात्[2] ॥ ४४ ॥

स्पष्टम् ॥ ४४ ॥

अद्वैतखण्डनमुपसंहरति—

पुरुषबहुत्वं व्यवस्थातः[3] ॥ ४५ ॥

व्याख्यातम् ॥ ४५ ॥

उपाधिभेदेन व्यवस्थामाशङ्क्य परिहरति—

उपाधिश्चेत् तत्सिद्धौ पुनर्द्वैतम् ॥ ४६ ॥

उपाधिनैवाद्वैतभङ्गः इत्यर्थः ॥ ४६ ॥

---

1 सत्त्वादिगुणत्रयं प्रधानम्, तेषां गुणानां न्यूनातिरिक्तभावेन संहननम् वैषम्यम्, तद्भावः साम्यम्, ताभ्यां हेतुभ्यां एकस्मादेव विरुद्धकार्यद्वयं भवतीत्यर्थः।

2 अविवेकादीनामभावात् इत्यर्थः।

3 बन्धमोक्षव्यवस्थातः इत्यर्थः।

ननूपाधयोऽप्याविद्यका इति न तैरद्वैतभङ्गः इत्याशङ्क्याह—

द्वाभ्यामपि प्रमाणविरोधः ॥ ४७ ॥

अविद्या पुरुष इति द्वाभ्यामप्यङ्गीकृताभ्यामद्वैतश्रुतिविरोधस्तदवस्थ एवेत्यर्थः ॥ ४७ ॥

अपरमपि दूषणद्वयमाह—

द्वाभ्यामप्यविरोधान्न पूर्वमुत्तरं च साधकाभावात् ॥ ४८ ॥

द्वाभ्यामङ्गीकृताभ्यां पूर्वं पूर्वपक्षोत्थानं भवतां न घटते। अयं भावः- अविद्यायास्सत्त्वेऽपि तस्याः पारमार्थिकसत्ताऽभावात् नाद्वैतहानिः यथा भवन्मते, तथा अस्मन्मते प्रकृतिपुरुषस्वीकारेऽपि प्रकृतेः परिणामित्वेन पारमार्थिकसत्ताऽभावान्नाद्वैतक्षतिरिति पूर्वपक्षाभावः इति, पुरुषनानात्वस्वीकारात् अस्यैव भवत्सु पूर्वपक्षाभाव इति, अतो दूषणान्तरमाह—उत्तरं चेत्यादिना। अद्वैतवादिनां उत्तरं सिद्धान्तश्च न घटते, आत्मसाधकप्रमाणाभावात् । भावे तेनैवाद्वैतक्षतिरित्यर्थः। स्वमते द्वैतश्रुतेः विजातीयपारमार्थिकसदभाव एवार्थ इति श्रुतिविरोध इति बोध्यम् ॥ ४८ ॥

ननु स्वप्रकाशतयाऽऽत्मा सेत्स्यतीति तत्राह—

प्रकाशतस्तत्सिद्धौ कर्मकर्तृविरोधः ॥ ४९ ॥

चैतन्यरूपप्रकाशतश्चैतन्यसिद्धौ कर्मकर्तृविरोध इत्यर्थः। स्ववृत्तिक्रियाजन्यफलभागित्वं कर्मत्वम्। क्रियाश्रयत्वं कर्तृत्वम्। इदं च विरुद्धम्। अस्मन्मते तु विशिष्टावच्छेदेन ग्राह्यग्राहकतेति न विरोधः[1] इत्यादि भाष्येऽप्यनुसन्धेयम् ॥ ४९ ॥

ननु पुंनिष्ठचैतन्यप्रकाशत्वमेवास्तु पुंसः, एवं चेन्न कर्मकर्तृविरोधः इत्यत आह-

जडव्यावृत्तो जडं प्रकाशयति चिद्रूपः ॥ ५० ॥

---

1 यथा सूर्ये जलद्वारा प्रतिविम्बरूपस्वसम्बन्ध इति भावः।

सूर्यादिवन्न चेतनचैतन्याख्यं प्रकाशरूपं धर्मान्तरमस्ति। किन्तु निर्धर्मकचैतन्यस्वरूप एव पुरुषो जडवर्गं प्रकाशयति। स च जडव्यावृत्तिमात्रात् चिदुच्यते। अतो नोक्ताशङ्केति भावः ॥ ५० ॥

ननु गौण्या अद्वैतश्रुतेः किं प्रयोजनं तत्राह—

न श्रुतिविरोधो रागिणां वैराग्याय तत्सिद्धेः ॥ ५१ ॥

निष्प्रयोजकतया अद्वैतश्रुतिविरोधस्तु नास्ति। चेतनातिरिक्ते वैराग्यार्थमद्वितीयचैतन्यपारमार्थिकसत्त्वप्रतिपादनेन तत्सिद्धेः प्रयोजन सिद्धेरित्यर्थः ॥ ५१ ॥

ननु शुक्तिरजतवदसन्नेव प्रपञ्चोऽस्तु, किमर्थं श्रुतेर्गौणत्वं कल्प्यते तत्राह-

जगत्सत्यत्वमदुष्टकरणजन्यत्वात् बाधकाभावात् ॥ ५२ ॥

बाधकाभावाददुष्टकारणजन्यत्वाच्च ज्ञानस्य, जगतः सत्यत्वमेव ॥ ५२ ॥
न केवलं वर्तमानदशायामेव प्रपञ्चः सन्, अपि तु सदैवेत्याह-

प्रकारान्तरासम्भवात्सदुत्पत्तिः ॥ ५३ ॥

पूर्वोक्तयुक्तिभिरसदुत्पादासम्भवात् सत एव कार्यस्याभिव्यक्तिर्भवतीत्यर्थः। प्रतिपादितं चैतदधस्तात् ॥ ५३ ॥

ताटस्थ्यमुपसंहरति-

अहङ्कारः[1] कर्ता न पुरुषः ॥ ५४ ॥

अहङ्कारोत्तरमेव प्रवृत्तिदर्शनादिति भावः। पूर्वं च धर्मादिकमेव बुद्धेरिति यदुक्तं[2], तदेकस्यैवान्तःकरणस्य वृत्तिभेदाशयेन। सौरपुराणे च-

"कर्तृत्वं नैव भोक्तृत्वं आत्मनोऽस्ति कथञ्चन ॥

अहङ्काराविवेकेन कर्तृत्वमिति निश्चयः" इत्युक्तम् ॥ ५४ ॥

---

1 अभिमानवृत्तिकं अन्तःकरणं अहङ्कारः।

2 अध्यायः ५. सूत्रम् २५ ।

तथापि भोगः पुरुषस्यैव भवतीत्याह–

चिदवसाना भुक्तिः तत्कर्मार्जितत्वात् ॥ ५५ ॥

अहङ्कारस्य पुरुषकर्मार्जितत्वात् तत् प्रवृत्तिसाध्योऽपि भोगः पुरुषस्यैव। प्रतिपादितमेतत् "कर्मार्जितत्वात्तदर्थमभिचेष्टा लोकवत्" इत्यत्र ॥ ५५ ॥

ब्रह्मलोकान्तर्गत्याऽपि न कृतार्थतेत्युक्तमुपसंहरति—

चन्द्रादिलोकेऽप्यावृत्तिः निमित्तसद्भावात् ॥ ५६ ॥

निमित्तमविवेकः ॥ ५६ ॥

ननु तत्तल्लोकवासिजनोपदेशात् कृतार्थता स्यात् तत्राह-

लोकस्य नोपदेशात् सिद्धिः पूर्ववत् ॥ ५७ ॥

पूर्ववत् मनुष्यवदेव तत्तल्लोकस्थस्याप्युपदेशमात्रात् ज्ञानोत्पत्तिनियमो नास्तीत्यर्थः ॥ ५७ ॥

अथ ब्रह्मलोकवदनावृत्तिश्रुतिं उपपादयति—

पारम्पर्येण तत्सिद्धौ विमुक्तिश्रुतिः ॥ ५८ ॥

श्रवणमननपरम्परया तत्सिद्धौ ज्ञानसिद्धौ तद्विषये विमुक्तिश्रुतिरित्यर्थः। उक्तं चैतत् "तत्प्राप्तविवेकस्यानावृत्तिश्रुति" रित्यत्र ॥ ५८ ॥

व्यापकस्यात्मनो गतिश्रुत्युपदेशनं उपसंहरति—

गतिश्रुतेश्च व्यापकत्वेऽप्युपाधियोगात्
भोगदेशकाललाभः व्योमवत् ॥ ५९ ॥

तत्तल्लोकप्राप्तिः देशलाभः, विहायसस्यातिशयितं मातृमरणजदुखमिति

तत्र :खप्रयोजकवद्विहायसत्वादिकालभावः। स च व्यापकत्वेऽप्युपाधि-योगादेव। घटश्रुतिरप्युपाधियोगादाकाशवदित्यत्रोक्तमेतत्[1] ॥ ५९॥

भोक्तुरधिष्ठानात् भोगायतननिर्माणमन्यथा पूतिभावप्रसङ्गादित्युक्तं प्रपञ्चयति—

अनधिष्ठितस्य पूतिभावप्रसङ्गान्न तत्सिद्धिः ॥ ६० ॥

अनधिष्ठितस्य शुक्रादेः पूतिभावप्रसङ्गान्न भोगायतननिर्मणिसिद्धिरित्यर्थः ॥ ६० ॥

अत्राशङ्क्य समाधत्ते—

अदृष्टद्वारा चेदसम्बद्धस्य तदसम्भवाज्जलादिवदङ्कुरे ॥ ६१ ॥

अधिष्ठानं विनैवादृष्टद्वारा तन्निर्माणमस्त्विति चेन्न, शुक्रादौ साक्षा-दसम्बद्धस्यादृष्टस्य शरीरादिनिर्माणे भोक्तुः द्वारत्वासम्भवात्। बीजा-सम्बद्धानां जलादीनामङ्कुरोत्पत्तौ कर्षकादिद्वारत्ववदित्यर्थः ॥ ६१ ॥

वस्तुतः स्वसिद्धान्तेऽदृष्टादीनामात्मधर्मत्वाभावात् तद्द्वाराधिष्ठातृत्वं न सम्भवतीत्याह-

निर्गुणत्वात्तदसम्भवादहङ्कारधर्मा ह्येते ॥ ६२ ॥

भोक्तुः निर्धर्मत्वेनादृष्टासम्भवान्न तद्द्वारकं अधिष्ठातृत्वम्, हि यत एवाहङ्कारधर्माः ॥ ६२ ।

ननु चेत्पुरुषो व्यापकस्तदा—

"वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः"

इति श्रुतिप्रतिपादितं जीवपरिच्छिन्नत्वं, तथेश्वरप्रतिषेधात् पुरुषाणां चैकरूप्याज्जीवपरमात्मविभागोपि शास्त्रीयोऽनुपपन्नः इत्याशङ्काद्वयमपहर्तुमाह—

---

1 तथा च श्रुतिः— 'घटसंवृतमाकाशं नीयमाने घटे यथा। घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः ॥, इति ॥

विशिष्टस्य जीवत्वमन्वयव्यतिरेकात् ॥ ६३ ॥

"जीव प्राणधारणे" इति व्युत्पत्त्या जीवत्वं प्राणित्वम्। तच्च अहङ्कारविशिष्टस्य पुरुषस्य धर्मः। न केवलस्य, कुतः, अन्वयव्यतिरेकात्। अन्तःकरणवियोगे मोक्षप्रलयादौ जीवनं तद्योगे च सर्वकाले जीवनमित्यन्वयव्यतिरेकादित्यर्थः। तथाचान्तःकरणोपाधिकमेव जीवस्य परिच्छिन्नत्वमनीश्वरत्वं चेति भावः ॥ ६३ ॥

इदानीं ब्रह्मादित्रयस्यैव व्यावहारिकेश्वरत्वलाभाय महदहङ्कारयोरेवान्यत्कार्यमिति प्रतिपादयिष्यति। तत्रादावहङ्कारकार्यमाह—

अहङ्कारकर्त्रधीना कार्यसिद्धिर्नेश्वराधीना प्रमाणाभावात् ॥ ६४ ॥

अहङ्काररूपो यः कृत्यादिमान् तदधीनैव सृष्टिप्रलयरूपकार्यसिद्धिर्भवति, अतादृशेश्वरे प्रमाणाभावात् ॥ ६४ ॥

नन्वहङ्कारे कः कर्ता तत्राह—

अदृष्टोद्भूतिवत्समानत्वम् ॥ ६५ ॥

यथा भवन्मते अदृष्टोद्बोधः कालविशेषनिमित्तादेव, भवन्मते अहङ्कारोऽपि कालनिमित्तादेव भवति, न कर्त्रन्तरापेक्षेति ॥ ६५ ॥

महतोऽन्यत् ॥ ६६ ॥

अहङ्कारकार्यात् सृष्ट्यादेरन्यत्पालनं महत एव भवति, तस्यैव शुद्धसत्वतया अभिमानरागाद्यभावेन परानुग्रहमात्रप्रयोजनकत्वान्निरतिशयज्ञानबलैश्वर्याच्चेत्यर्थः ॥ ६६ ॥

ननु स्वाम्यर्थं प्रकृतिप्रवृत्तिरित्युक्तम्। तत्र स्वस्वामिभावो भोक्तृभोग्यभावः, सः प्रकृतिप्रवृत्तेः प्रागुक्तोऽस्तीत्याशङ्कां परिहरति—

कर्मनिमित्तः प्रकृतेः स्वस्वामिभावोऽप्यनादि-

र्बीजाङ्कुरवत् ॥ ६७ ॥

एषां साङ्ख्यैकदेशिनां मते स्वस्वामिभावो भोग्यभोक्तृभावः कर्मनिमित्तकः, तन्मतेऽपि सवृत्तितद्वासनाप्रवाहरूपेणानादिरेव, बीजाङ्कुरवत् प्रामाणिकत्वादित्यर्थः ॥ ६७ ॥

पञ्चशिखमुखेन स्वमतमाह—

अविवेकनिमित्तो वा[1] पञ्चशिखः ॥ ६८ ॥

अत्रापि वासनाघटितप्रवाहरूपेणानादिरित्यर्थः। कर्मजन्यत्ववदविवेकजन्यत्वमपि जन्मादिद्वारा भोगतद्वासनायां सम्भवतीति भावः ॥ ६८ ॥

लिङ्गशरीरनिमित्तक इति सनन्दनाचार्यः ॥ ६९ ॥

लिङ्गशरीरनिमित्तकः प्रकृतिपुरुषभोक्तृभोग्यभावः इति सनन्दनाचार्यः आह। तन्मतेऽपि तथैवानादिस्स इत्यर्थः[2] ॥ ६९ ॥

शास्त्रवाक्यार्थमुपसंहरति—

यद्वा तद्वा तदुच्छित्तिः पुरुषार्थः तदुच्छित्तिः
पुरुषार्थः ॥ ७० ॥

भोग्यभोक्तृभावः कर्मादिनिमित्तो वा, अविवेकनिमित्तो वा भवतु, दुःखादेः साक्षात्सम्बन्धेन प्रतिबिम्बसम्बन्धेन वाऽस्तु, सर्वथाऽप्यनादितया दुरुच्छेद्यस्य तस्योच्छेदः परमपुरुषार्थः इत्यर्थः।

अत्रायं सङ्कलितोऽर्थः — नित्यनिर्दुःखचिन्मात्ररूपस्यात्मनो दुःखस्य आदिप्रतिबिम्ब एव बोधः। प्रकृतिपुरुषसंयोगद्वारा अविवेक एव बन्धहेतुः। एवं च सति श्रवणादियोगान्तैः साधनैः देहादिप्रकृत्यन्तेभ्यः विविक्तपुरुष साक्षात्कारात् अविवेकोच्छेदे सति हेत्वभावात् पुनः दुःखबन्धेन पुरुषो न युज्यते इति ॥ ७० ॥

---

1 स्वस्वामिभाव इति शेषः। अविवेकश्च प्रलयेऽपि वासनारूपेण कर्मवदेवास्तीति भावः।

2 यद्यपि प्रलये लिङ्गशरीरं नास्ति। तथापि तत्कारणं अविवेककर्मादिकं पूर्वसर्गीय लिङ्गशरीरजन्यमस्ति, तदद्वारा बीजाङ्करतुल्यत्वम् स्वस्वामिभावलिङ्गशरीरयोः इत्याशयः।

अत्र भाष्यकारिका—

शास्त्रमुख्यार्थविस्तारः
तन्त्राख्येऽनुक्तपूरणैः ।
षष्ठाध्याये कृतः पश्चात्
वाक्यार्थश्चोपसंहृतः ॥ इति ॥

[भाष्यविरोधपरिहारः]

अत्र क्वचिच्च सूत्रार्थः
भाष्यादन्यादृशो यदि ।
तात्पर्यतो न भिन्नोऽसौ
भविता सुविचारतः ॥[1]

[शास्त्रमुख्योद्देशप्रकटनपूर्वकं
मूलपुरुषनुतिः]

दुःखाद्विमुक्तसंसारि-
पुरुषानुद्दिधीर्षता ।
इदं शास्त्रं कृतं येन
तं विष्णुं कपिलं नुमः ॥[2]

---

1 तत्र तत्र सौत्रपदसाक्षाल्लभ्यार्थवत्तासिद्धये विज्ञानभिक्षुवर्णितशैलीविभिन्नशैल्या अर्थः वर्णितः । तात्पर्यतस्तु भाष्यस्य अस्या वृत्तेश्च न कुत्रापि भेदः इति भावः ।

2 स्वरूपतो दुःखाद्विमुक्ता अपि अविवेकनिमित्तं संसारदुःखपङ्के निमग्नाः ये पुरुषाः तान् उद्धर्तुमिच्छतेत्यर्थः ।

[सहजविज्ञानमार्गे धियः स्थापनस्यैव
एतद्व्याख्योद्देश्यता]

कलिकालतमश्छन्न–
सूत्रभावोऽत्र वर्णितः।
एकः स्वबुद्धिभावस्सः
विज्ञानार्थो जयत्वलम् ॥[1]

इति श्री भावगणेशात्मजश्रीधरकृतौ साङ्ख्यप्रवचनवृत्तौ
साङ्ख्यदीपिकायां तन्त्राध्यायः षष्ठः समाप्तः ॥

समाप्तश्चायं ग्रन्थः

---

1 निरन्तरार्थकामकलनामयकालनिमित्तं यत् सहजार्थभानाऽऽवारकं तमः तेन छन्नः यः सूत्रभावः सः स्पष्टतया अत्र वर्णितः। अनेन विज्ञानसिद्धैकरूपः सः आध्यात्मिकः बुद्धिभावः समर्थः सन् सर्वत्र जयतु इत्यर्थः।

इति श्रीक्रतुनाथवंश्येन वेङ्कटनाथशर्मणा
सङ्कलिता सुसंक्षिप्ता साङ्ख्यदीपिकाटिप्पणी समाप्ता ॥

---

॥ श्रीः ॥

श्रीमदीश्वरकृष्णविरचिताः

# साङ्ख्यकारिकाः

भावप्रकाशिकासहिताः

[असाधारणः शास्त्रप्रवृत्तिहेतुः]

दुःखत्रयाभिघातात्
जिज्ञासा तदपघातके हेतौ ।
दृष्टे साऽपार्था चेत्
नैकान्तात्यन्ततोऽभावात् ॥ १ ॥

लोकेऽस्मिन् प्रत्यात्मप्रतिकूलवेदनीयं पीडाऽपरपर्यायं आध्यात्मिकाऽऽधिदैविकाऽऽधिभौतिकरूपं त्रिविधं यत् दुःखजातं, तदसह्याभिसम्बन्धात् नुन्नस्य पुरुषस्य तादृशदुःखत्रयाभिभावके हेतौ [तदभिभवसमर्थविवेकज्ञानसाधन-तत्त्वज्ञानविनिर्णयात्मकप्रकृतशास्त्रे] विविदिषा भवति। ननु लोकप्रसिद्ध-दृष्टोपायैरेव तदुच्छेदे सुलभे सति उक्तेयं विविदिषा व्यर्थेति चेन्न। दृष्टेन हेतुना दुःखनिवृत्त्यवश्यंभावस्य पुनर्दुःखानुत्पादस्य च असंभवात् ॥ १ ॥

[उत्तमः मुक्त्युपायः]

दृष्टवदानुश्रविकः
स ह्यविशुद्धिक्षयातिशययुक्तः ।
तद्विपरीतः श्रेयान्
व्यक्ताव्यक्तज्ञविज्ञानात् ॥ २ ॥

ननु तर्हि वेदोक्ताः अदृष्टोपायाः यागादय एव स्वीक्रियन्ताम्, दुःखास्सर्वे अपहताः भवेयुः, इति चेन्न। वैदिकाः यागादिक्रियाकलापरूपाः उपाया अपि

दृष्टवदेव आत्यन्तिकदुःखनिवृत्त्यनुपाया एव। यतः तेऽपि पशुहिंसादिसम्बन्धात पूर्णशुद्धिविहीना:,कालविशेषक्षीयमाणाल्पफलमात्रजनका:,स्वापेक्षया अतिशयतफलविशेषसत्तासूचकाश्च। अतः तादृशदोषसर्वस्वरहितः व्यक्ताव्यक्तपुरुषरूपतत्त्वत्रयविज्ञानजन्यः सत्त्वपुरुषान्यताप्रत्ययरूपः परिशुद्धः उपाय एव प्रशस्यतरो भवेत् ॥ २ ॥

[तत्त्वविभाग:]

मूलप्रकृतिरविकृतिः
महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारः
न प्रकृतिः न विकृतिः पुरुषः ॥ ३ ॥

तेषु च तत्त्वेषु— मूलप्रकृतिः कस्याप्यन्यस्य विकृतिरूपा न भवेत्। महान् अहङ्कारः पञ्चतन्मात्राश्चेति सप्त अग्रिमतत्त्वान्तराणां उपादानानि मूलप्रकृतेः कार्यरूपाणि च। पञ्च ज्ञानेन्द्रियाणि, पञ्च भूतानि, मनश्चेति षोडश केवलं कार्यरूपाण्येव, न तु तत्त्वान्तरोपादानानि। पुरुषस्तु कूटस्थनित्यः अपरिणामीति न कस्यचिदुपादानरूपः नापि कार्यरूपश्च ॥ ३ ॥

[तत्त्वसिद्धिहेतुप्रमाणविभाग:]

दृष्टमनुमानमाप्तवचनं च
सर्वप्रमाणसिद्धत्वात् ।
त्रिविधं प्रमाणमिष्टं
प्रमेयसिद्धिः प्रमाणाद्धि ॥ ४ ॥

उक्तानामेषां तत्त्वानां प्रमेयरूपाणां अवगतिः प्रमाणविशेषायत्ता। प्रमाणानि च–प्रत्यक्षं अनुमानं शब्दश्चेति त्रिविधान्येव। अन्यानि चान्यैः प्रमाणत्वेनाभिमतानि एष्वेवान्तर्भवन्तीति, न पृथक्प्रमाणत्वेन परिगणनामर्हन्ति ॥ ४ ॥

[प्रमाणानां लक्षणानि]

प्रतिविषयाध्यवसायो दृष्टं
त्रिविधमनुमानमाख्यातम् ।
तल्लिङ्गलिङ्गिपूर्वकं
आप्तश्रुतिराप्तवचनं तु ॥ ५

तत्र विषयव्यापृतेन्द्रियाधीनं ज्ञानं प्रत्यक्षप्रमाणम्। व्याप्यव्यापकभावज्ञानपुरस्सरं यत् व्याप्यस्य पक्षवृत्तिताज्ञानं तज्जन्यं व्यापकज्ञानं अनुमानम्। तच्च त्रिविधम्– पूर्ववत् शेषवत् सामान्यतोदृष्टं चेति। तत्र प्रत्यक्षीकृतजातीयसाधकं पूर्ववत्। यथा–पर्वतो वह्निमान् धूमादिति। केवलव्यतिरेकि परिशेषानुमानं वा शेषवत्। यथा— शब्दः अष्टद्रव्यातिरिक्तद्रव्याश्रितः, अष्टद्रव्यानाश्रितत्वे सति समवायिकारणत्वात्, यन्नैवं तन्नैवं यथा रूपं इति। अप्रत्यक्षीकृतजातीयसाध्यकं अनुमानं सामान्यतोदृष्टम्। यथा— रूपादिज्ञानानि करणवन्ति क्रियात्वात्, छिदिक्रियावत् इति इन्द्रियसाधकमनुमानम्॥ यथार्थवाक्यजनितं वाक्यार्थज्ञानमेव शब्दप्रमाणम् इति ॥ ५॥

[प्रमाणानां विषयभेदाः]

सामान्यतस्तु दृष्टात्
अतीन्द्रियाणां प्रतीतिरनुमानात् ।
तस्मादपि चासिद्धं
परोक्षमाप्तागमात् सिद्धम् ॥ ६ ॥

तत्र व्यक्तं ऐन्द्रियकं प्रत्यक्षत एव सिद्धम्। अतीन्द्रियेषु तत्त्वेषु, पुरुषेषु च केषांचित् प्रतीतिः सामान्यतोदृष्टादनुमानात्। तस्मादप्यप्रतीतं यत् सृष्टिरहस्य स्वर्गापवर्गौ धर्माधर्मौ देवतारहस्यं चेत्यादि अत्यन्तपरोक्षं तत् सर्वं शब्दप्रमाणादेव सिद्ध्यति ॥ ६॥

[अप्रत्यक्षत्वोपाधयः]

अतिदूरात् सामीप्यात्
इन्द्रियघातात् मनोऽनवस्थानात् ।

सौक्ष्म्यात् व्यवधानात्
अभिभवात् समानाभिहाराच्च ॥ ७ ॥

आकाशे उत्पततः अत्यूर्ध्वं गतस्य विहगस्येव अतिदूरस्थितत्वात्, लोचनसङ्गताञ्जनादेरिव अतिसमीपस्थितत्वात्, इन्द्रियघातात्, मनसः विषयान्तरप्रवृत्त्युपहततया प्रसक्तविषयासंस्पर्शात्, परमाण्वादेरिव विषयस्यात्यन्तसूक्ष्मत्वात्, भित्तिजवनिकादिवस्त्वन्तरव्यवधानात्, चण्डकिरणप्रभया नक्षत्रादेरिव प्रबलाभिभवात्, नूतनजलधारामिश्रितप्राक्तनजलस्येव सदृशतमवस्तुमिश्रीभावात्, क्षीरे दध्न इवानभिव्यक्तेश्च, लोके सत्यतमनिर्दिष्टवस्तुनःसत्त्वेऽपि उपलब्धिर्न भवतीति प्रसिद्धमेव ॥ ७॥

[प्रधानाप्रत्यक्षत्वे हेतुः, तल्लिङ्गकार्यस्वरूपं च]

सौक्ष्म्यात् तदनुपलब्धिः
नाभावात्, कार्यतः तदुपलब्धेः ।
महदादि तच्च कार्यं
प्रकृतिसरूपं विरूपं च ॥ ८ ॥

प्रकृते तु—तेषु अतिसूक्ष्मत्वादेव हेतोः प्रधानादीनां अनुपलब्धिः, न तु वस्तुनोऽभावात्। यतः कार्यलिङ्गकानुमानप्रमाणेन तत् सिद्ध्यति। तच्च कार्यं महदहङ्कारादि। तच्च केनचिद्धर्मेण प्रकृतिसरूपम्, केनचिद्धर्मेण प्रकृतिविरूपं च भवति ॥ ८॥

[सत्कार्यवादसमर्थनम्]

असदकरणात् उपादानग्रहणात्
सर्वसम्भवाभावात् ।
शक्तस्य शक्यकरणात्
कारणभावाच्च सत् कार्यम् ॥ ९ ॥

एवं कार्यदर्शनबलात् अस्त्यस्य किञ्चित् कारणमिति यत् गम्यते, तदेव प्रधानम्। यतः कार्योत्पत्तेः प्रागपि कारणे कार्यमस्त्येवेति कारणात्मकमेवैतत्

कार्यम्। तिलेषु तैलस्येव सत एवाभिव्यक्तेः। सर्वथा असत एव वस्तुनः उत्पत्तु मशक्यत्वात्, तदुपादानैः सहैव तत्कार्यस्य सम्बद्धत्वात्, तत्तकार्यं प्रति तत्तत्प्रतिनियतोपादानग्रहणात्, सर्वस्मादपि तदसम्बद्धसर्वोत्पत्तेरदर्शनात्, तत्कार्यजननशक्तिमत एव शक्यतत्कार्यजननात्, तन्तुपटवत् प्रागुत्पत्तेरपि कार्यस्य कारणानन्यत्वाच्च, उत्पत्तेः प्रागपि कार्यं कारणे सदेवेत्यबाधम् ॥ ९ ॥

[व्यक्ताव्यक्तयोः साधर्म्यवैधर्म्ये]

हेतुमदनित्यं अव्यापि
सक्रियमनेकमाश्रितं लिङ्गम् ।
सावयवं परतन्त्रं
व्यक्तं विपरीतमव्यक्तम् ॥ १० ॥

प्रकृतिपुरुषातिरिक्तं महदादिपृथिव्यन्तत्रयोविंशतितत्त्वात्मकं व्यक्तं हेतुमत्त्वादिधर्मविशिष्टम्, प्रधानप्रकृत्यादिशब्दवाच्यं अव्यक्तं तु उक्तयावद्धर्मशून्यमिति व्यक्ताव्यक्तयोः वैधर्म्यम्। तत्र–स्वाभिव्यक्तिकारणविशिष्टम्, तिरोभावशीलम्, असर्वगतम्, प्रवेशनिःसरणादिपरिस्पन्दवत्, प्रतिपुरुषं च भिन्नभिन्नम्, स्वस्वकारणाश्रितम्, स्वमूलकारणानुमापकम्, संयोगानुयोगिप्रतियोगिभावापन्नम्, कार्यान्तरजनने प्रकृत्यापूरसापेक्षं च व्यक्तम्। अव्यक्तं तु अजम्, नित्यम्, सर्वगतम्, निष्क्रियम्, एकम्, कारणावृत्ति, कारणाननुमापकम्, असंयोगि, परानपेक्षं सत् स्वकार्यजनने समर्थं च ॥ १० ॥

[प्रकृतिपुरुषयोः साधर्म्यवैधर्म्ये]

त्रिगुणं अविवेकि विषयः
सामान्यमचेतनं प्रसवधर्मि ।
व्यक्तं तथा प्रधानं
तद्विपरीतः तथा च पुमान् ॥ ११ ॥

उक्तमेतद्व्यक्तमव्यक्तं च सुखदुःखमोहरूपत्रिगुणधर्मविशिष्टम्। प्रधानाभिन्नं विविक्ततां विना संमिश्रणपुरःसरकार्यकरणशीलं वा; ग्राहकात् विज्ञानात् भिन्नं, ग्राह्यं बहुपुरुषीयविज्ञानालम्बनीभूतम्; स्वप्रकाशात् चेतनाद् भिन्नम्;

नित्यं वस्त्वन्तराविर्भावहेतुश्च भवति। उक्तत्रैगुण्यादिधर्मवैपरीत्यवांश्च पुरुषः। तथाचायं निर्गुणश्च विवेकी=असंहतः, अविषयः, प्रतिसंघातं भिन्नः, चेतनः चितिशक्तेरपरिणामित्वात् अप्रसवधर्मी चेत्यर्थः ॥ ११ ॥

[गुणत्रयम तल्लक्षणानि च]

प्रीत्यप्रीतिविषादात्मकाः
प्रकाशप्रवृत्तिनियमार्थाः।
अन्योन्याभिभवाश्रय-
जननमिथुनवृत्तयश्च गुणाः ॥ १२ ॥

तत्र—सत्त्वरजस्तमोरूपाः गुणाः क्रमशः सुखदुःखमोहात्मकाः, प्रकाश-प्रयत्न-तत्प्रतिबन्धप्रयोजनकाः, परस्पराभिभवरूपक्रियया—परस्पराश्रयेणैव उक्तप्रयोजनोत्पादनक्रियया—परस्परसाहाय्येनैव महदाद्युत्पादनक्रियया च विशिष्टाः अन्योन्यमविनाभाववर्तिनश्च ॥ १२ ॥

[गुणानां प्रयोजनानि]

सत्त्वं लघु प्रकाशकमिष्टं
उपष्टम्भकं चलं च रजः।
गुरु वरणकमेव तमः
प्रदीपवच्चार्थतो वृत्तिः ॥ १३ ॥

तत्र-ऊर्ध्वगमनादिहेतुलघुत्वविशिष्टं इन्द्रियार्थसन्निकर्षादावर्थावभासकं च सत्त्वमिति सम्मतम्। रजस्तु-सत्त्वतमसोः स्वस्वकार्यप्रवर्तकं सक्रियं च, तमः—लघुत्वविरोधिस्थितिहेतुभूतगुरुत्वधर्मवत् इन्द्रियव्यापारनिवृत्तिद्वार तत्तत्कार्यप्रतिबन्धकमेव। यथा तैलवर्तिदीपानां परस्परं विरोधे सत्यपि यथावन्मेलनेन प्रकाशजनकत्वं तथैव जीवानामदृष्टवशात्परस्परं यथा-वन्मेलनेनैतेषां गुणानां उक्तकार्यकारित्वं भवति ॥ १३ ॥

[प्रकृतिविकृत्योः त्रिगुणमयत्वफलम]

अविवेक्यादेः सिद्धिः
त्रैगुण्यात् तद्विपर्ययाभावात्।

कारणगुणात्मकत्वात्
कार्यस्याव्यक्तमपि सिद्धम् ॥ १४ ॥

प्रधानादीनां सुखदुःखमोहधर्मकत्रिगुणस्वरूपत्वादेव हेतोः उक्ताः अविवेकित्वादयो धर्माः सिद्ध्यन्ति। एतद्धर्माभाववति पुरुषे च त्रैगुण्याभावात्। महदादेः कार्यस्य च सुखादिरूपकारणगुणात्मकत्वात् कारणं प्रधानमपि सिद्धं भवति ॥ १४ ॥

[प्रकृतेर्विविधविकृतिजातोत्पत्तिहेतुता]

भेदानां परिमाणात
समन्वयात् शक्तितः प्रवृत्तेश्च।
कारणकार्यविभागात्
अविभागात् वैश्वरूप्यस्य ॥ १५ ॥

कारणमस्त्यव्यक्तं;
प्रवर्तते त्रिगुणतः समुदयाच्च।
परिणामतः सलिलवत्
प्रतिप्रतिगुणाश्रयविशेषात् ॥ १६ ॥

महदादिरूपेण भिन्नानां कार्याणां कारणरूपं प्रधानं अस्ति। कुतः? कार्याणां घटादिवत् परिमितत्वात् अव्यापित्वात, अध्यवसायादिलक्षणतत्तदसाधारणधर्मवत्त्वेन मिथोभिन्नानामपि बुध्दयादीनां सुखादिरूपसाधारणधर्मवत्तया एकरूपत्वात्, तच्छक्तादेव कारणात् तत्कार्यस्य प्रवृत्तेः, उत्पत्तिकाले सत एव कार्यस्य कारणसकाशादाविर्भावात्, कृत्स्नस्यापि कार्यस्य संहारकाले कारणे एव तिरोभावाच्च॥ तच्चाव्यक्तं सत्त्वादिगुणत्रयात् परस्परसंमिश्रणाच्च प्रवृत्तं भवति! तत्र च यथा-एकमेव सलिलं नारिकेलजम्बीरादिपरिणामभेदात् मधुरतिक्तादिभावं प्रतिपद्यते, तद्वत् प्रधानमपि एकैकगुणस्य भिन्नभिन्नमात्राणां संमेलनात् नानाविधकार्यरूपतां भजते ॥ १५-१६ ॥

[पुरुषास्तित्वम्]

सङ्घातपरार्थत्वात्
त्रिगुणादिविपर्ययादधिष्ठानात्।

पुरुषोऽस्ति भोक्तृभावात्
कैवल्यार्थं प्रवृत्तेश्च ॥ १७ ॥

स्वार्थक्रियायामितरसापेक्षाणां सम्भूयकारिणां स्वातिरिक्तमात्रभोगापवर्ग-फलकत्वात्, अनवस्थाभयात् क्वचित् सिद्धेन असंहतत्वेन तदाश्रयस्य, संहतत्व-व्याप्तत्रैगुण्याविवेकित्वाद्यनाश्रयस्यापि कस्यचित् सत्त्वस्यावश्यकत्वात्, त्रिगुणात्मकानां महदादीनां रथादीनामिव केनचित्परेणावश्यमधिष्ठीयमान-त्वात्, सुखाद्यात्मकबुद्ध्यादेः स्वातिरिक्तेन केनचित् भोक्त्राऽवश्यमनुभवनीय-त्वात्, मुक्तिकृते शिष्टानां प्रवृत्तिदर्शनाच्च, एतत्सर्वाश्रयः पुरुषः कश्चन आत्मा अस्त्येव ॥ १७ ॥

[ पुरुषबहुत्वम् ]

जन्ममरणकरणानां
प्रतिनियमात् अयुगपत्प्रवृत्तेश्च ।
पुरुषबहुत्वं सिद्धं
त्रैगुण्यविपर्ययाच्चैव ॥ १८ ॥

जन्मनो मरणस्य इन्द्रियाणां च व्यवस्थया प्रतिपुरुषं प्रत्येकतयैव दर्शनात्, प्रयत्नभेददर्शनात्, त्रिगुणानां विपर्यासात् सात्त्विकादिभेदेन प्राणिषु वैचित्र्यदर्शनाच्च, एषां आत्मनां बहुत्वमेव सिद्ध्यति ॥ १८ ॥

[ पुरुषधर्माः ]

तस्माच्च विपर्यासात्
सिद्धं साक्षित्वमस्य पुरुषस्य ।
कैवल्यं माध्यस्थ्यं
द्रष्टृत्वं अकर्तृभावश्च ॥ १९ ॥

पूर्वोक्तात् अत्रिगुणत्वाविवेकित्वादेः कारणात्, पुरुषस्यास्य साक्षित्वादिकं सिद्ध्यति। तत्र चेतनत्वात् अविषयत्वाच्च द्रष्टृत्वसाक्षित्वे, सुखदुःखमोहरहितत्वरूपात् अत्रैगुण्याच्च कैवल्यम्, रागद्वेषरहितत्वरूपमाध्यस्थ्यम्, सम्भूयकारित्वाभावरूपविवेकित्वात्, अपरिणामितया किञ्चिदजनकत्वरूपा-प्रसवधर्मित्वाच्च अकर्तृत्वं च सिद्ध्यति ॥ १९ ॥

[ आत्मबुद्धिधर्मयोः वैपरीत्यभाने हेतुः ]

तस्मात् तत्संयोगात्
अचेतनं चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वेऽपि तथा
कर्तेव भवत्युदासीनः ॥ २० ॥

चैतन्यं आत्मधर्मः, कृतिमत्त्वं तु बुद्धिधर्मः, इति चैतन्यकर्तृत्वयोः भिन्नाश्रयत्वे युक्तितः सिद्धे, एवं निर्णयो भवति–यतः बुद्ध्यादिकं लिङ्ग अचेनतमपि चेतनसंनिधानात् चेतनमिवैव भवति, अत एव च जानामी–त्यादिरूपेण परिणतानां गुणानामेव कर्तृत्वेऽपि बुद्ध्युपरागात् बुद्धिप्रतिबिम्बि–तत्वात् उदासीनोऽप्ययं पुरुषः कर्तेव भवति, तेन च करोमीत्यादि–प्रत्ययश्चेति ॥ २० ॥

[ प्रकृतिपुरुषयोः संयोगकारणम् ]

पुरुषस्य दर्शनार्थं
कैवल्यार्थं तथा प्रधानस्य ।
पङ्ग्वन्धवदुभयोरपि
संयोगः तत्कृतः सर्गः ॥ २१ ॥

सुखदुःखमोहात्मकं प्रधानं पुरुषकर्तृकतदनुभवरूपभोगार्थं पुरुषमपेक्षते । भोग एव च दर्शनम् । तथा पुरुषः स्वस्य प्रकृतिविविक्तताज्ञानरूपपरिणामजन्य-कैवल्यार्थं प्रधानमपेक्षते । एवं च गमनार्थं दर्शनार्थं च पङ्ग्वन्धयोः परस्प-रापेक्षेव, पङ्गूपमेन निष्क्रियेण पुरुषेण अन्धोपममचेतनं प्रधानमपेक्ष्यते इति, परस्परापेक्षाकृतः अनयोः संयोगः, तन्निमित्ता सृष्टिश्च भवतीति ॥ २१ ॥

[ भूतान्तसृष्टिक्रमः ]

प्रकृतेर्महान् ततोऽहङ्कारः
तस्मात् गणश्च षोडशकः ।
तस्मादपि षोडशकात्
पञ्चभ्यः पञ्च भूतानि ॥ २२ ॥

प्रधानात् बुद्धिरूपं महत्तत्त्वम, तस्मात् अहमित्यभिमानलक्षणोऽहङ्कारः, तस्मात् एकादशेन्द्रियाणि पञ्च तन्मात्राणीति षोडशको गणः, तत्र च पञ्चतन्मात्रेभ्यः आकाशादीनि पञ्च भूतानि च जायन्ते ॥ २२॥

[ बुद्धेर्लक्षणं तद्धर्मभेदाश्च ]

अध्यवसायो बुद्धिः
धर्मो ज्ञानं विराग ऐश्वर्यम् ।
सात्त्विकमेतद्रूपं
तामसमस्मात् विपर्यस्तम् ॥ २३ ॥

इदं कर्तव्यमिति निश्चयवती बुद्धिः। अस्याश्च धर्मादयः चत्वारः सात्त्विकाः धर्माः, अधर्मादयश्चत्वारः तामसाः धर्माः, उभयसहकारिणश्च राजसाः धर्मा। तत्र धर्मः अभ्युदयनिःश्रेयसहेतुः कर्म। ज्ञानं गुणपुरुषान्यताख्यातिरूपम्। वैराग्यं अनासक्तिः, दोषदर्शनात विषयत्यागेच्छा, भोगानभिषङ्गः, विषयवश्यत्वाभावनिर्णयो वा। ऐश्वर्यं अप्रतिहतेच्छत्वमूलं अणिमाद्यष्टविधम्। अधर्मः नरकादिदुःखहेतुः दुष्टं कर्म। अज्ञानं अनित्याशुचि दुःखानात्मसु नित्यशुचिसुखात्मत्वरूपं विपर्ययज्ञानम्। अवैराग्यं अनन्तविषयभोगतृष्णा। अनैश्वर्य प्रतिहतेच्छत्वमूलं दारिद्रयम् ॥ २३ ॥

[अहङ्कारलक्षणं तत्कार्यभेदाश्च]

अभिमानोऽहङ्कारः
तस्मात् द्विविधः प्रवर्तते सर्गः ।
एकादशकश्च गणः
तन्मात्रपञ्चकश्चैव ॥ २४ ॥

अनहमि अहमस्मीत्यभिमानः अहङ्कारः। तस्मात् द्विप्रकारा सृष्टिर्भवति। एका एकादशेन्द्रियाणाम्, अन्या च पञ्चतन्मात्राणामिति ॥ २४ ॥

[अहङ्कारत्रैविध्यं तत्कार्याणि च]

सात्त्विक एकादशकः
प्रवतते वैकृतादहङ्कारात् ।

भूतादे: तन्मात्र:
स तामसस्तैजसादुभयम् ॥ २५ ॥

प्राथमिकेन्द्रियसर्गानुगुणप्राप्तविकृतिभावात् सात्त्विकादहङ्कारात् प्रकाशक: एकादशेन्द्रियगण: जायते। भूतसर्गप्रागवस्थापन्नात् तामसादहङ्कारात् तमोगुणप्रचुर: जड: पञ्चतन्मात्रगण: जायते। सर्वचालकतया उत्तेजकात् राजसाहङ्कारात् उक्तसृष्टिद्वयसहकार: भवति ॥ २५ ॥

[कर्मज्ञानेन्द्रियाणि]

बुद्धीन्द्रियाणि चक्षुः
श्रोत्रघ्राणरसनत्वगाख्यानि।
वाक्पाणिपादपायू-
पस्था: कर्मेन्द्रियाण्याहु: ॥ २६ ॥

इन्द्र: =आत्मा, तस्य लिङ्गत्वात् अनुमापकत्वात् इन्द्रियम्। तत्र चक्षु:-श्रोत्रघ्राणरसनत्वगाख्यानि पञ्च कर्मसाधनानि इन्द्रियाणि। वाक्पणिपाद-पायूपस्था: पञ्च कर्मसाधनानीन्द्रियाणि ॥ २६॥

[मनस्स्वरूपम्]

उभयात्मकमत्र मन:
सङ्कल्पकमिन्द्रियं च साधर्म्यात्।
गुणपरिणामविशेषात्
नानात्वं बाह्यभेदाश्च ॥ २७ ॥

उक्तज्ञानकर्मात्मकोभयेन्द्रियप्रवृत्तिकल्पकत्वात् ज्ञानकर्मोभयात्मकं मन: सात्त्विकाहङ्कारोपादानकत्वरूपसमानधर्मेण इन्द्रियमित्येवोच्यते। धर्माधर्म-सहकृतगुणविमर्दवैचित्र्यनिमित्ताहङ्कारवैचित्र्यात् एषु ग्राहकेषु इन्द्रियेषु नानात्वं भवति, एवं इन्द्रियापेक्षया बाह्यानां शब्दतन्मात्रादिरूपाणां ग्राह्याणां च भेदा: भवन्ति ॥ २७ ॥

[दशेन्द्रियाणां वृत्तयः]

रूपादिषु पञ्चानां
आलोचनमात्रमिष्यते वृत्तिः ।
वचनाऽऽदानविहरणो-
त्सर्गाऽऽनन्दाश्च पञ्चानाम् ॥ २८ ॥

रूपादिविषयेषु सन्निहितेषु यत् विषयाकारपरिणामरूपं आलोचनामात्रं तत् पञ्चानामपि ज्ञानेन्द्रियाणां वृत्तिः व्यापारः। वचनाऽऽदानविहरणोत्सर्गाऽऽनन्दास्तु पञ्चानां कर्मेन्द्रियाणां वृत्तयः व्यापाराः ॥ २८ ॥

[अन्तःकरणत्रयवृत्तयः]

स्वालक्षण्यं वृत्तिः त्रयस्य
सैषा भवत्यसामान्या ।
सामान्यकरणवृत्तिः
प्राणाद्याः वायवः पञ्च ॥ २९ ॥

बुद्ध्यहङ्कारमनोरूपान्तःकरणत्रयस्य तत्तदीयलक्षणान्येव तत्तदीयव्यापाराः। यथा बुद्धेः अध्यवसायो व्यापारः, अहङ्कारस्य अभिमानो व्यापारः, मनसः सङ्कल्प एव व्यापार इति। स एष व्यापारः तत्तदसाधारणः। प्राणादयः पञ्च वायवस्तु=शरीरधारणरूपः जीवनाख्यः प्राणनादिव्यापारस्तु मिलितानां त्रयाणामपि करणानां साधारणः व्यापारः ॥ २९ ॥

[प्रत्यक्षपरोक्षस्थलयोरन्तःकरणवृत्तिभेदः]

युगपच्चतुष्टयस्य तु वृत्तिः
क्रमशश्च तस्य निर्दिष्टा ।
दृष्टे तथाऽप्यदृष्टे
त्रयस्य तत्पूर्विका वृत्तिः ॥ ३० ॥

चक्षुरादिबहिरिन्द्रियसहितस्यान्तःकरणत्रयस्य व्यापाराः आलोचन-सङ्कल्प-अभिमान-अध्यवसायाः प्रत्यक्षस्थले क्वचित् युगपदेव प्रादुर्भवन्ति,

क्वचिच्च क्रमशः। अनुमानादिपरोक्षस्थले तु बाह्येन्द्रियवृत्तेरसंभवात् केवलं मनोऽहङ्कारबुद्धिरूपान्तःकरणत्रयस्य व्यापाराः सङ्कल्पाभिमानाध्यवसाया अपि पूर्ववदेव क्वचिद्युगपत् क्वचिच्च क्रमश एव प्रादुर्भवन्ति ॥ ३० ॥

[इन्द्रियान्तःकरणयोः चालनहेतुः]

स्वां स्वां प्रतिपद्यन्ते
परस्पराकूतहेतुकां वृत्तिम्।
पुरुषार्थ एव हेतुः
न केनचित् कार्यते करणम् ॥ ३१ ॥

सर्वाण्यपीमानि करणानि परस्पराभिप्रायनिमित्तां आत्मीयामात्मीयामेव = वृत्तिं क्रियां प्राप्नुवन्ति। एषां प्रवृत्तौ च पुरुषस्यादृष्टमेव कारणम्। तथाच– 'इन्द्रियाणीमानि केनचिच्चेतनेन अधिष्ठात्रा परिचालितानि स्वां स्वां क्रियां कुर्वन्ति ' इति न भ्रमितव्यम ॥ ३१ ॥

[त्रयोदश करणकार्याणि]

करणं त्रयोदशविधं
तदाहरणधारणप्रकाशकरम्।
कार्यं च तस्य दशधा
आहार्यं धार्यं प्रकाश्यं च ॥ ३२ ॥

एकादशेन्द्रियाणि बुद्धिरहङ्कारश्चेति करणं त्रयोदशविधम्। तत्र वागादिपञ्चकर्मेन्द्रियाणि वागादिव्यापारेण वचनादीनि कर्माण्याहरन्ति = प्राप्नुवन्ति। बुद्ध्यहङ्कारमनांसि प्राणादिव्यापारेण देहं धारयन्ति। पञ्च ज्ञानेन्द्रियाणि प्रकाशरूपेण व्यापारेण शब्दस्पर्शादीन् प्रकाशयन्ति। तस्य च त्रयोदशविधकरणस्य कार्यतया अभिमतं आहार्यं धार्यं प्रकाश्यं च प्रत्येकं दशप्रकारम्, पञ्चकर्मणां पञ्चप्राणानां पञ्चज्ञानानां च दिव्यादिव्यभेदेन द्वैविध्यात् ॥ ३२ ॥

[करणविभागः तद्विषयाश्च]

अन्तःकरणं त्रिविधं
दशधा बाह्यं त्रयस्य विषयाख्यम् ।
साम्प्रतकालं बाह्यं
त्रिकालमाभ्यन्तरं करणम् ॥ ३३ ॥

तत्र मनोबुद्ध्यहङ्कारभेदात् अन्तःकरणं त्रिविधम् । बाह्यकरणं तु पञ्चज्ञानेन्द्रियपञ्चकर्मेन्द्रियभेदात् दशविधम् । तच्च बाह्यं मनआद्यन्तःकरणैः विषयगोचरेषु सङ्कल्पादिषु कर्तव्येषु व्यापारजनकं सत् द्वारीभवति । तत्र च बाह्येन्द्रियाणि वर्तमानमात्रविषयकाणि । आन्तराणि अतीतानागतवर्तमानात्मकत्रिकालविषयकाणि ॥ ३३ ॥

[इन्द्रियविषयाः]

बुद्धीन्द्रियाणि तेषां
पञ्च विशेषाविशेषविषयाणि ।
वाग् भवति शब्दविषया
शेषाणि तु पञ्च विषयाणि ॥ ३४ ॥

तेषु पञ्चज्ञानेन्द्रियाणि पृथिव्यादिमहाभूतात्मकस्थूलशब्दादिरूपाणां विषयाणाम्, तथा तद्रूपेणापरिणतानां सूक्ष्मशब्दादिरूपाणां तन्मात्राणां च विषयाणां ग्राहकाणि । कर्मेन्द्रियेषु प्रथमा वाक् स्थूलशब्दमात्रजननी । शेषाणि चत्वारि शब्दादिपञ्चविषयकाण्येव । यतः—हस्तादीनि यैः घटादिभिः सम्बद्धानि भवन्ति, तानि सर्वाण्यपि वस्तूनि शब्दस्पर्शरूपरसगन्धतन्मात्रेभ्यः परिणतानि तदात्मकान्येव भवन्तीति ॥ ३४ ॥

[करणेषु प्रधानाप्रधानभावः]

सान्तःकरणा बुद्धिः
सर्वं विषयमवगाहते यस्मात् ।
तस्मात् त्रिविधं करणं
द्वारि, द्वाराणि शेषाणि ॥ ३५ ॥

अहङ्कारमनस्सहिता बुद्धिः यतः अन्यैः दशभिरपीन्द्रियैरुपनीतं सर्वं विषयजातं अवगाहते = विषयीकरोति, अत एव तत् त्रिविधमपि करणं प्रधानम्, शेषाणि दश बाह्यकरणानि अप्रधानानि भवन्ति ॥ ३५ ॥

[बुद्धेः प्राधान्यम्]

एते प्रदीपकल्पाः
परस्परविलक्षणाः गुणविशेषाः ।
कृत्स्नं पुरुषस्यार्थं
प्रकाश्य बुद्धौ प्रयच्छन्ति ॥ ३६ ॥

सत्त्वादिगुणानां विकारभूताः एते बाह्येन्द्रियमनोऽहङ्काराः सर्वेऽपि मिथो विलक्षणाः विरोधशीलाः सन्तोऽपि, सन्तमसापनयनेन रूपप्रकाशनाय प्रदीपे मिलिताः वर्ति-तैल-वह्नय इव परस्परं मिलिताः सन्तः, पुरुषस्यार्थे स्वस्वविषयानुसारं निखिलमर्थं प्रकाशितं कृत्वा सर्वाध्यक्षभूतायां बुद्धावेव स्थापयन्तीति, तेष्वपि एषा बुद्धिरेव प्रधानम् ॥ ३६ ॥

[सहेतुकं तदुपपादनम्]

सर्वं प्रत्युपभोगं यस्मात्
पुरुषस्य साधयति बुद्धिः ।
सैव च विशिनष्टि पुनः
प्रधानपुरुषान्तरं सूक्ष्मम् ॥ ३७ ॥

बुद्धिर्हि पुरुषसन्निधानात् पुरुषाभिन्नत्वेनैव प्रतीयमाना विवेकाग्रहात् स्वकृतभोगेनैव 'अहं सुखी' ति पुरुषप्रत्ययजनकः सन् पुरुषस्यास्य सर्वमपि विषयोपभोगं साधयति। सैव च बुद्धिः पुनः कालक्रमेण सूक्ष्मं दुर्लक्ष्यं प्रधानपुरुषयोरन्तरं विवेकं च करोतीति अन्तःकरणेष्वप्येषा बुद्धिरेव प्रधानम्, न त्वितराणि ॥ ३७ ॥

[विशेषाविशेषौ]

तन्मात्राण्यविशेषाः
तेभ्यो भूतानि पञ्च पञ्चभ्यः ।

एते स्मृताः विशेषाः
शान्ताः घोराश्च मूढाश्च ॥ ३८ ॥

सूक्ष्मशब्दादीनि पञ्चतन्मात्राणि उपभोगयोग्यशान्तत्वादिधर्मविशेष-रहिततया अविशेषाभिधानानि। तेभ्यश्च आकाशादिपदवाच्याः महाभूत-विशेषाः जायन्ते। एते च विशेषाभिधानाः। यतः- तेषु केचित् शान्ताः केचित् घोराः, केचित् मूढाश्च। तत्र-सत्त्वप्रधानाः सुखावहाः शान्ताः—वीणा-मन्दमारुत-सुन्दरी-पुण्ड्रेक्षु-कर्पूरादिसम्बन्धिनः शब्दस्पर्शरूपरसगन्धाः। रजः प्रधानाः दुःखावहाः घोराः—व्याघ्र-अग्नि-विद्युत्-सर्षप-चम्पकादिसम्बन्धिनः शब्दादयः। तमःप्रधानाः मोहावहाः मूढाः—मेघ-विष-तिक्त-निम्बपत्र—लशुनाद्यनुबन्धिनः शब्दादयः इति ॥ ३८ ॥

[विशेषेष्वप्यवान्तरविशेषाः]

सूक्ष्माः मातापितृजाः सह-
प्रभूतैः त्रिधा विशेषाः स्युः।
सूक्ष्माः तेषां नियताः
मातापितृजाः निवर्तन्ते ॥ ३९ ॥

तेष्वपि विशेषेषु एते अवान्तरविशेषाः। यथा—प्रकृतित एवोत्पन्नेषु चतुर्विंशतितत्त्वेषु तत्त्वानां परस्परं मेलनेन त्रिधा विशेषवस्तून्युत्पद्यन्ते-सूक्ष्मशरीरम्, स्थूलशरीरम्, महाभूतानीति। यैः पुरुषस्योपभोगः सुसिद्धो भवेत्। तत्र अष्टादशतत्त्वैरेव संगृहीतं सूक्ष्मं शरीरं नियतं नित्यं आमोक्षा-वस्थायि। मातापितृभ्यां उत्पन्नं स्थूलं शरीरं मरणकालपर्यन्तावस्थायि। महाभूतानि च आप्रलयावस्थायीनि भवन्ति ॥ ३९ ॥

[सूक्ष्मशरीरम्]

पूर्वोत्पन्नमसक्तं नियतं
महदादिसूक्ष्मपर्यन्तम्।
संसरति निरुपभोगं
भावैरधिवासितं लिङ्गम् ॥ ४० ॥

पूर्वं आदिसर्गे प्रधानेन प्रतिपुरुषं पृथक्पृथक् उत्पादितं लिङ्गं सूक्ष्मशरीरं असक्तं अव्याहतं शिलायामपि प्रवेशनार्हम् आमोक्षावस्थायि च। एवं महदहङ्कारमनोदशेन्द्रियपञ्चतन्मात्ररूपाष्टादशतत्त्वसमूहरूपं स्वतः स्थूलदेहं विना उपभोगासमर्थम्, धर्माधर्म-ज्ञानाज्ञान-वैराग्यावैराग्य-ऐश्वर्यानैश्वर्यरूपाणां अष्टभावानां वासनया युक्तं सत् संसरति = पूर्वपूर्वं स्थूलशरीरं परित्यज्य नवं नवं स्थूलशरीरं धारयितुं प्रभवति ॥ ४० ॥

[सूक्ष्मशरीरस्य स्थूलशरीरनिमित्तत्वम्]

चित्रं यथाऽऽश्रयमृते
स्थाण्वादिभ्यो विना यथा च्छाया।
तद्वद्विनाऽविशेषैः
न तिष्ठति निराश्रयं लिङ्गम् ॥ ४१ ॥

यथा पटभित्त्यादिकैः आश्रयैर्विना चित्रं वा, स्थाण्वादिभिः प्रतियोगिभिर्विना तच्छाया वा न तिष्ठति, तद्वदेव विशेषधर्मविरहितैः सूक्ष्मैः शरीरैर्विना निराश्रयं बुद्ध्यादिकं लिङ्गं न तिष्ठतीति तदाधारं सूक्ष्मशरीरं आवश्यकमेव ॥ ४१ ॥

[सूक्ष्मशरीरवैचित्र्यम्]

पुरुषार्थहेतुकमिदं
निमित्तनैमिकप्रसङ्गेन।
प्रकृतेर्विभुत्वयोगात्
नटवत् व्यवतिष्ठते लिङ्गम् ॥ ४२ ॥

भोगापवर्गलक्षणपुरुषार्थोद्देशेन प्रवर्तितं इदं च सूक्ष्मशरीरं धर्मादिनिमित्तसंबन्धेन स्थूलदेहादिनैमित्तिकसम्बन्धेन च अद्भुतेन प्रकृतिमहिम्ना नटवत् व्यवतिष्ठते = नटो यथा रङ्गे विविधमाश्चर्यमयीं वेशरचनां परिगृह्य व्यवहरति, तत्तच्छरीरं च अहंत्वेनाभिमन्यते, तथा ॥ ४२ ॥

[निमित्त–नैमित्तिकरूपाः भावाः । ]

सांसिद्धिकाश्च भावाः
प्राकृतिकाः वैकृतिकाश्च धर्माद्याः ।
दृष्टाः करणाश्रयिणः
कार्याश्रयिणश्च कललाद्याः ॥ ४३ ॥

निमित्तरूपाः धर्माद्याः अष्टौ भावाः करणरूपबुद्ध्याश्रिताः संसृतिमूलभूताः भवन्ति। एते च भावाः सांसिद्धिकाः असांसिद्धिकाः इति द्विविधाः। तत्र सांसिद्धिकाः स्वभावसिद्धाः प्राकृतिकाः इत्युच्यन्ते। असांसिद्धिकाः पुरुषप्रयत्न-साध्याः वैकृतिकाः इत्युच्यन्ते। तत्र भगवतः कपिलादेः धर्मज्ञानवैराग्यैश्वर्य-रूपा भावाः सांसिद्धिकाः। प्राचेनसादेस्तु तपआदिनिमित्तजन्याः वैकृतिकाः। एवं अधर्मादयोऽपि केषांचित सांसिद्धिकाः केषांचित् दुरभ्यासादिजन्याः॥ एवं नैमित्तिकरूपाः शरीररूपकार्याश्रयिणः गर्भनिष्ठाः कलल-बुद्बुद-मांस-पेशी-करण्ड—अङ्ग—प्रत्यङ्गव्यूहाः, गर्भविनिर्गतदेहनिष्ठाः बाल्य—कौमार—यौवन वार्धक्यावस्थाश्च उक्तप्रकारेणैव द्विविधाः ॥ ४३ ॥

[धर्माद्यष्टककार्यनिरूपणम्]

धर्मेण गमनमूर्ध्वं
गमनमधस्तात् भवत्यधर्मेण ।
ज्ञानेन चापवर्गः
विपर्ययादिष्यते बन्धः ॥ ४४ ॥

धर्मेण द्युप्रभृत्यूर्ध्वलोकगमनम्, अधर्मेण च नरकाद्यधोलोकगमनम्, ज्ञानेन विविक्तात्मसाक्षात्कारपूर्वकं भवबन्धविमोचनरूपो मोक्षः, अज्ञानात् बन्धश्च भवति ॥ ४४ ॥

वैराग्यात् प्रकृतिलयः
संसारो भवति राजसाद्रागात् ।
ऐश्वर्यादविघातः
विपर्ययात् तद्विपर्यासः ॥ ४५ ॥

येषां आत्मज्ञानं न जातम्, ततः प्रागेव च इहपरसुखेषु वितृष्णा च जाता, तेषां तादृशात् वैराग्यात् प्रकृतौ तत्कार्येषु महदादिषु वा लयः भवति। रजःकार्यात कर्मफलाभिलाषात् तादृशकर्मफलभोगानुगुणः संसारः स्थूल शरीरपरिग्रहः जायते। अणिमाद्यैश्वर्यात् अप्रतिबन्धेन सर्वामप्यात्मन इच्छां पूरयितुं समर्थो भवति। अनैश्वर्याच्च सर्वत्र इच्छायाः विघात एव भवति ॥ ४५ ॥

[बुद्धिसर्गाः चत्वारः पञ्चाशच्च]

एष प्रत्ययसर्गः
विपर्ययाशक्तितुष्टिसिद्ध्याख्यः।
गुणवैषम्यविमर्दात्
तस्य भेदास्तु पञ्चाशत् ॥ ४६ ॥

विपर्ययाशक्तितुष्टिसिद्धयश्च बुद्धिसृष्टाः बुद्धिरूपा एव। तत्र- विपर्ययः अज्ञानम्। अशक्तिः पदार्थनिश्चयजनने क्रियाजनने च सामर्थ्याभावः अनैश्वर्यावैराग्याधर्मरूपः। तुष्टिः धर्मवैराग्यैश्वर्यरूपा। सिद्धिः ज्ञानम्। गुणानां न्यूनाधिकबलतया परस्परमभिभवात् तस्यैवास्य विपर्ययादिरूपस्य बुद्धिसर्गस्य पञ्चाशद्भेदाश्च भवन्ति ॥ ४६ ॥

[तत्र विपर्ययादिचतुर्णामेव पञ्चाशद्भेदवत्त्वम्]

पञ्च विपर्ययभेदाः
भवन्त्यशक्तिश्च करणवैकल्यात्।
अष्टाविंशतिभेदा तुष्टिः
नवधाऽष्टधा सिद्धिः ॥ ४७ ॥

ते च पञ्चाशद्भेदाः इत्थम्–विपर्ययभेदाः पञ्च (५) करणानामपाटवनिमित्तात् अशक्तिः अष्टाविंशतिधा (२८) तुष्टिः नवधा (९) सिद्धिश्चाष्टधा (८) इति ॥ ४७ ॥

[विपर्ययभेदाः तद्भेदाश्च]

भेदस्तमसोऽष्टविधः
मोहस्य च दशविधो महामोहः।

तामिस्रोऽष्टादशधा
तथा भवत्यन्धतामिस्रः ॥ ४८ ॥

तत्र—तमः, मोहः, महामोहः, तामिस्रः, अन्धतामिस्रः इति विपर्ययभेदाः पञ्च। तत्र अव्यक्ताद्यष्टसु आत्मताबुद्धिः तमः अष्टधा। अष्टैश्वर्येषु मोहः अष्टधा। दिव्यादिव्येषु शब्दादिपञ्चविषयेषु रागः महामोहः दशधा। दिव्यादिव्यभेदेन द्विविधेषु शब्दादिपञ्चविषयेषु तत्साधनेषु अणिमाद्यष्टैश्वर्येषु च अन्यतमास्वादनवेलायां, आपततः तदितरस्य एतद्रसानुभवविघातकतया द्वेषविषयत्वमेव भवतीति। एतादृशो द्वेषः तामिस्रः, एवंरूपः अभिनिवेशः अन्धतामिस्रश्च अष्टादशधा ॥ ४८ ॥

[अष्टाविंशत्यशक्तयः]

एकादशेन्द्रियवधाः
सह बुद्धिवधैः अशक्तिरुद्दिष्टा।
सप्तदश वधाः बुद्धेः
विपर्ययात् तुष्टिसिद्धीनाम् ॥ ४९ ॥

मनसा सह दशानामपीन्द्रियाणां सौन्दर्यनाशकाः दोषाः एकादश (११)। वक्ष्यमाणानां नवविधतुष्टीनां अष्टविधसिद्धीनां च विपर्ययात् वैकल्यात् बुद्धेर्दोषाः सप्तदश (१७)। आहत्य अष्टाविंशतिर्भेदाः अशक्तेः ॥ ४९ ॥

[तुष्टिनवकम्]

आध्यात्मिक्यः चतस्रः
प्रकृत्युपादानकालभागाख्याः।
बाह्याः विषयोपरमात्
पञ्च च नव तुष्टयोऽभिमताः ॥ ५० ॥

यः खलु प्रकृतिविविक्तात्मास्तित्वोपदेशश्रवणमात्रेण कृतकृत्यताभिमानी विविक्तात्मसाक्षात्काराय नैव प्रयतते, तस्य काचन तुष्टिर्भवति किल, सैव आध्यात्मिकी तुष्टिः। यश्च आत्मव्यतिरिक्तानेव प्रकृत्यादीन् आत्मत्वेनाभिमन्यते, तस्यामेवावस्थायां बाह्यविषयेषु वैराग्यं च भवति चेत्, तस्य

काचन तुष्टिर्भवति, सैव बाह्या तुष्टि:। तत्राद्या चतुर्विधा– प्रकृतितुष्टि: उपादानतुष्टि:, कालतुष्टि:, भाग्यतुष्टि: इति। द्वितीया तु पञ्चविधा–पारतुष्टि: सुपारतुष्टि:, पारापरतुष्टि: अनुत्तमाम्भस्तुष्टि:, उत्तमाम्भस्तुष्टि: इति ॥ ५० ॥

[अष्टसिद्धय:, तद्विघातकाश्च]

ऊह: शब्दोऽध्ययनं
दु:खविघातास्त्रय: सुहृत्प्राप्ति:।
दानं च सिद्धयोऽष्टौ
सिद्धे: पूर्वोऽङ्कुश: त्रिविध: ॥ ५१ ॥

ऊह: जन्मान्तरसंस्कारेण तात्त्विकार्थानां तर्कणम्, शब्द: परै: पठ्यमानात् शब्दादेवार्थज्ञानम्, अध्ययनं गुरुमुखात् शास्त्रार्थग्रहणम्, आध्यात्मिकादिदु:खत्रयनाश: सुहृत्प्राप्ति: तत्त्वज्ञमित्रमिलनम, दानं ज्ञातार्थसंशोधनेन बुद्धे: स्वच्छप्रवाहेऽवस्थापनं सर्वार्पणेन ज्ञानप्राप्तिर्वा इति अष्टौ सिद्धय:। तत्र पूर्वोक्तविपर्ययाशक्तितुष्टिरूपस्त्रिविधोऽपि सिद्धे: घातुक: ॥ ५१ ॥

[बुद्धिसर्ग–भूतसर्गयोरुभयोरप्यावश्यकता]

न विना भावैर्लिङ्गं
न विना लिङ्गेन भावनिर्वृत्ति:।
लिङ्गाख्यो भावाख्य:
तस्मात् द्विधा प्रवर्तते सर्ग: ॥ ५२ ॥

पुरुषार्थभोगरूपं भोगं प्रति भोग्य–भोगाधिकरण-भोगसाधनानीति त्रयमप्यपेक्षितं खलु। तत्र– शब्दादिकं–भोग्यम, भोगाधिकरणम्—शरीरं स्थूलसूक्ष्मरूपेण द्विविधमपि, भोगसाधनानि च बाह्यान्तरकरणानि। भोग्यभोगाधिकरणयो: सम्पादनाय तन्मात्रकृतसर्ग: सूक्ष्मशरीर–शब्दादि—महाभूत—स्थूलशरीरादिरूप:। भोगसाधनसम्पादनाय प्रत्ययसर्ग: धर्माद्यष्ट–भेदेन पञ्चाशद्भेदेन वा भिन्न:। तन्मात्रकृतसर्ग एव लिङ्गसृष्टि:। प्रत्ययसर्ग एव भावसृष्टि:। तत्र भावसर्गैर्विना लिङ्गसर्गो न भवति, उत्तरोत्तरदेहादिलाभस्य पूर्वपूर्वसंस्काराद्दृष्टकारितत्वात्। लिङ्गसर्गेण विना भावसर्गो न भवति, धर्मादे:

स्थूलसूक्ष्मदेहसाध्यत्वात्। तस्मात् लिङ्गाख्यो भावाख्यश्चेति द्विविधोऽपि सर्गः बुद्धितत्वात् प्रवर्तते ॥ ५२ ॥

[ योनिभेदेन चतुर्दश भूतसर्गाः ]

अष्टविकल्पो दैवः
तैर्यग्योनश्च पञ्चधा भवति।
मानुषश्चैकविधः
समासतो भौतिकः सर्गः ॥ ५३ ॥

देवयोनौ भवः सर्गः—ब्राह्मः प्राजापत्यः ऐन्द्रः पैत्रः गान्धर्वः याक्षो राक्षसः पैशाचः इत्यष्टविधः। तिर्यग्योनौ भवः—पशुः, मृगः पक्षी सरीसृपः, स्थावरः, इति पञ्चविधः। मानुषस्तु एकविध एव। एवं चतुर्दशविधः भौतिकः भूतादिरूपतन्मात्रकृत. सर्गः ॥ ५३ ॥

[ गुणानुगुण्येन त्रिधा भूतसर्गः ]

ऊर्ध्वं सत्त्वविशालः
तमोविशालश्च मूलतः सर्गः।
मध्ये रजोविशालः
ब्रह्मादिस्तम्बपर्यन्तः ॥ ५४ ॥

तत्र ऊर्ध्वलोकानुबन्धी दैवसर्गः सत्त्वप्रचुरः। मूलरूपाधोलोकानुबन्धी तैर्यग्योनसर्गः तमोबहुलः। मध्यलोकानुबन्धी मनुष्यसर्गस्तु रजोबहुलः। एवं ब्रह्मादिस्तम्बपर्यन्तः सर्वो लोकः गुणत्रयव्याप्त एव ॥ ५४ ॥

[ सृष्टिमात्रस्य स्वभावतो दुःखनिमित्तता ]

तत्र जरामरणकृतं
दुःखं प्राप्नोति चेतनः पुरुषः।
लिङ्गस्याविनिवृत्तेः
तस्मात् दुःखं स्वभावेन ॥ ५५ ॥

तत्र देहेन्द्रियादौ चैतन्यवान् पुरुषः जरामरणादिकृतं दुःखं स्वकीयसूक्ष्मशरीरनिवृत्तिपर्यन्तं स्वभावत एव प्राप्नोति। तस्मात् सर्गः स्वत एव दुःखरूपो विवेकिनाम् ॥ ५५॥

[ प्रकृतेः सर्गप्रवृत्तिहेतुः ]

इत्येषः प्रकृतिकृतः
महदादिविशेषभूतपर्यन्तः ।
प्रतिपुरुषविमोक्षार्थं
स्वार्थ इव परार्थ आरम्भः ॥ ५६ ॥

इत्येषः महत्तत्वप्रभृति स्थूलभूतपर्यन्तः सर्गः प्रकृत्यैव कृतः। स च सर्गः परार्थः=एकैकपुरुषविमोचनार्थः। परार्थमपीमं स्वार्थमिव मन्यमानेयं-प्रकृतिः एवं सृष्टिं करोति॥ ५६ ॥

[ अचेतनरूपायाः अपि प्रकृतेः प्रवृत्त्यौचित्यम् ]

वत्सविवृद्धिनिमित्तं
क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।
पुरुषविमोक्षनिमित्तं
तथा प्रवृत्तिः प्रधानस्य ॥ ५७ ॥

यथा अचेतनस्यापि क्षीरस्य वत्सपोषणकृते स्वयमेव प्रस्तावः, एवं अचेतनस्यापि प्रधानस्य स्वस्मात् पुरुषविमोक्षणकृते एव प्रवृत्तिरुपपद्यते॥ ५७॥

[ तत्र दृष्टान्तः ]

औत्सुक्यनिवृत्त्यर्थं
यथा क्रियासु प्रवर्तते लोकः।
पुरुषस्य विमोक्षार्थं
प्रवर्तते तद्वदव्यक्तम् ॥ ५८ ॥

यथा खलु जनः इष्यमाणप्राप्त्या इच्छानिवृत्त्यर्थं तदनुगुणकर्मसु प्रवर्तते, तथैव पुरुषस्य विमोक्षार्थं प्रकृतिः प्रवर्तते। पुरुषमोक्ष एव प्रकृतेः स्वार्थतुल्यः इष्यमाणः इति ॥ ५८ ॥

[तस्या एव प्रकृतेः कार्यान्ते निवृत्त्यौचित्यम्]

रङ्गस्य दर्शयित्वा
निवर्तते नर्तकी यथा नृत्यात्।
पुरुषस्य तथाऽऽत्मानं
प्रकाश्य विनिवर्तते प्रकृतिः ॥ ५९ ॥

यथा नर्तकी नाट्यशालास्थान् प्रेक्षकान् प्रति नृत्यं दर्शयित्वा नृत्यात् निवर्तते, तथैव प्रकृतिरपि पुरुषं प्रति स्वस्वरूपं दर्शयित्वा ततो निवृत्ता भवति एवं स्वाभाविकीयं अस्याः निवृत्तिः ॥ ५९ ॥

[प्रकृतेरौदार्यम्]

नानाविधैरुपायैः
उपकारिण्यनुपकारिणः पुंसः।
गुणवत्यगुणस्य सतः
तत्कार्यमपार्थकं चरति ॥ ६० ॥

सत्त्वादिगुणमयी प्रकृतिः उपकारासमर्थस्य गुणातीतस्य सतः पुरुषस्य स्वीयप्रयोजनचिन्तां विनैव नानाविधैरुपायैः उपकारिणी सती तत् भवबन्ध-विमोक्षरूपं कार्यमाचरति ॥ ६० ॥

[प्रकृतेः सौकुमार्यम्]

प्रकृतेः सुकुमारतरं
न किञ्चिदस्तीति मे मतिर्भवति।
या दृष्टाऽस्मीति पुनः
न दर्शनमुपैति पुरुषस्य ॥ ६१ ॥

प्रकृतेरप्यतिसुकुमारं = सलज्जं किञ्चिदप्यन्यत् वस्तु नास्तीत्येव मे मतिर्भवति। यतः याऽसौ प्रकृतिः विवेकपूर्वकं पुरुषेणाहं साक्षात्कृतेति यदा विजानाति, तत्प्रभृति पुनः पुरुषस्य नैव गोचरीभवति ॥ ६१ ॥

[बन्धादेः प्रकृतिधर्मत्वम्]

तस्मात् न बध्यतेऽद्धा
न मुच्यते नापि संसरति कश्चित्।
संसरति बध्यते मुच्यते च
नानाश्रया प्रकृतिः ॥ ६२ ॥

यतः पुरुषोऽसौ अगुणः अपरिणामी च, अत एव कश्चिदपि पुरुषः अद्धा = वस्तुत. = साक्षात् न बद्धो भवति, न संसरति = धर्मादिनिमित्तं प्रेत्यभावापर नामानं परलोकादिगमनरूपं संसारं नाप्नोति, नापि मुक्तो भवति। यथोक्तम्—

"न निरोधो नचोत्पत्तिः न बद्धो न च साधकः।
न मुमुक्षुः न वै मुक्तः इत्येषा परमार्थता" ॥ इति ॥

तथाच—प्रकृतिरेव नानापुरुषाश्रया सती बद्धा, संसरति मुक्ता च भवति। ततश्च—पुरुषोऽयं चैतन्यमात्रवपुः कूटस्थो नित्यमुक्त एव। सांसारिक सुखदुःखानुभवरूपो भोगस्तु परिणामिन्याः बुद्धेरेव धर्मः। तादृशबुद्धिच्छायापत्त्या तदैक्यमिवापन्नस्य पुरुषस्य तद्दर्शनमात्रमेव भोगः। तेन तस्य विवेकाग्रहात् आध्यासिकं भोक्तृत्वम्। विवेकख्यात्या भोक्तृत्वाध्यासमात्रनिवृत्तिरेव मोक्षः इति सिद्धम् ॥ ६२ ॥

रूपैः सप्तभिरेव तु
बध्नात्यात्मानं आत्मना प्रकृतिः।
सैव च पुरुषार्थं प्रति
विमोचयत्येकरूपेण ॥ ६३ ॥

प्रकृतिः धर्माधर्मैश्वर्यानैश्वर्यवैराग्यवैरायाज्ञानरूपैः सप्तभिर्भावैः आत्मना = बुद्धिरूपेण आत्मानं बध्नाति। सैव च प्रकृतिः पुरुषस्य स्वरूपावस्थानलक्षणं पुरुषार्थमुद्दिश्य केवलं ज्ञानाख्येनैकेन भावेन विमोचयति = पुनर्भोगापवर्गौ अकृत्वा संसारात् निवर्तयति ॥ ६३ ॥

[तत्त्वज्ञानफलम्]

एवं तत्त्वाभ्यासात्
नास्मि न मे नाहमित्यपरिशेषम् ।
अविपर्ययाद्विशुद्धं
केवलमुत्पद्यते ज्ञानम् ॥ ६४ ॥

इत्थं तत्त्वविषयज्ञानाभ्यासात् संशयभ्रमादिरहिततया प्रमात्मकं मिथ्याज्ञानासंस्पृष्टं सम्पूर्णं "अक्रियोऽहम् अकर्ताऽहम, किञ्चित्प्रत्यपि स्वामिता मयि नास्ति" इत्येवंरूपं परिशुद्धं ज्ञानमुत्पद्यते ॥ ६४ ॥

[पूर्णविशुद्धकेवलज्ञानफलम्]

तेन निवृत्तप्रसवां
अर्थवशात् सप्तरूपनिवृत्ताम् ।
प्रकृतिं पश्यति पुरुषः
प्रेक्षकवदवस्थितः सुस्थः ॥ ६५ ॥

तेन च विशुद्धतत्त्वज्ञानेन—सम्पादनीयकार्यशेषशून्याम्, विवेकज्ञानसामर्थ्यात् धर्मादिभावसप्तकान्निवृत्तां प्रकृतिम्, पुरुषः प्रेक्षकवद्वर्तमानः उदासीनः सुस्थः = रजस्तमोवृत्तिकलुषया बुद्ध्या अमिश्रितश्च सन् पश्यति ॥ ६५ ॥

[प्रकृतिसंयोगानुवृत्तावपि फलानुवृत्त्यभावः]

दृष्टा मयेत्युपेक्षक एकः
दृष्टाऽहमित्युपरमत्यन्या ।
सति संयोगेऽपि तयोः
प्रयोजनं नास्ति सर्गस्य ॥ ६६ ॥

पुरुषः 'प्रकृतिरीदृशी मया दृष्टा' इति निश्चित्य तां उपेक्षते, न पुनः द्रष्टुमिच्छति। प्रकृतिश्च 'पुरुषेणाहमेवं दृष्टा' इति निश्चित्य विरमति न पुनस्तं स्प्रष्टुं यतते। एवमुभयोरप्युदासीनत्वात् तयोः प्रकृतिपुरुषयोः संयोगेऽपि इतः परं तस्याः सृष्टेः प्रयोजनं न विद्यते ॥ ६६ ॥

[प्राप्तज्ञानस्यापि जीवितानुवृत्त्यौचित्यम्]

सम्यग् ज्ञानाधिगमात्
धर्मादीनां अकारणप्राप्तौ ।
तिष्ठति संस्कारवशात
चक्रभ्रमिवत् धृतशरीरः ॥ ६७ ॥

विशुद्धतत्त्वज्ञानोदयेन धर्माधर्मादीनामस्मिन् स्वकीयफलदानसामर्थ्ये-कुण्ठिते देहारम्भकादृष्टवशात् अयं जीवन्मुक्तः वेगवशात् किञ्चित्कालानुवृत्त-चक्रभ्रमणन्यायेन कालविशेषपर्यन्तं धृतशरीरस्सन तिष्ठति ॥ ६७ ॥

[पूर्णमुक्तिकालः]

प्राप्ते शरीरभेदे
चरितार्थत्वात् प्रधानविनिवृत्तौ ।
ऐकान्तिकमात्यन्तिकं
उभयं कैवल्यमाप्नोति ॥ ६८ ॥

प्रारब्धकर्मशेषानुभवेन कर्मानुगुणोत्पन्नशरीरनाशे जाते कृतार्थत्वात् प्रकृतिविनिवृत्तौ, पुरुषः अवश्यं आत्यन्तिकदुखनिवृत्तिं प्राप्नोति ॥ ६८ ॥

[साङ्ख्यस्य कपिलमूलकत्वम्]

पुरुषार्थज्ञानमिदं गुह्यं
परमर्षिणा समाख्यातम् ।
स्थित्युत्पत्तिप्रलयाः
चिन्त्यन्ते यत्र भूतानाम् ॥ ६९ ॥

यत्र शास्त्रे सकलभूतानामपि सृष्टिस्थितिलयाः आविर्भावावस्थानतिरो-भावाः एवं विचार्यन्ते, तादृशं इदं गुह्यं=साधारणबुद्धीनां असंस्कारिणां दुर्ज्ञेयम्, मोक्षरूपपरमपुरुषार्थज्ञानहेतुभूतं साङ्ख्यशास्त्रम् परमर्षिणा श्रीमता कपिलेन कथितम ॥ ६९ ॥

[शास्त्रविस्तरप्रकार:]

एतत् पवित्रमग्र्यं
    मुनिः आसुरयेऽनुकम्पया प्रददौ ।
आसुरिरपि पञ्चशिखाय
    तेन च बहुधा कृतं तन्त्रम् ॥ ७० ॥

एतच्च बुद्धेः पवित्रतासम्पादकं उत्तमं साङ्ख्यतत्त्वं कपिलो मुनिः आसुरिनाम्ने शिष्याय उपदिदेश। स च पञ्चशिखाख्यशिष्यायोपदिदेश। तेन चैतत् शास्त्रं शिष्यप्रशिष्यादिभ्यः उपदेशादिद्वारा बहुधा विस्तृतं कृतम् ॥ ७० ॥

[साङ्ख्यकारिकास्वरूपम]

शिष्यपरम्परयाऽऽगतं
    ईश्वरकृष्णेन चैतदार्याभिः ।
संक्षिप्तमार्यमतिना
    सम्यग् विज्ञाय सिद्धान्तम् ॥ ७१ ॥

ततश्चेत्थमेव शिष्यपरम्परया अनुवर्तितं एतत साङ्ख्यशास्त्रं आर्यमतिना ईश्वरकृष्णेन अध्ययनभावनाभ्यां सम्यक् सिद्धान्तज्ञानार्जनपूर्वकं विज्ञाय आर्याख्यछन्दस्सन्दब्धैः पद्यैः सङ्गृह्य निरूपितम् ॥ ७१ ॥

[ग्रन्थस्य सर्वशास्त्रार्थसारसङ्ग्रहरूपत्वम्]

सप्तत्यां किल येऽर्थाः
    तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य ।
आख्यायिकाविरहिताः
    पर(रि)वादविवर्जिताश्चापि ॥ ७२ ॥

**इति श्रीमदीश्वरकृष्णविरचिताः**

**साङ्ख्यकारिकाः समाप्ताः**

---

अस्यां कारिकासप्तत्यां कथा-तदनुगुणदृष्टान्तादिरहिताः मतान्तरानुवादादिविरहिताश्च ये अर्थाः कथिताः, ते सम्पूर्णस्य प्रकृत्यादिषष्टिपदार्थव्युत्पादकस्य षष्टितन्त्राख्यसाङ्ख्यशास्त्रस्यैवार्थाः इति ज्ञेयम् ॥

शास्त्रोक्ताः षष्ट्यर्थाश्चेते—

1 प्रधानपुरुषयोरस्तित्वम्, 2 प्रधानस्यैकत्वम्, 3 प्रधानस्यैव नानाफल-जनकत्वम्, 4 प्रधानपुरुषयोरन्यत्वम्, 5 प्रधानस्य पुरुषोपकारकत्वम्, 6 पुरुषस्यानेकत्वम्, 7 मुक्तौ प्रकृतिपुरुषविवेकः, 8 ततः प्राक् तयोः संश्लेषः, 9 अङ्गाङ्गिभावेन स्थूलसूक्ष्मशरीरद्वयसत्वम, 10 पुरुषस्याकर्तृत्वम्, 11-15 विपर्ययपञ्चकम्, 16-24 तुष्टिनवकम्, 25-52 अष्टाविंशत्यशक्तयः, 53-60 अष्टसिद्धयः—इति। एषामर्थानां स्वरूप-क्रिया-फलादिविज्ञानवान पुरुषः विविक्तस्वात्मसाक्षात्कारेण दुर्मोचनादस्मात् भवबन्धनात् मुक्तो भवतीति सारमिति शम् ॥ ७२ ॥

एवं गुरुकृपालब्धसाङ्ख्ययोगार्थसंविदा ।
कृता वेङ्कटनाथेन साङ्ख्यभावप्रकाशिका ॥

इति श्री क्रतुनाथवंश्येन न्याय-व्याकरण-
साहित्यालङ्कारादिविदुषा वेङ्कटनाथाचार्येण सङ्कलिता
साङ्ख्यकारिकाभावप्रकाशिका समाप्ता ॥
ॐ नमः परमऋषिभ्यः ॥



# अनुबन्धः द्वितीयः

---

1 साङ्ख्यसूत्रविषयाणामकाराद्यनुक्रमणिका
2 साङ्ख्यकारिकाविषयाणामकाराद्यनुक्रमणिका
3 उदाहृतदृष्टान्त-न्यायानामकाराद्यनुक्रमणिका
4 उदाहृतप्रमाण-लोकोक्तीनामकाराद्यनुक्रमणिका
5 साङ्ख्यसूत्राणामकाराद्यनुक्रमणिका
6 साङ्ख्यकारिकार्धानामकाराद्यनुक्रमणिका
7 उपयुक्तपदविशेषाणां अकाराद्यनुक्रमणिका
8 उद्धृतग्रन्थ-ग्रन्थकार-मत-मतीयनाम्नां अकाराद्यनुक्रमणिका
9 उपयुक्तसंक्षिप्ताक्षरसंज्ञाविवरणम्

---

# १. साङ्ख्यसूत्रविषयाणां अकाराद्यनुक्रमणिका

ए



क



ग



च



ज

श



स

## २. साङ्ख्यकारिकाविषयाणां अकाराद्यनुक्रमणिका

त



ध



न



प

---

## ३. उदाहृतदृष्टान्त-न्यायानां अकाराद्यनुक्रमणी

| क्रमसंख्या | विषयः | पृष्ठसंख्या |
|---|---|---|
| 1 | अग्न्ययसोः परस्परं संयोगविशेषादिव—बुद्ध्युपरागात् पुरुषे कर्तृत्वस्य, पुरुषसांनिध्यात् बुद्धौ चित्त्वस्य चेति परस्परधर्मारोपः औपाधिकः ॥ | 48 |
| 2 | अङ्कुरादिवत्—अपौरुषेयोऽपि वेदः अनित्य एव ॥ | 96 |
| 3 | अणुवत्—यथा अणूनां घटादिहेतुता द्व्यणुकादिद्वारैव —तथा–प्रकृतेरपि महदादिद्वारैव जगत्सर्गहेतुता ॥ | 25<br>125 |
| 4 | अजवत्—यथा इन्दुमतीशोकाभिभूते अजचेतसि वसिष्ठोपदेशः न लग्नः, तथा रागादिमलिनचित्तेऽपि उपदेशः नैव लगति ॥ | 86 |
| 5 | अदृष्टोद्भूतिवत् — यथा सर्गादौ कालविशेषनिमित्तात् प्रकृतिक्षोभकादृष्टाभिव्यक्तिः, तथा अहङ्कारोऽपि कर्त्रन्तरमनपेक्ष्य केवलं कालविशेषनिमित्तादेव जायते ॥ | 127 |
| 6 | अन्धादृष्ट्या चक्षुष्मतामपि अनुपलम्भो यथा नास्ति—तथा अज्ञादर्शनेऽपि, ज्ञानिनां आत्मन एकरूपत्वानुपलम्भो न विद्यते ॥ | 46 |
| 7 | अन्नाद्यवत्—यथा राज्ञां पाचकादिकृतान्नाद्युपभोगः, तथा बुद्धिकृतधर्माधर्मफलसुखदुःखोपभोगः पुरुषस्यापि । तेन कर्तुरेव क्रियाफलभोगः इति न नियमः ॥ | 34 |
| 8 | अयसि वह्निवत्—यथा अयःपिण्डे वह्नेरौष्ण्यं बाध्यते, तथैव चेतने सत्त्वादिगुणसंसर्ग एव बाध्यते। न तु स्वरूपतो बाधः श्रुत्यादिविवक्षितः ॥ | 92 |
| 9 | अयस्कान्तवत्—अविकारिणोऽपि पुरुषस्य अयस्कान्तवत् सान्निध्यमात्रेण तत्तद्वृत्तिकर्तृत्वम् ॥ | 56 |

19 **उपास्यसिद्धिवत्** – यथा उपास्यानां चतुर्मुखादीनां सिद्धि योगेऽपि न कृतकृत्यता, अत एव तेषां योगनिद्रादिना योगाभ्यासानुवृत्तिश्रुतिश्च, तथैव अन्येषामपि ऐश्वर्यादियोगेऽपि न कृतकृत्यता = न दुःखात्यन्तनिवृत्तिः ॥ 86

20 **उष्ट्रकुङ्कुमवहनवत्** – यथा उष्ट्रादेः कङ्कुमादिवहनं न स्वार्थम्, अभोक्तृत्वात्, एवं प्रकृतेः सृष्टिरपि न स्वार्था, किन्तु पुरुषस्यैव भोगापवर्गार्था ॥ 73, 121

## औ

21 **औत्सुक्यनिवृत्तिप्रयत्नवत्**—यथा लोकः इच्छानिवृत्तिकृते कर्मसु प्रवर्तते, तथा पुरुषविमोक्षेच्छया प्रकृतिरपि प्रवर्तते ॥ 155

22 **औषधादिसिद्धिवत्**—यथा औषधाद्युपयोगजन्याः सिद्धयः, तथैव योगजाः सिद्धयोऽपि सत्यभूता एव ॥ 112

23 **कण्टकनिवृत्तिवत्** – यथा पादप्रविष्टकण्टकनिवृत्तिः दुःखभोगनिवृत्तिशेषभूतैव, तथा दुःखनिवृत्तिरपि आत्मनो दुःखभोगनिवृत्तिशेषभूतैव; न तु स्वतः पुरुषार्थः ॥ 5

24 **कण्टकमोक्षवत्**—यथा कण्टकस्वरूपाभिज्ञं प्रति कण्टकं न दुःखजनकम्, किन्तु अनभिज्ञान् प्रत्येव; तथा प्रकृतिरपि कृतकृत्यं पुरुषं प्रति न दुःखजननी, किन्तु मूढान् प्रत्येव ॥ 51, 122

25 **करणसिद्धिवत्**—यथा रूपादिज्ञानक्रियया चक्षुरादिकरणसिद्धिः, तथा प्रत्यक्षजातीयव्याप्तिग्रहात् अप्रत्यक्षयोः प्रकृतिपुरुषयोः सिद्धिर्भवति ॥ 33

26 **कर्दमसंयोगे काष्ठादेरिव**—यथा पार्थिवकर्दमादिसंयोगात् काष्ठादेः तत्संयुक्तवस्तुसदृशः परिणामः, तथा प्रकृतिसंयोगेन पुरुषस्यापि महदादिपरिणामः कुतो नेति शङ्का ॥ 51

27 कर्मवत्—यथा स्वत एव एकः ऋतुः निवर्तते, इतरश्च प्रवर्तते इत्येवंरूपं कालादिकर्म, तथा प्रकृतिरपि यथाकालं स्वत एव प्रवर्तते ॥ 74

28 कान्तादिवत्—यथा कान्ता सुखदुःखमोहधर्मिणी सुखदुःख मोहधर्मकद्रव्यजन्या, तथा प्रकृतिरपि ॥ 23

29 कायव्यूहादिवत्—सौभर्यादिः कायव्यूहादाविव, एकस्यैव नानोपाध्यवच्छेदेन सुखदुःखादियोगो भवति ॥ 45

30 कुठारवत्—यथा छिदाऽयोगव्यवच्छिन्नतया प्रहारस्यैव मुख्यं करणत्वम्, कुठारस्य तु तद्द्वारा गौणम्; तथा पुरुषे साक्षाद्विषयसमर्पकतया बुद्धेरेव प्रधान-करणत्वम्, इन्द्रियाणां तु गौणत्वमेव ॥ 59

31 कुमारीकङ्कण(शङ्ख)वत् —यथा कुमारीहस्तकङ्कणानां अन्योन्यसङ्गेन झणत्कारो भवति, तथा बहुभिः सङ्गे सत्यपि रागाद्यभिव्यक्तया योगभ्रंशकः कामक्रोधादिः उत्पद्यते ॥ 82

32 कुलवधूवत्—यथा श्वशुरादिना दृष्टदोषा कुलवधूः लज्जिता तत्समीपे नोपसर्पति, तथा पुरुषेण दृष्टदोषा प्रकृतिरपि लज्जितेव पुनः न पुरुषं प्रत्युपसर्पति ॥ 76

33 कुसुमवच्च मणिः—यथा जपाकुसुमेन सन्निकृष्टेन अस्वच्छः, निवृत्तेन स्वच्छश्च स्फटिकमणिर्भवति; तथा पुरुषोऽपि विषयोपरागे कलुषितः, वृत्तिनिरोधे स्वच्छः स्वरूपा वस्थितश्च भवति ॥ 58

34 कोमलकण्टकन्यायः-आत्मसाक्षात्कारानन्तरमपि ध्यानानु वृत्त्यावश्यकतायां अयं न्यायः प्रयुज्यते ॥ 118

35 कोशकारवत्—कोशकारकृमिः स्वनिर्मितेनैवावासेन यथा स्वात्मानं बध्नाति, तथा दुःखहेतुभिः स्वधर्मैरेव प्रकृतिरपि स्वात्मानं बध्नाति ॥ 76

स्फटिके सङ्क्रान्तिः, किन्तु प्रतिबिम्बमात्रम् , तथा बुद्धौ पुरुषस्य न सङ्क्रान्तिः, किन्तु प्रतिबिम्बमात्रमेव॥ 119

56 जलचन्द्रवत्—यथा जले चन्द्रः, तथा एक एव भूतात्मा भूते भूते व्यवस्थितः एकधा बहुधा च दृश्यते॥ 45

57 जलमग्नवत्—यथा जले मग्नः पुरुषः पुनरुत्तिष्ठति, तथा प्रकृतिलीनोऽपि पुरुषः ईश्वरभावेन पुनराविर्भवति॥ 72

58 जलादिवदङ्कुरे-बीजाद्याश्रयहीनं जलं यथा नाङ्कुरं जनयति, तथा देहमूलभूतादृष्टमपि आत्माधिष्ठानं विना न देहं जनयति॥ 126

59 जलाभिषेकवत्—यथा जाड्यार्तस्य जलाभिषेकः केवलं दुःखहेतुरेव न तु जाड्यविमोकहेतुः, तथा वैदिक कर्मापि आत्मनः केवलं दुःखहेतुरेव, न तु संसारविमोक्षहेतुः॥ 28

60 ज्वलद्गृहाच्छ्लिष्टं गृहं—यथा ततो विच्छिद्य रक्षति, एवं दोषभूयिष्ठप्रकृतितः आत्मानं विच्छिद्य रक्षति बुधः॥ 10

त

61 तरणिवत्—यथा सूर्यादिज्योतिर्मण्डलमपि पार्थिवद्रव्यमाश्रित्यैव सत्तां भजते, तथा लिङ्गशरीरमपि सत्त्वप्रकाशमयं सूक्ष्मभूतमयशरीरमाश्रित्यैव सत्तां भजते॥ 65

62 तेजोवत्—प्रकाशतेजसोरिव प्रकाशात्मनोः धर्मधर्मिभावो न स्वीक्रियते॥ 43

63 तैलादिवत्—यथा तैलादिः, तथा महदादिरपि स्वोपहित त्रिगुणोपादानकः॥ 41

द

64 दत्तात्रेयसङ्गवत्—यथा अलर्कस्य दत्तात्रेयसङ्गमात्रादेव विवेकः प्रादुरभूत्, तथा सिद्धपुरुषसङ्गात् मूढोऽपि ज्ञानी भवति॥ (मा. पु. 38 43) 85

भ

93 भरतवत्—यथा भरतस्य राजर्षेः धर्म्यमपि दीनानाथ-हरिणशावकस्य पोषणं बन्धायाभवत्, तथा धर्मोऽपि अन्तरङ्गासाधनं बन्धाय ॥ 81

94 भृत्यवत् — यथा भृत्यस्य स्वाभाविकात् संस्कारादेव स्वामिसेवा, न तु स्वभोगापेक्षया, एवं प्रकृतेरपि स्वभावसिद्धात् संस्कारादेव पुरुषसेवा ॥ 74

95 भेकीवत् — यथा कामरूपिणी काऽपि भेकराजदुहिता राजपत्नी भूत्वा राज्ञि यं नियमं चक्रे, राज्ञा तद्विस्मरणात् सा पुनः भेक्येव बभूव, तथा नियमविस्मरणे अनर्थः नियत एव ॥ 83

96 भ्रान्तप्रतिपन्नपदार्थवत्–दुष्टकारणजन्यत्वाभावात् प्रपञ्चस्य न अवस्तुत्वम् ॥ 26

97 मणिवत्— यथा अयस्कान्तमणेः सान्निध्यमात्रेण अयोनिष्कर्षकत्वम्, तथा आदिपुरुषसंयोगमात्रेणैव प्रकृतेर्महदादिरूपेण परिणामः, न तु सङ्कल्पादिना ॥ 31

म

98 मदशक्तिवत् —यथा मादकताशक्तिः प्रत्येकद्रव्यावृत्तिरपि मिलितद्रव्ये वर्तते, तथा चैतन्यमपि स्यादिति शङ्का ॥ 66

99 मनुष्यवत्—यथा मनुष्यलोकस्य उपदेशमात्रात् न ज्ञाननिष्पत्तिः, तथा इतरलोकानामपीति ॥ 125

100 मनुष्यादेः पूतिभाववत्—यथा मनुष्यादेः भोक्तुरनधिष्ठाने पूतिभावः तथा वृक्षादीनामपि शुष्कत्वादिः । 11

101 मन्त्रादिप्रामाण्यवत्–यथार्थज्ञानजननशक्तेः मन्त्रायुर्वेदादाविव वेदेष्वपि सत्त्वात् अखिलानामपि वेदानां प्रमाण्यं सिद्ध्यति ॥ 97

102 मलिनदर्पणवत्—यथा मलैः प्रतिबन्धात् मलिनदर्पणे अर्थः न प्रतिबिम्बति, तथा मलिनचेतसि उपदेशात् आपातज्ञानमपि न जायते ॥ 86

135 सूर्यादिवत्—चेतने प्रकाशधर्मः सूर्यादिवत् नास्ति। किन्तु चित्स्वरूप एव पदार्थः जडं प्रकाशयति ॥ 124

136 सेनाजयाध्यासो राज्ञ इव—यथा स्वशक्तिषु योधेषु वर्तमानौ जयपराजयौ राजन्यध्यवस्येते, तथा स्वशक्तौ प्रकृतौ वर्तमानं स्रष्टृत्वादिकमपि शक्तिमत्सु पुरुषेषू पचर्यते ॥ 51

137 स्फटिकलौहित्यवत्—[83]

138 स्फटिकलौहित्यवत् — यथा शुक्लस्वभावस्य स्फटिकस्य आवारकजपासंयोगवशात् रक्तत्वतन्निवृत्त्यादिव्यवहारः, तथा नित्यमुक्तस्य पुरुषस्य आवारकप्रतिबिम्बवशात् बन्धमोक्षादिव्यवहारोऽपि ॥ 117

139 स्फटिकैक्यवत्—यथा स्फटिकैक्ये सति आरोपितानां नीलपीतादीनां व्यवस्था न सम्भवति, तथा आत्मैक्ये, सति अयं मुक्तः अयं बद्धः इति व्यवस्था न संभवति। अतः आत्मानोऽनन्ता एव ॥ 45

140 स्रुघ्नस्थपाटलिपुत्रस्थयोः—मञ्जिष्ठावस्त्रयोः यथा नोपरागः, तथा परिच्छिन्नात्मवादे देहान्तरस्थात्मनो बाह्यविषयेणोपरागो न स्यात्॥

141 स्वप्नजागराभ्यामिव—यथा स्वप्नजागरपदार्थाभ्यां अन्योन्यसहकारिभावेन एकः पुरुषार्थो न सम्भवति, तथा कर्मज्ञानयोरनुष्ठितयोः मुक्तिरपि न संभवति॥ 67

142 स्वप्नवत्—विनाशस्य सर्ववस्तुधर्मत्वात्, विनाशी सर्वोऽपि स्वप्नवत् मिथ्यैवेति शून्यवादी ॥ 16

143 स्वप्नादितुल्यम्—सृष्टिमात्रं स्वप्नादितुल्यमिति, तादृशसृष्टिकर्तृत्वं प्रकृतेः कथमित्याशङ्का ॥ 51

ह

144 हंसक्षीरवत—यथा क्षीरजलयोरेकीभावापन्नयोर्मध्ये असा-

रजलत्यागेन सारक्षीरोपादानं हंसस्येव, न तु काकादेः; तथा हेयानां प्रकृत्यादीनां हानम, उपादेयस्य चात्मनः उपादानं च विरक्तस्य परमहंसस्येव सम्भवति, न तु रागिणः इति शम् ॥ 84

---

## ४. उदाहृतप्रमाण-लोकोक्तीनां अकाराद्यनुक्रमणिका

# ५. साङ्ख्यसूत्राणां अकारादिसूचनी

## ६. साङ्ख्यकारिकार्धानां अकाराद्यनुक्रमणिका

# ७. उपयुक्तपदविशेषाणामकारादिसूचनी सविवरणा

| क्रमाङ्कः | पदानि | पु. | पं. | क्रमाङ्कः | पदानि | पु. | पं. |
|---|---|---|---|---|---|---|---|
| | | | अ | | | | |
| 1 | अक्षम् | 47 | 19 | 9 | अधिकारः | 4 | 10 |
| 2 | अचाक्षुषम् | 21 | 1 | 10 | अधिकारिणः | 24 | 20 |
| 3 | अण्डजम | 108 | 12 | 11 | अधिवासितम् | 148 | 26 |
| 4 | अतिशयः | 85 | 2 | 12 | अध्ययनम् | 153 | 5 |
| 5 | अत्यन्तः | 133 | 5 | 13 | अध्यवसायः | 53 | 6 |
| 6 | अदृष्टम् | 127 | 13 | 14 | अध्यासः | 51 | 1 |
| 7 | अद्धा | 157 | 5 | 15 | अनिर्वचनीयम् | 97 | 12 |
| 8 | अधर्मः | 150 | 17 | 16 | अनुत्तमाम्भस्तुष्टिः | 152 | 20 |

---

1 बुद्धिः ।

2 अप्रत्यक्षम् ।

3 पक्षिसर्पादिशरीरम् ।

4 ज्ञानकाष्ठा ।

5 अन्तमतिक्रान्तः ।

6 प्रकृतिक्षोभकं बुद्धिकर्म । अस्य अहङ्काराद्युत्पत्तौ सहकारित्वेऽपि प्रकृतेः स्वकार्यकरणे सहकारित्वं नास्ति, प्रकृतेरविवेक एव सहकारी ।

7 वस्तुतः ।

8 रजस्तमोधियां कार्यं, अधोलोकगमनहेतुः ।

9 आधिक्येन प्राधान्येन करणम्, आरम्भणम् ।

10 मन्दमध्यमोत्तमभेदात् त्रिविधाः । तत्र मन्दानां श्रवणमननिदिध्यासनानि, मध्यमानां श्रवणमनने, उत्तमानां श्रवणमात्रं च तत्त्वज्ञानहेतवः ।

11 कृतसंस्काराधानम ।

12 अध्यात्मविद्यानामर्थज्ञानपर्यन्तग्रहणम् ।

13 निश्चयाख्या बुद्धिवृत्तिः ।

14 अन्यत्र वर्तमानस्य धर्मस्य अन्यत्रोपचारः ।

15 सत्त्वेन असत्त्वेन च निर्वक्तुमशक्यम् । अनिर्वचनीयख्यातिः न साङ्ख्याभिमता ।

16 भोगाद्विषयाशा वर्धते एवेति निश्चित्य भोगाद्विरतिः ।

| | | | |
|---|---|---|---|
| 17 | अनुद्भवः | 8 | 12 |
| 18 | अनुमानम् | 32 | 12 |
| 19 | अनुशयिनः | 111 | 23 |
| 20 | अनुश्रवः | 133 | 13 |
| 21 | अन्धतामिस्रः | 152 | 8 |
| 22 | अन्यथाख्यातिः | 97 | 14 |
| 23 | अपरिच्छिन्नत्वम् | 26 | 3 |
| 24 | अपरोक्षः | 20 | 15 |
| 25 | अपवर्गः | 75 | 1 |
| 26 | अपवादः | 16 | 12 |
| 27 | अपानः | 144 | 13 |
| 28 | अभिनिवेशः | 69 | 13 |
| 29 | अभिमानः | 53 | 17 |
| 30 | अभिव्यक्तिः | 37 | 7 |
| 31 | अमायिकम् | 67 | 10 |
| 32 | अमूलम् | 23 | 23 |
| 33 | अमृतत्वम् | 5 | 18 |
| 34 | अवस्था | 9 | 5 |
| 35 | अविद्या | 69 | 13 |
| 36 | अविवेकः | 18 | 14 |
| 37 | अविशेषम् | 62 | 5 |
| 38 | अव्यक्तम् | 133 | 16 |

---

17 तिरोभावः।

18 व्याप्यदर्शनात् व्यापकज्ञानम्।

19 विरक्ताः।

20 श्रूयते परं न केनापि क्रियते इत्यर्थे-वेदः

21 दिव्यादिव्यभेदेन दशविधानां शब्दादीनां अणिमाद्यष्टैश्वर्याणां च प्राप्तौ अभिनिवेशः।

22 वस्तुनः वस्त्वन्तररूपेण भानम्। नेयं साङ्ख्यसम्मता।

23 व्यापकत्वम्।

24 साक्षात्कारः

25 कैवल्यम्। प्रकृतिपुरुषयोरेकतरस्यौदासीन्यं वा। तत्र प्रकृतेः विवेकिनं प्रत्यप्रवर्तनम्, पुरुषस्य प्रकृत्यनभिष्वङ्गः।

26 मिथ्यावादः।

27 कृकाटिका-पृष्ठ-पाद-पायूपस्थ-पार्श्ववृत्तिः वायुः।

28 मरणादित्रासः।

29 बुद्ध्युपादानकः अहङ्कारः। अन्तःकरणरूपो द्रव्यविशेषः इति केचित्।

30 कारणे एव सतां कार्याणां प्रकाशावस्था।

31 स्थिरं सत्यं च।

32 अनादि।

33 आभूतसंप्लवं स्थानम्।

34 सङ्घातविशेषरूपविकाराख्यः बाल्यकौमारयौवनादिरूपो वा देहधर्मः।

35 विपर्ययभेदः। सा च अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिः।

36 अभेदाभिमानः। विवेकप्रागभावावस्थबुद्धिधर्मः।

37 शान्तत्वादिविशेषशून्यं भूतसूक्ष्मं पञ्चतन्मात्राख्यम्।

38 मूलप्रकृतिः।

---

39 एकादशेद्रियवधाः सप्तदशबुद्धिवधाश्च करणवैकल्यनिमित्ताः। ताश्च–अनैश्वर्य–अवैराग्य–अधर्मरूपाः।

40 अशक्याय फलायोपदेशः।

41 नृशृङ्गादीनामिव अत्यन्तासतां ख्यातिः। सा च न साङ्ख्यसम्मता।

42 आत्मानात्मनोरेकताप्रत्ययः।

43 अहमित्यभिमानः।

44 सर्पेण चिरकालोपभुक्ता जिर्णत्वक्।

45 अनायासेन, तत्त्वतः, साक्षाद्वा।

46 लिङ्गदेहस्य लोकान्तरातिवाहकं सूक्ष्मशरीरम्।

47 आत्मसाक्षात्कारः।

48 देवान् अग्न्यादींश्च अधिकृत्य प्रवृत्तं दाहाद्युत्थं दुःखम्।

49 भूतानि व्याघ्रादिप्राणिनः अधिकृत्य प्रवृत्तम्।

50 आत्मानं देहं मनश्चाधिकृत्य प्रवृत्तम। व्याध्यादि कामादि च।

51 आत्मास्तित्वोपदेशश्रवणमात्रेण कृतकृत्यताबुद्धिः। सा च चतुर्विधा—प्रकृतितुष्टिः= अम्भः, उपादानतुष्टिः=सलिलम, कालतुष्टिः=मेघः, भागतुष्टिः=वृष्टिः इति।

52 वेदविहितं यागादिकर्म।

53 योग्यः। दृष्टविषयः।

54 स्रष्टृत्वम्।

55 विषयाकारपरिणामः।

56 स्थिरं सत् सुखकरम् = अनुद्वेगकरमासनम्।

57 मनसा सह दशानामपीन्द्रि

---

याणां सौन्दर्यघातुकाः विकलभावाः। ते च—बाधिर्यम्, कुष्ठता, अन्धत्वम्, जडता, अजिघ्रता, मूकता, कौण्यम्, पङ्गुत्वम्, क्लैब्यम्, उदावर्तम्, मुग्धता इत्येकादशविधाः।

58 प्रकृतिलयेन ईश्वरतां प्राप्तः। न तु वेदान्तोक्तः ईश्वरः।

59 परहिंसां विना स्वात्मसुखं न लभ्यते इति निश्चित्य तादृशस्वात्मसुखस्यैव त्यागेन तुष्टिः।

60 हृत्कण्ठतालुमूर्धभ्रूमध्यवृत्तिः वायुः।

61 आविर्भावः।

62 वृक्षादिशरीरम्।

63 उद्बोधः। अभिव्यक्तिः।

64 समीचीनोपायानुपदेशः।

65 स्वीयकर्मफलभोगः।

66 देवानां स्थावरादीनां च देहः।

67 गुणवत्, सङ्गि च। गुणवत्त्वसङ्गित्वयोरभावात् नित्यत्वेऽपि पुरुषस्य नोपादानत्वम्। महदादीनां कार्यरूपत्वात् तेषामपि नोपादानत्वम्। किन्तु प्रकृतेरेवोपादानत्वम्।

68 संन्यासस्वीकारात् मुक्तिर्भवत्येवेति नैर्भर्यम्।

69 राजर्षीणां देहः।

70 मनः।

71 दन्दशूकादिशरीरम्।

72 आगमाविरोधिन्यायेन अर्थपरीक्षणम्। मानवम् = तारतारम् = सिद्धिविशेषश्च।

73 अवश्यम्भावः।

74 साक्षात्।

---

75 इच्छापूरणसमर्थः बुद्धिधर्मः ।

76 अकर्तृत्वम् ।

77 परस्परवियोगः ।

78 इन्द्रियाणां दर्शनादिवृत्तिं प्रति, वृत्तीनां पुरुषनिष्ठबोधाख्यफलं प्रति च करणत्वम् ।

79 बुद्ध्याश्रिताः निमित्तरूपाः धर्माद्याः अष्टौ भावाः ।

80 विहितनिषिद्धव्यापाराः, अदृष्टं वा ।

81 ऋषीणां देहः ।

82 अनागत–वर्तमान–अतीतभेदात् त्रैविध्यम् ।

83 शरीररूपकार्याश्रयाः कलिलादयः ।

84 काले निर्भरता, कालः स्वयमेव कर्मादिकं पचतीति ।

85 आत्यन्तिकः दुःखत्रयाभावः ।

86 प्रारब्धभोगक्रिया ।

87 शरीरप्रवेशः पुरुषस्य ।

88 पुरुषोपकरणम् । सत्त्वरजस्तमांसि ।

89 रजःप्रधानाः दुःखावहाः ।

90 ध्यानरूपा चित्तवृत्तिः । सा च सर्ववृत्तिभ्यः श्रेष्ठा । तदाश्रयतया चिन्तापरनाम्नी बुद्धिरेव सर्वकरणेभ्यः उत्तमा ।

91 दर्पणे मुखप्रतिबिम्बवत् बुद्धौ चैतन्यप्रतिबिम्बः = चैतन्याध्यासः = चिदावेशः ।

92 अन्वेषणम् ।

93 रेचकः ।

ज

| | | | |
|---|---|---|---|
| 94 | जरायुजम् | 108 | 12 |
| 95 | जाड्यम् | 28 | 2 |
| 96 | जीवत्वम् | 127 | 2 |
| 97 | जीवन्मुक्तः | 78 | 1 |
| 98 | ज्ञः | 133 | 16 |
| 99 | ज्ञानम् | 150 | 18 |

त

| | | | |
|---|---|---|---|
| 100 | तत्त्वम् | 20 | 11 |
| 101 | तत्त्वाख्यानम् | 34 | 13 |
| 102 | तत्त्वाभ्यासः | 77 | 8 |
| 103 | तन्मात्राणि | 21 | 23 |
| 104 | तमः | 138 | 14 |
| 105 | तमः | 152 | 4 |
| 106 | तामसः | 143 | 2 |
| 107 | तामिस्रः | 152 | 8 |
| 108 | तुच्छम् | 41 | 3 |
| 109 | तुष्टिः | 70 | 16 |
| 110 | तुष्टिः | 151 | 9 |
| 111 | तैजसम् | 143 | 2 |
| 112 | तैर्यग्योनः सर्गः | 154 | 5 |

द

| | | | |
|---|---|---|---|
| 113 | दानम् | 153 | 7 |

---

94 मनुष्यादिशरीरम्।

95 अविवेकः।

96 अहङ्कारविशिष्टस्य पुरुषस्य धर्मः।

97 मध्यविवेकावस्थः।

98 पुरुषः।

99 भवबन्धविमोचनहेतुः विविक्तात्मसाक्षात्कारपूर्वकं ज्ञानम्।

100 अनारोपितम्।

101 विवेकसाक्षात्कारः।

102 प्रकृतिपर्यन्तेषु जडेषु नेति नेतीत्यभिमानत्यागः।

103 सूक्ष्मभूतानि शान्तत्वादिरहितशब्दादिमात्रवन्ति।

104 मोहात्मकं गुरु आवारकश्च सर्ववस्तूनां नियामकम्।

105 अविद्या। अव्यक्ताद्यष्टसु आत्मत्वबुद्धिः। तच्च तमः अष्टधा।

106 पञ्चतन्मात्रम्।

107 द्वेषः। दिव्यादिव्यभेदेन दशविधानां शब्दादीनां अणिमाद्यष्टानां च रसानुभवविघातके द्वेषः।

108 पुंप्रकृत्यन्यत्।

109 सा च नवधा — प्रकृतिः = अम्भः, उपादानं = सलिलम्, कालः = मेघः, भाग्यं = वृष्टिः, पारम्, सुपारम्, पारापारम् अनुत्तमाम्भः, उत्तमाम्भः, इति।

110 धर्म–वैराग्य–ऐश्वर्यरूपा।

111 राजसम्।

112 व्यष्टिसृष्टिः

113 विवेकज्ञानस्य शोधनम् = सदा मुदितम्।

| | | | |
|---|---|---|---|
| 114 | दीक्षा | 78 | 8 |
| 115 | दुःखम् | 5 | 7 |
| 116 | दुःखत्रयम् | 133 | 2 |
| 117 | दृष्टम् | 5 | 14 |
| 118 | देहः | 65 | 18 |
| 119 | दैवस्सर्गः | 154 | 4 |
| 120 | द्वारम् | 146 | 26 |
| 121 | द्वारि | 146 | 26 |
| 122 | द्वेषः | 69 | 13 |
| | **ध** | | |
| 123 | धर्मः | 150 | 16 |
| 124 | धर्मवेत्ता | 23 | 10 |
| 125 | धारणा | 68 | 18 |
| 126 | ध्यानम् | 68 | 7 |
| | **न** | | |
| 127 | नाशः | 37 | 12 |
| 128 | नित्यः | 10 | 13 |
| 129 | निर्भागत्वम् | 100 | 20 |
| 130 | निवृत्तिः | 5 | 16 |
| 131 | न्यायः | 14 | 12 |
| | **प** | | |
| 132 | पञ्चविंशतितत्त्वानि | 3 | 12 |
| 133 | पञ्चविंशतिर्गणः | 21 | 11 |

---

114 आध्यात्मिकसाधनयोग्यताप्रदानम्।

115 चित्तधर्मविशेषः।

116 आध्यात्मिकं, आधिदैविकं, आधिभौतिकं च।

117 लौकिकोपायः।

118 मिलितपञ्चभूतपरिणामः, चातुर्भौतिकः ऐकभौतिको वा।

119 (व्यष्टिसृष्टिः)

120 गौणम्।

121 प्रधानम्।

122 दुःखानुशयी = दुःखानन्तरं जायमानः।

123 निरतिशयसत्त्वात्मिकायाः बुद्धेः कार्यभूतः, ऊर्ध्वलोकगमनहेतुः।

124 आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना यस्तर्केणानुसन्धत्ते सः।

125 रेचकपूरककुम्भकैः प्राणनिरोधः = वशीकरणम्। पातञ्जलोक्ता त्वन्या)।

126 ज्ञानप्रतिबन्धकविषयोपरागस्योपहतिहेतुः। ध्येयातिरिक्तवृत्तिनिरोधरूपेण सम्प्रज्ञातयोगेन साधनीयः। मनसः निर्विषयीकरणम्।

127 कारणे लयः = तिरोभावः। कारणेष्वविभागावस्था।

128 कालानवच्छिन्नः।

129 निरवयवत्वम्।

130 अनागतावस्थापरिपालनम्।

131 तर्कः = युक्तिः।

132 प्रकृति–महत्–अहङ्कार–पञ्चतन्मात्र-भूतानि, एकादशेन्द्रियाणि पुरुषश्च।

133 (132)

---

134 पुरुषाणां बुद्धेः परमः इष्टः। त्रिविधानां दुःखानां अत्यन्तनिवृत्तिः।

135 परम्परासमाप्तिः।

136 अणु–महत्–दीर्घ–ह्रस्वं च।

137 धनार्जनादौ अतिदुःखं मन्वानस्य तत्सम्पादनादौ अनासक्तिरूपं वैराग्यम्। बाह्या।

138 धनादीनां भोगेन क्षीणताभावनेन भोगाद्विरामरूपं वैराग्यम्। (बाह्या)।

139 असंहतो निर्गुणः कूटस्थो द्रष्टा भोक्ता विभुः नित्यः चित्स्वरूपः प्रतिशरीरं भिन्नः।

140 भोगापवर्गरूपः।

141 प्रत्यक्षीकृतजातीयविषयकं अन्वयमात्रव्याप्तिकम्।

142 दृष्ट इव अदृष्टेऽपि यस्मिन् वस्तुनि बुद्धिपूर्वकत्वधीः उपजायते तत्। न तु पुरुषोच्चरितमात्रम्।

143 सत्त्वरजस्तमसां साम्यावस्था, तत्त्वान्तरोपादानम्।

144 स्वयमेव पक्वावस्था भविष्यतीति प्रकृतावेव नैर्भर्यम्।

145 जन्येश्वरः।

146 व्यापकः।

147 व्याप्तिः।

148 अर्थसन्निकर्षजन्या वृत्तिः। चक्षुरादीन्द्रियसन्निकर्षद्वारा तमोभिभवसमकालीनसत्त्वसमुद्रेकप्रयुक्तः बुद्धेः विषयाकारपरिणामः।

149 बुद्धिसर्गः = विपर्यय–अशक्ति–तुष्टि–सिद्धिरूपः।

150 प्रधीयते अस्मिन् कार्यजातम् मूलप्रकृतिः।

151 असन्निकृष्टार्थपरिछित्तिः। संशय विपर्यय–विकल्प – स्मृतिरूपचित्रवृत्तिभिन्ना चित्तवृत्तिः।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| 152 | प्रमाणम् | 28 | 17 | 161 | बुद्धिवधः | 152 | 13 |
| 153 | प्राणः | 144 | 13 | 162 | बुद्धिवृत्तिः | 56 | 19 |
| 154 | प्राणाद्याः | 144 | 13 | 163 | बाह्यरूपत्वम् | 109 | 14 |
| 155 | प्राधान्यम् | 60 | 13 | | भ | | |
| | ब | | | 164 | भागः | 101 | 6 |
| 156 | बन्धः | 7 | 9 | 165 | भाग्यतुष्टिः | 152 | 20 |
| 157 | बाह्यतुष्टिः | 152 | 21 | 166 | भावः | 37 | 2 |
| 158 | बीजम् | 109 | 19 | 167 | भावना | 68 | 2 |
| 159 | बुद्धः | 10 | 14 | 168 | भावाः | 148 | 26 |
| 160 | बुद्धिः | 53 | 6 | 169 | भावाष्टकम् | 76 | 22 |

---

152 असन्निकृष्टार्थपरिच्छित्तौ साधकतमम्। पौरुषेयबोधरूपप्रमां प्रति करणम्। प्रत्यक्ष–अनुमान-शब्दभेदात् त्रिविधम्।

153 नासाग्रहृन्नाभिपादाङ्गुष्ठवृत्तिः वायुः।

154 प्राणापानव्यानोदानसमानाः।

155 बाह्येन्द्रियक्रियायां मनसः, मनोव्यापारे अहङ्कारस्य, अहङ्कारव्यापारे बुद्धेश्च प्राधान्यम्।

156 दुःखयोगः। स च प्रकृतावात्मत्वज्ञाननिमित्तः प्राकृतिकः, विकारेष्वज्ञाननिमित्तः वैकृतिकः, तत्त्वज्ञानं विना यज्ञयागादिष्भिनिवेशनिमित्तः दाक्षिणकः इति त्रिविधः।

157 देहात्माभिमानदशायामेव जायमानं विचित्रं वैराग्यम्। सा च पार-सुपार-पारापार-अनुत्तमाम्भः-उत्तमाम्भः-उत्तमाम्भस्तुष्टयः इति पञ्चधा।

158 बन्धसंस्कारः।

159 अलुप्तचिद्रूपः।

160 अध्यवसायः, असाधारण्येन निश्चयवृत्तिः।

161 अशक्तयः। नवविधतुष्टीनां अष्टसिद्धीनां च वैकल्यात् जायमानाः बुद्धिदोषाः।

162 अध्यवसायः।

163 परिपूर्णचित्स्वरूपेणावस्थानम्

164 अवयवः।

165 दैवे नैर्भर्यं यद्द्रव्यं तत्सर्वं दैवमेव करिष्यतीति।

166 कार्यरूपं वस्तु। उत्पत्तिः।

157 उपासना।

168 धर्माधर्माद्यष्टभावाः।

169 धर्माधर्म-ज्ञानाज्ञान-ऐश्वर्यानैश्वर्याणि।

---

170 अहङ्कारः ।

171 चिदवसानः । पुरुषस्वरूपे चैतन्ये वा पर्यवसानवान् = अर्थोपरक्तवृत्तिप्रतिबिम्बावच्छिन्नचैतन्यस्वरूपे पर्यवसितः ।

172 शरीरम् ।

173 (व्यष्टिसृष्टिः) ।

174 सङ्कल्पधर्मकम् ।

175 सङ्कल्पविकल्पाध्यासाः ।

176 बुद्धितत्त्वम् ।

177 आप्रलयावस्थायीनि ।

178 दिव्यादिव्येषु शब्दादिपञ्चविषयेषु अत्यासक्तिः, रागः ।

179 उपकारापकारशक्तिरहितत्वम् ।

180 (व्यष्टिसृष्टिः)

181 असत्यं अस्थिरं च ।

182 पारमार्थिकदुःखायुक्तः ।

183 तमःप्रधानाः मोहावहाः ।

184 परिच्छिन्नः ।

185 उपादानम् ।

186 कार्यभिन्नगुणत्रयम् = जगत्पर्यवसानभूमिः ।

187 कैवल्यम्= प्रतिबिम्बसम्बन्धनिमित्तदुःखविमोकः । विदेहकैवल्यम् ।

188 अस्मिता= अणिमाद्यष्टैश्वर्यविषयकः अभिमानः ।

189 मननम् ।

190 स्वरूपेणावस्थानम् = मुक्तिः ।

191 अणिमादिसिद्धयः ।

192 दुःखात्मकं चलं सत्त्वतमसो रुपष्टम्भकं प्रवृत्तिकारकं च –

| | | | |
|---|---|---|---|
| 193 | रसमलः | 56 | 7 |
| 194 | रागः | 69 | 13 |
| | **ल** | | |
| 195 | लिङ्गम् | 38 | 7 |
| 196 | लयः | 119 | 14 |
| 197 | लिङ्गशरीरम् | 64 | 1 |
| | **व** | | |
| 198 | वासना | 50 | 8 |
| 199 | विक्षेपः | 119 | 14 |
| 200 | विज्ञानम् | 133 | 16 |
| 201 | विधारणम् | 68 | 17 |
| 202 | विपर्ययः | 69 | 13 |
| 203 | विपर्ययकारणानि | 69 | 16 |
| 204 | विपर्ययभेदाः | 151 | 18 |
| 205 | विरागः | 75 | 12 |
| 206 | विशुद्धज्ञानम् | 158 | 4 |
| 207 | विशेषाः | 62 | 5 |
| 208 | वृत्तयः | 107 | 12 |
| 209 | वृत्तिः | 107 | 12 |
| 210 | वैकृतिकाः | 150 | 3 |
| 211 | वैचित्र्यम् | 113 | 6 |
| 212 | वैराग्यम् | 150 | 23 |
| 213 | व्यक्तम् | 133 | 16 |

---

193 पुरीषादिः ।

194 सुखानुशयी संसरणहेतुः ।

195 कारणानुमापकं लयाश्रयम् ।

196 निद्रावृत्तिः ।

197 (सूक्ष्मशरीरम्)

198 संस्कारविशेषः ।

199 प्रमाणादिवृत्तिः ।

200 विवेकेन ज्ञानम् ।

201 कुम्भकः ।

202 अविद्यास्मितारागद्वेषाभिनिवेशाः। अज्ञानम्। अनैश्वर्यम्। इच्छाविघातहेतुः। अष्टविधो मोहः। दशविधो महामोहः। अष्टादशविधः तामिस्रः अष्टादशविधः अन्धतामिस्रश्चेति द्वाषष्टिभेदः।

203 एकादशेन्द्रियवधाः, नव तुष्टिविधाः, अष्ट सिद्धिविपर्ययाः इत्यष्टाविंशत्यशक्तयः।

204 तम आदयः ।

205 पराङ्मुखता ।

206 संशयविपर्ययशून्यम् ।

207 शान्तघोरमूढत्वादिरूपाः, तद्वन्ति स्थूलभूतानि च ।

208 प्रमाणविपर्ययविकल्पनिद्रास्मृतयः क्लिष्टाः = सांसारिकाः दुःखदाः, अक्लिष्टाः = योग कालीनाः सुखदाश्च ।

209 चक्षुरादिभागगुणाभ्यां भिन्ना, इन्द्रियपरिणामरूपा ।

210 असांसिद्धिकाः पुरुषप्रयत्नसाध्याः भावाः ।

211 वैधर्म्यम् ।

212 प्रकृतिलयहेतुः ।

213 बुद्धिः अहङ्कारः पञ्चतन्मात्राणि एकादशेन्द्रियाणि पञ्चमहाभूतानि च ।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| 214 | व्यष्टिसृष्टिः | 71 | 14 | 224 | शान्ताः | 148 | 2 |
| 215 | व्यानः | 144 | 13 | 225 | शुद्धः | 10 | 13 |
| 216 | व्याप्तिः | 92 | 16 | 226 | शेषवदनुमानम् | 33 | 7 |
| 217 | व्यूहः | 4 | 4 | | ष | | |
| 218 | व्यूहचतुष्टयम् | 48 | 14 | 227 | षष्टितन्त्रम् | 161 | 3 |
| | श | | | | स | | |
| 219 | शक्तम् | 36 | 18 | 228 | सङ्कलितम् | 67 | 21 |
| 220 | शक्तिः | 5 | 4 | 229 | सङ्गः | 9 | 8 |
| 221 | शब्दः | 32 | 15 | 230 | सत्कार्यम् | 98 | 17 |
| 222 | शब्दः | 153 | 5 | 231 | सत्त्वम् | 138 | 12 |
| 223 | शरीरम् | 62 | 8 | 232 | सदसतख्यातिः | 97 | 18 |

---

214 ब्राह्म – प्राजापत्य – ऐन्द्र–पैत्र–गान्धर्व–याक्ष–राक्षस–पैशाच–भेदेन अष्टविधदैवसृष्टिः, पशु–मृग–पक्षि–सरीसृप–स्थावर–भेदेन पञ्चविधतैर्यग्योनसृष्टिः, एकविधा मनुष्यसृष्टिरिति चतुर्दशविधभौतसृष्टिः।

215 त्वग्वृत्तिः वायुः।

216 साध्यसाधनयोः साधनमात्रस्य वा नियतसाहचर्यम्।

217 उपकरणसङ्ग्रहः।

218 हेय–हाने–तद्धेतू च।

219 अनागतावस्थं कार्यम्।

220 कार्यस्यानागतावस्था।

221 आप्तोपदेशः। बुद्धेः विषयाकारपरिणामः वाक्यजन्यः।

222 अध्यात्मप्रतिपादकशब्दश्रवणम् = सुतारम्।

223 त्रयोविंशतितत्त्वोपादानकं तत्त्वमयं च स्थूल-सूक्ष्मात्मकम्।

224 सत्त्वप्रधानाः सुखावहाः।

225 पुण्यपापलेपरहितः।

226 अप्रसिद्धसाध्यकम्–व्यतिरेकमात्रव्याप्तिकम्।

227 षष्टिविधसाङ्ख्यसिद्धान्तप्रतिप्रतिपादकं शास्त्रम्।

228 अध्यस्तपदार्थजातम्।

229 विकारहेतुसंयोगविशेषः।

230 कारणव्यापारात्पूर्वमपि कार्यं सदेवेति।

231 लघु प्रकाशकं प्रीत्यात्मकं च।

232 सर्ववस्तूनां नित्यत्वेन स्वरूपेण बाधाभावात् संसर्गतस्तु बाधसत्त्वात् सर्वेषां गुणादीनां सदसत्ख्यातिरेवेति सांख्यसिद्धान्तः।

---

233 धर्मादि सप्त भावाः।

234 असंप्रज्ञातावस्था।

235 हृन्नाभिसर्वसन्धिवृत्तिः वायुः।

236 स्वसुसजातीयपदार्थसंमिश्रणम्।

237 आत्मतत्त्वसाक्षात्कारः।

238 सांनिध्यम्।

239 आरम्भकः संयोगविशेषः।

240 साक्षात् सम्बद्धः। साक्षात् द्रष्टा। दर्शितविषयः=यस्मै विषयः प्रदर्श्यते सः। यथा हि लोके अर्थिप्रत्यर्थिनौ विवादविषयं कस्मैचित् साक्षिणे दर्शयतः, एवं प्रकृतिरपि स्वचरितरूपं विषयं पुरुषाय दर्शयतीति पुरुषोऽयं साक्षी।

241 सनकादिशरीरम्।

242 सङ्ख्यां प्रकुर्वते चैव प्रकृतिं च प्रचक्षते। तत्त्वानि च चतुर्विंशत् तेन साङ्ख्याः प्रकीर्तिताः॥ सं+ख्या=सम्यक् विवेकेन आत्मस्वरूपकथनम्।

243 यत्र सामान्यतः प्रत्यक्षादिसाधारणधर्मेण व्याप्तिग्रहात् विजातीयोऽर्थः सिद्धयति तादृशं अनुमानम्।

244 न्यूनाधिभावेन असंहननम् अकार्यावस्थम्।

245 स्वाभाविकम्।

246 मन्त्रतपआदिसिद्धिजं शरीरम्।

247 स्वभावसिद्धाः प्राकृतिकाः भावाः।

248 समुदायः। संहतभावावस्था।

249 ऊहः, शब्दः, अध्ययनम्, त्रिविधदुःखविघाताः, सुहृत्प्राप्तिः सत्सङ्गः ज्ञानम् इत्यष्टविधा।

250 ज्ञानम्।

251 धनरक्षणे महद्दुःखमिति भावनया तस्माद्विरतिरूपं वैराग्यम् (बाह्यम्)।

---

252 तत्त्वज्ञैः मित्रैः सह मिलनम् = रम्यकम् (सिद्धिः)।

253 लिङ्गशरीरम्। सर्गाद्युत्पन्नं एकादशेन्द्रियाणि पञ्चतन्मात्राणि बुद्धिश्चेति सप्तदशकम्। अष्टादशतत्त्वैरेव सङ्गृहीतम् नियतम्, नित्यम्, आमोक्षा वस्थायि च शरीरम्।

254 प्रत्यक्षप्रमाप्रतिबन्धकः जातिविशेषः।

255 मातापितृजम्। आमरणावस्थायि।

256 प्रत्येकवर्णेभ्यः अतिरिक्तं अखण्डपदम्। अवयावातिरिक्तोऽवयवीव अर्थस्फुटीकरणात्। स चायं साङ्ख्यासम्मतः।

257 स्वाश्रमविहितकर्मानुष्ठानम्।

258 स्वाभाविकयथार्थज्ञानजनन शक्तिमत्।

259 यावद्वस्तुभावी धर्मः।

260 यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् अभिलाषोपनीतं च यत् तत्पदम्।

261 वृत्तिनिवृत्तौ निवृत्तप्रतिबिम्बरूपभोगः स्वस्वरूपेणावस्थितः पुरुषः।

262 यस्मिन् सति कारणविलम्बः यस्योत्पत्तौ न भवति तत्।

263 स्वं स्वं लक्षणमेव स्वलक्षणम् असाधारणी वृत्तिः। सा येषां तेषां भावः।

264 त्रिविधदुःखात्यन्तनिवृत्तिः।

265 त्रिविधं दुखमेव। तच्च अनागतम्। अतीतस्य नष्टत्वात्वर्तमानस्य च भोगेनैवक्षयात्। तादृशानागतदुःखहानार्थमेवेदं शास्त्रं प्रवृत्तमिति॥

## ८. उद्धृतग्रन्थ-ग्रन्थकार-मत-मतीय नाम्नां अकाराद्यनुक्रमणी



---

## ९. सङ्क्षिप्ताक्षरसंज्ञाविवरणम्



| संक्षिप्ताक्षराणि | विवरणम् |
|---|---|
| **अ** | |
| अ· वृ· | अनिरुद्धवृत्तिः |
| **ई** | |
| ई· उ· | ईशावास्योपनिषत् |
| **क** | |
| क· उ· | कठोपनिषत् |
| कु· सं· | कुमारसंभवम् |
| कू· पु· | कूर्मपुराणम् |
| के· उ· | केनोपनिषत् |
| कै· उ· | कैवल्योपनिषत् |
| **ग** | |
| ग· पु· | गरुडपुराणम् |
| **छ** | |
| छां· उ· | छान्दोग्योपनिषत् |
| **त** | |
| तै· आ· | तैत्तिरीयारण्यकम् |
| तै· उ· | तैत्तिरीयोपनिषत् |
| **ध** | |
| ध· की· | धर्मकीर्तेर्वाक्यम् |
| धा· पा· | धातुपाठः |

न

| | |
|---|---|
| ना· लिं· | नामलिङ्गानुशासनम् |
| ना· पु· | नारदीयपुराणम् |
| नृ, ता· | नृसिंहतापन्युपनिषत् |
| न्या· सू· | न्यायसूत्रम् |

प

| | |
|---|---|
| पा· म· भा· | पातञ्जलमहाभाष्यम् |
| पा· यो· | पातञ्जलयोगसूत्रम् |
| पा· यो· भा· | पातञ्जलयोगसूत्रभाष्यम् |
| पा· सू· | पाणिनीयसूत्रम् |
| पं· शि· | पञ्चशिखाचार्यवाक्यम् |

ब

| | |
|---|---|
| बृ· आ· | बृहदारण्यकोपनिषत् |
| ब्र· सू· | ब्रह्मसूत्राणि |
| ब्रं· विं· | ब्रह्मबिन्दूपनिषत् |

भ

| | |
|---|---|
| भ· गी· | भगवद्गीता |

म

| | |
|---|---|
| म· पु· | मत्स्यपुराणम |
| म· भा· अश्व· | महाभारते अश्वमेधपर्व |
| म· भा· शां· | महाभारते शान्तिपर्व |
| म· स्मृ· | मनुस्मृतिः |
| मा· पु· | मार्कण्डेयपुराणम् |
| मुं· उ· | मुण्डकोपनिषत् |

य

| | |
|---|---|
| या· स्मृ· | याज्ञवल्क्यस्मृतिः |
| यो· वा· | योगवासिष्ठम् |

ल

| | |
|---|---|
| लो· उ· | लोकोक्तिः |

व

| | |
|---|---|
| वि· पु· | विष्णुपुराणम् |

श

| | |
|---|---|
| शि· व· | शिशुपालवधं काव्यम् |
| श्रीधरः | श्रीधरः (साङ्ख्यदीपिकाकर्ता) |
| श्री· भा· | श्रीमद्भागवतम् |
| श्वे· अ· | श्वेताश्वतरोपनिषत् |

स

| | |
|---|---|
| सां· का· | साङ्ख्यकारिका |
| सां· प्र· | साङ्ख्यप्रवचनभाष्यम् |
| सां. सू· | साङ्ख्यसूत्राणि |
| से· खं· | सेतुखण्डः |
| सौ· पु· | सौरपुराणम् |



# अशुद्धसंशोधनी



| पठनीयः पाठः | पु. | पं. | पठनीयः पाठः | पु. | पं. |
|---|---|---|---|---|---|
| प्रियाप्रिययो | 7 | 6 | स्यैकत्वात् | 45 | 17 |
| बलवद्द्वेष | 7 | 7 | मुक्तयर्थं | 50 | 12 |
| दुःखासंभिन्नत्वं | 7 | 7 | नानाविध | 55 | 14 |
| शक्तयोरिव | 8 | 15 | मन्तःकरणस्य | 56 | 16 |
| संबन्धस्य | 10 | 17 | क्लिष्टाक्लिष्टाः | 57 | 10 |
| ज्वलदगृहा | 10 | 19 | अयोनिज | 63 | 10 |
| तथा | 10 | 20 | भोक्तुरपि | 65 | 15 |
| विच्छिन्नो | 10 | 20 | तद्वदत्रापी | 65 | 15 |
| संवृतिश्च | 11 | 2 | मित्यप्यर्थः | 66 | 23 |
| मित्तकश्च | 12 | 18 | विपर्ययाः | 69 | 18 |
| स्तुन्नस्थ | 13 | 2 | याख्याभिनिवे | 70 | 12 |
| इत्यागामि | 19 | 1 | तैर्यग्योनः | 71 | 13 |
| आशङ्कां | 20 | 8 | सत्त्वादि | 72 | 1 |
| युक्तया | 20 | 13 | विविधसृष्ट्यः | 72 | 1 |
| तद्ज्ञानं | 20 | 19 | सृष्टयेव | 72 | 5 |
| हिरण्य | 22 | 18 | रेकतरस्य | 75 | 1 |
| मताया अवि | 24 | 12 | दर्शितवती | 75 | 20 |
| वानादित्वम् | 24 | 16 | चर्योपसर्पणानि | 84 | 3 |
| आप्तिरत्र | 32 | 16 | पासकादीनां | 84 | 13 |
| शक्तितश्चेति | 40 | 16 | उपास्यसिद्धिवदुपास्य-सिद्धिवत् | 86 | 12 |
| मानसुक्त | 41 | 8 | शक्तयुद्भव | 93 | 1 |
| सुषुप्त्याद्याव | 44 | 7 | दिव्याप्यता | 93 | 6 |
| श्रुत्युक्त | 44 | 14 | अवयवावयवि | 101 | 4 |
| वापियन्ति | 44 | 16 | तूच्छित्तावयं दृष्टान्तः | 102 | 19 |
| उपसंह | 45 | 9 | | | |

| | | | | | |
|---|---|---|---|---|---|
| परमप्रकर्ष | 103 | 14 | स्वभावस्य | 117 | 16 |
| व्यक्त्यनु | 104 | 16 | प्रमाऽऽदि | 119 | 14 |
| स्वातन्त्र्यात् | 106 | 19 | पूर्वं च | 124 | 18 |
| तैजसत्व | 107 | 3 | नोपदेशात् | 125 | 9 |
| भेदेऽप्यन्यो | 108 | 1 | तत्तद्दुःख | 126 | 1 |
| संस्कार | 110 | 17 | स्वस्वामिभावो | 127 | 20 |
| भोक्तुरन | 111 | 2 | परोक्षमाप्ता | 135 | 19 |
| राजर्षीणा | 111 | 20 | नैमित्तिका | 149 | 18 |
| सर्जना | 111 | 12 | रूपविनिवृत्ताम् | 158 | 11 |



# मैसूरु प्राच्यविद्यासंशोधनालये परिष्कृत्य प्रकाशितानां संस्कृतग्रन्थानां सूचनी

प्राच्यविद्यासंशोधनालयः
मैसूरु विश्वविद्यानिलयः
मैसूरु

1981

# मैसूरु विश्वविद्यानिलय-प्राच्यविद्यासंशोधनालये परिष्कृत्य प्रकाशिताः विक्रय्यसंस्कृतग्रन्थाः

| आलाङ्कः | ग्रन्थनाम | रू. | पै. |
|---|---|---|---|
| 1* | आपस्तम्बगृह्यसूत्रम्–सुदर्शनाचार्यप्रणीततात्पर्यदर्शनाख्यभाष्यसहितम् | 1 | 75 |
| 2* | आपस्तम्बयज्ञपरिभाषासूत्रम्–हरदत्त-कपर्दिस्वामिभाष्याभ्यां सहितम् | 1 | 00 |
| 3* | माधवीया धातुवृत्तिः–(अदादि-दिवादि-जुहोत्यादयः) (द्वितीयसम्पुटे प्रथमभागः) | 2 | 00 |
| 4* | तैत्तिरीयसंहिता–सस्वरचिह्ना, सपदपाठा, भट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च (प्रथमं सम्पुटम्) | 2 | 50 |
| 5* | तैत्तिरीयसंहिता–सस्वरचिह्ना सपदपाठा भट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, (द्वितीयं सम्पुटम्) | 2 | 50 |
| 6* | दक्षिणामूर्तिस्तोत्रम्, सुरेश्वराचार्यटीकासहितम् | 1 | 25 |
| 7* | तैत्तिरीयसंहिता–(तृतीयं सम्पुटम्) | 3 | 00 |
| 8* | श्रीमद्भगवद्गीता, श्रीशङ्कराचार्यविरचितभाष्यसहिता | 2 | 75 |
| 9* | तैत्तिरीयसंहिता–(चतुर्थं सम्पुटम्) | 3 | 00 |
| 10* | मण्डलब्राह्मणोपनिषत्–शङ्कराचार्यरचित राजयोगभाष्यसहिता | 1 | 00 |
| 11* | सौन्दर्यलहरी–शङ्कराचार्यरचिता–लक्ष्मीधराचार्यकृतव्याख्यासहिता–भास्कराचार्यरचितभाष्यसहितभावनोपनिषदा, कालिदासकृतया पञ्चस्तव्या च सहिता | 1 | 00 |

* एतच्चिन्हाङ्किताः ग्रन्थाः समाप्तमुद्रणाः संप्रति विक्रयायात्र नोपलभ्यन्ते ।

| | | | |
|---|---|---|---|
| 12* | तैत्तिरीयसंहिता-(पञ्चमं सम्पुटम्) | 3 | 00 |
| 13* | तैत्तिरीयसंहिता-(षष्ठं सम्पुटम्) | 4 | 00 |
| 14* | तैत्तिरीयसंहिता-(सप्तमं सम्पुटम्) | 3 | 00 |
| 15* | आपस्तम्बधर्मसूत्रमू-हरदत्ताचार्यप्रणीतया उज्वलाख्य-वृत्त्या सहितम् | 1 | 75 |
| 16* | तैत्तिरीयसंहिता-(अष्टमं सम्पुटम्) | 3 | 00 |
| 17* | तैत्तिरीयसंहिता-(नवमं सम्पुटम्) | 2 | 25 |
| 18* | तैत्तिरीयसंहिता-(दशमं सम्पुटम्) | 1 | 25 |
| 19* | श्रीशङ्कराचार्यप्रवन्धावली=(विष्णुसहस्रनामभाष्यम्, सनत्सुजातीयभाष्यं च) (प्रथमं सम्पुटम्) | 1 | 25 |
| 20* | श्रीशङ्कराचार्यप्रबन्धावली-अपरोक्षानुभूतिः, शतश्लोकी, हरिस्तुतिः, दशश्लोकी च-व्याख्यासहिताः (द्वितीयं सम्पुटम्) | 1 | 25 |
| 21* | श्रीशङ्कराचार्यप्रबन्धावली-उपदेशसाहस्री गद्यपद्योभया त्मिका-रामतीर्थव्याख्यायुता (तृतीयं सम्पुटम्) | 2 | 00 |
| 22* | श्रीशङ्कराचार्यप्रबन्धावली-आत्मबोधः, विवेकचूडामणिः, वाक्यवृत्तिः, स्वात्मनिरूपणम्, योगतारावली, सर्वसिद्धान्त सारसङ्ग्रहश्च-(चतुर्थं सम्पुटम्) | 1 | 00 |
| 23* | माधवीया धातुवृत्तिः-भ्वादौ प्रथमभागः (प्रथमभागे प्रथमं सम्पुटम) | 2 | 00 |
| 24* | माधवीया धातुवृत्तिः-भ्वादौ द्वितीयभागः (प्रथमभागे द्वितीयं सम्पुटम) | | |
| 25* | गोत्रप्रवरनिबन्धकदम्बम् | 2 | 00 |
| 26* | तैत्तिरीयारण्यकम्-भट्टभास्करीयभाष्यसहितम् (प्रथमं सम्पुटम्) | 1 | 75 |
| 27* | तैत्तिरीयारण्यकम्-भट्टभास्करीयभाष्यसहितम् (द्वितीयं सम्पुटम) | 1 | 00 |
| 28* | एकाग्निकाण्डः-हरदत्तीयभाष्यसहितः | 1 | 25 |

| | | | |
|---|---|---|---|
| 29* | तैत्तिरीयारण्यकम्-भट्टभास्करीयभाष्यसहितम् (तृतीयं सम्पुटम्) | 1 | 00 |
| 30* | ब्रह्ममीमांसा, श्रीकण्ठभाष्यसहिता | 2 | 00 |
| 31* | माधवीया धातुवृत्तिः-स्वादिमारभ्य समग्रा (द्वितीयभागे द्वितीयं सम्पुटम्) | 2 | 00 |
| 32* | बोधायनगृह्यसूत्रम्-सपरिशिष्टम् | 2 | 25 |
| 33* | तैत्तिरीयप्रातिशाख्यम्-( वैदिकाभरण-त्रिभाष्यरत्नाख्य व्याख्याद्वययुतम्) | 4 | 00 |
| 34* | बोधायनधर्मसूत्रम्, गोविन्दस्वामिविवरणसमेतम् | 3 | 00 |
| 35* | भाट्टदीपिका-खण्डदेवकृता-(प्रथमं सम्पुटम्) | 3 | 00 |
| 36* | तैत्तिरीयब्राह्मणम्-भट्टभास्करभाष्यसहितम् (प्रथमाष्टकम्) | 3 | 50 |
| 37* | कौटलीयं अर्थशास्त्रम् (प्रथमं मुद्रणम् ) | 3 | 00 |
| 38* | तैत्तिरीयब्राह्मणम्-भट्टभास्करभाष्यसहितम् (तृतीयाष्टके प्रथमभागः) | 3 | 50 |
| 39* | श्रीमद्ब्रह्मसूत्रभाष्यम्-आनन्दतीर्थीयम्-तत्त्वप्रकाशिका-चन्द्रिका-प्रकाशसहितम्-(प्रथमं सम्पुटम्) | 3 | 00 |
| 40* | भाट्टदीपिका-खण्डदेवरचिता-(द्वितीयं सम्पुटम् ) | 3 | 00 |
| 41* | खादिरगृह्यसूत्रम्-रुद्रस्कन्दीयवृत्तिसहितम् | 1 | 00 |
| 42* | तैत्तिरीयब्राह्मणम्-भट्टभास्करभाष्यसहितम् (तृतीयाष्टके द्वितीयभागः) | 2 | 25 |
| 43* | स्मृतिचन्द्रिका-याज्ञिकदेवणभट्टकृता (संस्कारकाण्डः) | 1 | 50 |
| 44* | ,, (आह्निककाण्डः) | 2 | 50 |
| 45* | ,, (व्यवहारकाण्डे प्रथमं सम्पुटम्) | 2 | 00 |
| 46* | भाट्टदीपिका-खण्डदेवविरचिता (तृतीयं सम्पुटम्) | 2 | 50 |
| 47* | श्रीमद्ब्रह्मसूत्रभाष्यम्-आनन्दतीर्थीयम्-तत्त्वप्रकाशिका-चन्द्रिका-प्रकाशसहितम्-(द्वितीयं सम्पुटम्) | 3 | 00 |
| 48* | स्मृतिचन्द्रिका-याज्ञिकदेवणभट्टकृता (व्यवहारकाण्डे द्वितीयं सम्पुटम् ) | 3 | 00 |

| | | | |
|---|---|---|---|
| 49* | भाट्टदीपिका–खण्डदेवविरचिता–(चतुर्थं सम्पुटम्) | 3 | 00 |
| 50* | गौतमधर्मसूत्रम्–मस्करिभाष्यसहितम् | 3 | 75 |
| 51* | अलङ्कारमणिहारः (प्रथमं सम्पुटम्) | 3 | 00 |
| 52* | स्मृतिचन्द्रिका–याज्ञिकदेवणभट्टकृता–(श्राद्धकाण्डः) | 3 | 25 |
| 53* | श्रीमदब्रह्मसूत्रभाष्यम्–आनन्दतीर्थीयम–तत्त्वप्रकाशिका–चन्द्रिका–प्रकाशसहितम्–(तृतीयं सम्पुटम्) | 4 | 00 |
| 54* | कौटलीयं अर्थशास्त्रम (द्वितीयं मुद्रणम्) | 3 | 00 |
| 55* | बोधायनगृह्यसूत्रम्–सपरिशिष्टम् (द्वितीयं मुद्रणम्) | 2 | 25 |
| 56* | स्मृतिचन्द्रिका–याज्ञिकदेवणभट्टकृता (आशौचकाण्डः) | 1 | 50 |
| 57* | तैत्तिरीयब्राह्मणम्–भट्टभास्करीय–सायणीय भाष्याभ्यां युतम् (द्वितीयाष्टकम् ) | 3 | 50 |
| 58* | अलङ्कारमणिहारः–(द्वितीयं सम्पुटम्) | 3 | 50 |
| 59* | श्रीमदब्रह्मसूत्रभाष्यम्–आनन्दतीर्थीयम्–तत्त्वप्रकाशिका–चन्द्रिका–प्रकाशयुतम्–(चतुर्थं सम्पुटम् ) | 3 | 50 |
| 60* | काव्यप्रकाशः–मम्मटभट्टकृतः–माणिक्यचन्द्र कृतसङ्केतटीकायुतः | 3 | 50 |
| 61* | आयुर्वेदसूत्रम–योगानन्दनाथभाष्यसहितम् | 2 | 00 |
| 62* | अलङ्कारमणिहारः–(तृतीयं सम्पुटम) | 2 | 50 |
| 63* | विद्यामाधवीयम्–विष्णुशर्मकृतमुहूर्तदीपिकायुतम् (प्रथमं सम्पुटम ) | 2 | 00 |
| 64* | कौटलीयं अर्थशास्त्रम् (तृतीयं मुद्रणम् ) | 3 | 00 |
| 65* | अर्थशास्त्रपदसूची (प्रथमं सम्पुटम्) | 2 | 50 |
| 66* | ,, (द्वितीयं सम्पुटम) | 2 | 50 |
| 67* | विद्यामाधवीयम–विष्णुशर्मकृतमुहूर्तदीपिकाटीकायुतम् (द्वितीयं सम्पुटम्) | 2 | 00 |
| 68* | अर्थशास्त्रपदसूची (तृतीयं सम्पुटम) | 2 | 00 |
| 69 | अभिलषितार्थचिन्तामणिः (प्रथमं सम्पुटम्) | 2 | 00 |

| | | | |
|---|---|---|---|
| 70* | विद्यामाधवीयम्-विष्णुशर्मकृतमुहूर्तदीपिका टीकायुतम् (तृतीयं सम्पुटम्) | 1 | 50 |
| 71 | सरस्वतीविलासः (व्यवहारकाण्डः) | 2 | 50 |
| 72 | अलङ्कारमणिहारः (चतुर्थं सम्पुटम) | 2 | 25 |
| 73* | तर्कताण्डवम-व्यासयतिकृतम-न्यायदीपाख्यव्याख्यायुतम (प्रथमं सम्पुटम) | 3 | 00 |
| 74 | आपस्तम्बशुल्बसूत्रम्-कपर्दीय-करविन्दीय-सुन्दरराजीयव्याख्याभिः सहितम | 2 | 75 |
| 75* | अद्वैतसिद्धिः-मधुसूदनसरस्वतीकृता-गुरु चन्द्रिकाटीकायुता (प्रथमं सम्पुटम) | 3 | 75 |
| 76* | तत्त्वमुक्ताकलापः-वेदान्ताचार्यकृतः-स्वोपज्ञसर्वार्थसिद्धि-तद्व्याख्याऽऽनन्ददायिनीभावप्रकाशाभ्यां युतः (प्रथमं सम्पुटम्) | 4 | 00 |
| 77* | तर्कताण्डवम्-व्यासयतिकृतम्-न्यायदीपाख्य व्याख्यायुतम् (द्वितीयं संपुटम्) | 2 | 00 |
| 78* | अद्वैतसिद्धिः-मधुसूदनसरस्वतीकृता-गुरु चन्द्रिकाटीकायुता (द्वितीयं सम्पुटम) | 3 | 25 |
| 79* | तर्कताण्डवम्-व्यासयतिकृतम्-न्यायदीपाख्य व्याख्यायुतम (तृतीयं सम्पुटम्) | 2 | 00 |
| 80* | अद्वैतसिद्धिः-मधुसूदनसरस्वतीकृता-गुरु चन्द्रिकाटीकायुता-(तृतीयं सम्पुटम) | 2 | 25 |
| 81* | तत्त्वमुक्ताकलापः-वेदान्ताचार्यकृतः-स्वोपज्ञसर्वार्थ सिद्धि-तद्व्याख्याऽऽनन्ददायिनीभावप्रकाशाभ्यां सहितः (द्वितीयं सम्पुटम्) | 3 | 00 |
| 82* | तर्कताण्डवम्-व्यासयतिकृतम् न्यायदीपाख्यव्याख्यायुतम् (चतुर्थं सम्पुटम) | 2 | 25 |
| 83* | वाक्यार्थरत्नम्-सुवर्णमुद्रिकाव्याख्यासहितम् | 1 | 00 |
| 84 | तत्त्वार्थसूत्रम्-श्रीमदुमास्वामिरचितम्-सुखबोधाख्यवृत्तियुतम् | 2 | 25 |

| | | | |
|---|---|---|---|
| 85* | सौन्दर्यलहरी–शङ्कराचार्यरचिता–लक्ष्मीधराचार्यरचितव्याख्यायुता–भास्कराचार्यरचितभाष्यसहितभावनोपनिषदा, कालिदासकृतपञ्चस्तव्या च सहिता (द्वितीयं मुद्रणम) | 2 | 50 |
| 86* | यादवाभ्युदयम्–वेदान्तदेशिकविरचितम्–अप्पयदीक्षितविरचितव्याख्यायुतम्–(प्रथमं सम्पुटम्) | 3 | 25 |
| 87 | आपस्तम्बश्रौतसूत्रम्–रामाग्निचिद्वृत्तिसहित-धूर्तस्वामिभाष्यसहितम (प्रथमं सम्पुटम्) | 4 | 00 |
| 88 | प्रमेयरत्नालङ्कारः–अभिनवचारुकीर्तिपण्डिताचार्यविरचितः | 2 | 75 |
| 89 | यादवाभ्युदयम्–वेदान्तदेशिकविरचितम्–अप्पयदीक्षितविरचितव्याख्यायुतम्–(द्वितीयं सम्पुटम्) | 5 | 00 |
| 90 | शैवपरिभाषा–शिवाग्रयोगिरचिता | 3 | 00 |
| 91* | सौन्दर्यलहरी (तृतीयं मुद्रणम्) | 3 | 00 |
| 92 | प्राकृतमणिदीपः–अप्पयदीक्षितप्रणीतः–प्रथमं सम्पुटम् | 6 | 25 |
| 93 | आपस्तम्बश्रौतसूत्रम-वृत्तिभाष्यभूषितम् (द्वितीयं सम्पुटम) | 8 | 50 |
| 94 | तत्त्वमुक्ताकलापः–सव्याख्यः (तृतीयं सम्पुटम) | 6 | 75 |
| 95 | क्रियासारः–नीलकण्ठशिवाचार्यरचितः (प्रथमं सम्पुटम) | 5 | 50 |
| 96 | वेदान्ततत्त्वविवेकः–श्रीनृसिंहाश्रमिरचितः–सव्याख्यः | 15 | 00 |
| 97 | तत्त्वमुक्ताकलापः–सव्याख्यः (चतुर्थं सम्पुटम) | 6 | 00 |
| 98 | नीतिसूत्राणि–बृहस्पति–चाणक्य–सोमदेवैः विरचितानि, अर्थशास्त्रसङ्ग्रहश्च | 2 | 75 |
| 99 | क्रियासारः–नीलकण्ठशिवाचार्यरचितः (द्वितीयं सम्पुटम्) | 6 | 00 |
| 100 | क्रियासारः–नीलकण्ठशिवाचार्यरचितः (तृतीयं सम्पुटम्) | 5 | 00 |
| 101 | सेवन्तिकापरिणयं नाटकम्–चोक्कनाथविरचितम् | 2 | 25 |
| 102 | वाल्मीकिरामायणम्–माधवयोगिरचितया अमृतकतकव्याख्यया युतम्–बालकाण्डः–(प्रथमं सम्पुटम) | 5 | 50 |

| | | | |
|---|---|---|---|
| 103 | कौटलीयं अर्थशास्त्रम् (परिष्कृताभिनवमुद्रणम) | 14 | 00 |
| 104 | आपस्तम्बश्रौतसूत्रम्–वृत्तिभाष्यसहितम्– (तृतीयं सम्पुटम्) | 10 | 00 |
| 105 | विष्णुसहस्रनामस्तोत्रम्–नामावली–शङ्करभाष्यार्थसङ्ग्रह–पद्यप्रसूनाञ्जलिभिःसहितम् | 4 | 00 |
| 106 | विष्णुसहस्रनामस्तोत्रम्–तारकब्रह्मानन्दसरस्वतीयविवृतिसमेत–शाङ्करभाष्यसहितम् | 13 | 25 |
| 107 | वाल्मीकिरामायणम्–अमृतकतकव्याख्यायुतम्–अयोध्याकाण्डे प्रथमभागः ( द्वितीयं सम्पुटम् ) | 5 | 50 |
| 108 | शिवतत्त्वरत्नाकरः–केलदिबसवभूपालरचितः ( प्रथमं सम्पुटम् ) | 9 | 75 |
| 109 | सिद्धान्तसिद्धाञ्जनम्–कृष्णानन्दसरस्वतीविरचितम् भास्करदीक्षितकृतरत्नतूलिकाव्याख्यायुतम् ( प्रथमं सम्पुटम् ) | | |
| 110 | वाल्मीकिरामायणम्–अमृतकतकव्याख्यायुतम्–अरण्यकाण्डः ( चतुर्थं सम्पुटम् ) | 9 | 70 |
| 111 | वाल्मीकिरामायणम्–अमृतकतकव्याख्यायुतम्–अयोध्याकाण्डे द्वितीयभागः ( तृतीयं सम्पुटम् ) | | |
| 112 | शिवतत्त्वरत्नाकरः–केलदिबसवभूपालविरचितः ( द्वितीयं सम्पुटम् ) | 30 | 00 |
| 113 | अद्वयतारकोपनिषत्–अप्पयशिवाचार्यकृतभाष्ययुता | 00 | 35 |
| 114 | सौन्दर्यलहरी–शङ्कराचार्यविरचिता–लक्ष्मीधरविरचितया व्याख्यया, कर्णाटकभाषानुवादेन, भास्करभाष्यसहितभावनोपनिषदा, पञ्चस्तव्या च सहिता (परिकृष्तं चतुर्थं मुद्रणम् ) | 7 | 00 |
| 115 | मण्डलब्राह्मणोपनिषत्–शङ्कराचार्यविरचितराजयोग भाष्येण, अप्पयशिवाचार्यभाष्येण, सव्याख्ययोगतारावल्या च सहिता—( परिष्कृतं द्वितीयं मुद्रणम् ) | 3 | 75 |
| 116 | न्यायमञ्जरी–जयन्तभट्टविरचिता–टिप्पणीसहिता (प्रथमं सम्पुटम्) | 42 | 00 |

